# SANA . KUMARA-SAMHITA

OF THE

# PANCARĀTRĀGAMA

EDITED BY

PANDIT V. KRISHNAMACHARYA

THE ADYAR LIBRARY SERIES

VOLUME NINETY-FIVE

श्रीपाञ्चरात्रागमान्तर्गता

# सनत्कुमारसंहिता

# SANATKUMARA-SAMHITA

OF THE

# PĀÑCARĀTRĀGAMA

EDITED BY

PANDIT V. KRISHNAMACHARYA

FOREWORD BY

DR. V. RAGHAVAN



THE ADYAR LIBRARY AND RESEARCH CENTRE

## FOREWORD

Of the three classes of Āgama-s, Vaiṣṇava, Śaiva and Śākta, the former two go together as their subject matter and its division and treatment are on parallel lines. The first editions to appear of texts of these two classes were all, with rare exceptions, in the local South Indian scripts, Telugu and Grantha.[1] More texts of the Vaiṣṇava class have been brought out in print than those of the Śaiva.

The first Vaiṣṇava Āgama text to be published in Devanāgarī is the *Sāttvata-Saṃhitā* (Conjeevaram, 1902). But the attention of the wider world of Sanskrit scholars and students of Indian religion was drawn to this subject by the pioneering efforts of the Adyar Library which gave in 1916 the two-volume edition of the *Ahirbudhnya-Saṃhitā* by Pandit M. D. Ramanujacharya under the supervision of Dr. F. O. Schrader, together with the latter's Introductory study of this text as well as of the whole literature of Pāñcarātra. A revised second edition of the *Ahirbudhnya-Saṃhitā* was brought out by the Adyar Library in 1960.

Interest in the publication of the Pāñcarātra texts in Devanāgarī continued in the Vaiṣṇava centres,

[1] See F. O. Schrader, *Introduction to the Pāñcarātra and the Ahirbudhnya Saṃhitā*, Adyar Library, Madras, 1916, p.13.

Kanchi and Melkote (Mysore); and the authorities of the reputed Sanskrit Series like the Anandashrama Sanskrit Series, Trivandrum Sanskrit Series, and Gaekwad's Oriental Series took interest in these texts; a few came out from North Indian centres, Banaras and Calcutta, and a few others owed their publication to the initiative of individual scholars. The following Saṃhitā-s thus came out in Devanāgarī script:

| | |
|---|---|
| *Bṛhadbrahma-* (of *Nāradapāñcarātra*) | Anandashrama Sanskrit Series 68, Poona, 1912. |
| *Īśvara-* | Kanchi, 1923. |
| *Viṣṇu-* | Trivandrum Sanskrit Series 85, Trivandrum, 1925. |
| *Jayākhya-* | Gaekwad's Oriental Series 54, Baroda, 1931. |
| *Pauṣkara-* | Melkote-Bangalore, 1934. |
| *Śeṣa-* | Mysore, 1935. |
| *Śāṇḍilya-* | Sarasvati Bhavan, Banaras, 1935-36. |
| *Hayaśīrṣa-* | Varendra Research Society, 1952-57. |
| *Pārameśvara-* | Srirangam, 1953. |
| *Aniruddha-* | Mysore, 1956. |
| *Lakṣmītantra* | Adyar, 1959. |

Realizing that Pāñcarātra-research was still a desideratum, I set one of my younger colleagues, Mrs.

Seetha Padmanabhan in the beginning of the sixties on further studies in this field; one of the items of work done by her, a Devanāgarī edition of the *Śrīpraśna-Saṃhitā*, is shortly to be published by the Central Sanskrit Institute, Tirupati, where at my instance a long-term project called *Āgamakośa*, a dictionary cum thesaurus of the three classes of Āgama is being compiled, and a few Pāñcarātra texts have also been taken up for editing.

Comparable to the *Āgamakośa* is another large Pāñcarātra project in which I have been interesting myself for some years, the work undertaken by Dr. Daniel H. Smith of the University of Syracuse, Syracuse, U.S.A. Dr. Smith collected almost all available Pāñcarātra texts in manuscript and print and prepared a detailed descriptive bibliography of the Pāñcarātra texts which is under print in the Gaekwad's Oriental Series and will appear with my Introduction. Dr. Smith brought out also a collection of extracts on temple-architecture [1] from the different Āgama-s, and a similar but larger collection on the iconography of Vaiṣṇava images, culled from various Āgama-s.[2] A revised critical edition, based on twelve manuscripts, of the *Āgamaprāmāṇya* of Yāmuna by a student of mine, Dr. M. Narasimhachari, is also under print in the Gaekwad's Oriental Series.

The Adyar Library resumed its activity in the Pāñcarātra field with a critical work on the school,

next in importance to the *Āgamaprāmāṇya* of Yāmuna, namely the *Pāñcarātrarakṣā* of Vedāntadeśika (1942; second edition, 1960) and the *Lakṣmītantra* (1959), published originally in Telugu script in 1888. The third canonical text of the Pāñcarātra to be edited by the Library is the one now offered—perhaps the most important in this class—the *Sanatkumāra-Saṃhitā*.

The present edition of the *Sanatkumāra-Saṃhitā* is based on the following manuscript materials:

A. Adyar Library MS. No. 73678. Palm-leaf. Grantha script. 131 fo. 7 lines in a page. 74 letters in a line. Condition: Good. Contains Books I (Brahmarātra; without beginning), II (Śivarātra), III (Indrarātra; incomplete) and IV (Ṛṣirātra).

B. Transcript obtained from Dr. V. Raghavan (of an original MS. from Srirangam). Paper. Devanāgarī script. 300 fo. 18 lines in a page. 16 letters in a line. Condition: Good. Contains Books I (without beginning), II, III (incomplete) and IV.

C. Government Oriental Manuscripts Library, Madras, MS. No. R 3456. Paper. Telugu script. 372 fo. 20 lines in a page. 16 letters in a line. Condition: Good. Contains Books I (without beginning), II, III (incomplete) and IV.

D. Government Oriental Manuscripts Library, Madras, MS. No. R 3562. Palm-leaf. Grantha script. 140 fo. 9 lines in a page. 60 letters in a line. Condition: very much injured. Contains Books I (in duplicate; incomplete), II, III (incomplete) and IV.

E. Oriental Research Institute, University of Mysore, MS. No. SP 5032, Palm-leaf. Grantha and Telugu script. 162 fo. 7 lines in a page. 60 letters in a line. Condition: Slightly injured. Contains Book I (without beginning), II, III (incomplete) and IV.

F. A MS. got through the help of Sri K. S. Varada-charya of the Oriental Research Institute, University of Mysore. Palm-leaf. Grantha script. 42 fo. 6 lines in a page. 70 letters in a line.

No manuscript containing Book V (Bṛhaspatirātra) is available anywhere.

The text has been edited by Pt. V. Krishnamacharya. The detailed analytical table of contents to the text has been supplied by me. My detailed Introduction to this *Saṃhitā* with analyses, appendices and indexes will be given in a separate volume.

The thanks of the Adyar Library are due to the authorities of the Government Oriental Manuscripts Library, Madras, and the Oriental Research Institute,

University of Mysore for lending their manuscripts; and to the Ministry of Education, Government of India, and the Central Sanskrit Board for their financial aid for this publication.

V. RAGHAVAN

# विषयानुक्रमणिका

## ब्रह्मरात्रम्

(प्रथम-द्वितीय-तृतीयाध्याया नष्टाः)

चतुर्थाध्यायः—समयाध्यायः

(ग्रन्थपातः)—व्यवहारः—लेख्यम्; शपथम्; पञ्चविधः साक्षी; पञ्चविधं शपथम् (पृ. १)—शपथे निषिद्धा विषयाः—आधि-द्विविधः (पृ. २)—प्रतिभूः त्रिविधः—पुत्रेषु रिक्थविभजनम (पृ. ३)—यौनसोदर्यं दीक्षासौदर्यं च—व्यवहारे निषेधाः—व्यवहारश्रोतृषु निषिद्धा वर्णीयाश्च (पृ. ४)।

जपविधिः—त्रिविधो जपः—जपगणनोपकरणानि (पृ. ५. श्लो. ३४-७)।

संस्काराः—गर्भाधानम् (पृ. ५-६)—त्रिरूपो विष्णुः (श्लो. ४६-७)—पुंसवनम्; सीमन्तम् (पृ. ६-७)—नामकरणम्; अन्नप्राशनम् (पृ. ७)—चौलम् (पृ. ८)—उपनयनम्, तस्य त्रैविध्यम् (पृ. ८-९)—यज्ञोपवीतम, तद्द्रव्यभेदाश्च; दण्डभेदाः (पृ. ९) वेदाध्ययनम् (श्लो. ७७)—विवाहः; मृतसंस्कारः (पृ. ९-१०)—आशौचम्; श्राद्धम (पृ. १०)।

पञ्चमोऽध्यायः—वर्णाचारविधिक्रमः

चत्वारो वर्णाः—अनुलोमप्रतिलोमाः—सूतस्य ग्राह्यता—प्रतिलोमानामदीक्षार्हता (पृ. ११. श्लो. १-३)—चत्वार आश्रमाः वैष्णवदीक्षायोग्याः (श्लो. ५)—तन्त्रेऽस्मिन् चत्वारो ब्रह्मचारिणः—ब्रह्मचारी, लिङ्गी, शिष्यः, उपासकश्च—तेषां लक्षणानि (पृ. ११-१२. श्लो. ६-१४)। चत्वारो गृहस्थाः—व्रती, गृहस्थः, आढ्यः,

आचार्यः—तेषां लक्षणानि (पृ. १२-१३. श्लो. १४-२२)—चत्वारो वानप्रस्थाः—वैखानसः, तन्त्री, गुरुः, निष्कलः (पृ. १३-१४. श्लो. २२-३२)—चत्वारः संन्यासिनः—हंसः, परमहंसः, भगवान्, प्रभुः (पृ. १४-१५. श्लो. ३३-४२)।

वैष्णवदीक्षावतामाचाराः (पृ. १५-२६. श्लो. ४२-१३५)—भाजनम् (पृ. १६. श्लो. ४४-५१)—स्नानम्, तीर्थवर्णनम् (पृ. १७. श्लो. ५४-६९)—स्नानमध्ये जपः, अनन्तरं सूर्यार्घ्यदानम् (पृ. १७-१९. श्लो. ७०-६)—ततो देव-ऋषि-पितृतर्पणम् (पृ. १९-२१. श्लो. ७९-९२)—संध्योपासनम् (पृ. २१-२२. श्लो. ९४-१०६)—आचमनविधिः (पृ. २२-२४. श्लो. १०६-१७)—सर्वाश्रमिणां तन्त्रदृष्ट्या चातुर्विध्यम्—समयी, पुत्रकः, साधकः, आचार्य इति (पृ. २४. श्लो. ११८)—तेषां लक्षणानि (पृ. २४. श्लो. ११९-२६)—साधकाचार्ययोराचारः (दिनचर्या) (पृ. २५-६. श्लो. १२६-३५)।

षष्ठोऽध्यायः—प्रतिष्ठाविधिः

मण्डपनिर्माणं तदलंकरणं च, कलशानां स्थापनं गर्तनिर्माणं च (पृ. २७-९. श्लो. १-२४)—आतोद्यवादनम्, द्विविधा अर्चा—कर्मार्चा, स्थापनार्चा च (पृ. २८-९. श्लो. १७-८)—मध्येवेदिकं शयनकल्पनम्—अर्चयोः स्नपनार्थमण्डपवर्णनम्—वाद्यानामुद्देशः (पृ. २८-९. श्लो. १९-२७)—निषिद्धजनानां बहिष्कारः (पृ. ३०. श्लो. २७-८)—कर्मणस्त्रैविध्यम्, वैदिक-तान्त्रिक-मिश्रभेदात् (श्लो. २९-३१)—कलशस्थापनावाहनादि (श्लो. ३२-६)—पालिकास्थापनम् (पृ. ३१. श्लो. ३७)—कलशानां तत्तद्द्रव्यैः पूरणम् (पृ. ३१. श्लो. ३८-४४)—बेरस्थापनम् (पृ. ३१-२. श्लो. ४५-९)—एकबेरविधिः (पृ. ३२. श्लो. ४६-७)—त्रिविधा एकबेरे प्रतिमा-अश्म-मणि-लोहमयी (श्लो. ४७)—मृन्मयी काष्ठमयी च—बहुबेर-विधिः (श्लो.४८) एकबेरबहुबेरविध्योर्भेदः (श्लो. ४९)।

चतुर्विधं लिङ्गम्—ब्राह्मं, शांकरं, वैष्णवं, त्रिदैवं च (श्लो. ५०-४)—पुरुषसूक्तेन तत्तद्द्रव्यैः स्नपनविधिः (पृ. ३३. श्लो. ५५-६२)—बेरस्य वस्त्रोपवीतादिसमर्पणम् (पृ. ३३-३४)—अष्टमङ्गलानां स्थापनम् (पृ. ३४. श्लो. ६७-८)—इन्द्रादि-ईशानान्त-दिक्पालस्थापनम् (श्लो. ६९-७०)—कलशेषु अष्टविद्येश्वराणां पूजा (पृ. ३४-५. श्लो. ७२-५)—ब्रह्मविष्णुपूजा (श्लो. ७५-६)—चतुर्ष्वायतनेषु वासुदेवादीनुद्दिश्य होमः (पृ. ३५-६. श्लो. ७८-८३)—निवेदनम् (पृ. ३६. श्लो. ८४)—शान्तिहोमः (श्लो. ८७-९१)—प्रोक्षणम् (पृ. ३७. श्लो. ९२-९६)—इत्यधिवासविधिसमाप्तिः (श्लो. ९७)।

प्रभाते अष्टदिक्षु तत्पालकानां होमाः (पृ. ३७-८. श्लो. ९८-१०३)—प्रतिमानां अष्टमङ्गलानां चोद्धरणम्, देवागारं प्रति च उद्वहनम् (पृ. ३८-९. श्लो. १०६-१४)—देवालये प्रतिष्ठापनम्—प्रतिष्ठापञ्चकम् स्थापना, आस्थापना, संस्थापना, प्रस्थापना, प्रतिष्ठा च (पृ. ३९. श्लो. ११४-१२०)—प्रतिमान्यासविधिः, न्यास-त्रैविध्यम्, स्थितिः, सृष्टिः, संहृतिश्च (पृ. ४०. श्लो. १२२-३)—प्रतिमाशरीरे नाडीध्यानं प्राणायामश्च (पृ. ४०-१. श्लो. १२४-३३)—निरञ्जनस्य सदाविष्णोर्हृदयकमले ध्यानम् (पृ. ४१ . श्लो. १३४-४०) दौवारिकप्रोक्षणम् (श्लो. १४३-४)—गरुडप्रोक्षणम् (श्लो. १४५)—दिग्बलिः (श्लो. १४६)—विष्वक्सेन-प्रतिष्ठा (श्लो. १४७)—दक्षिणादानम् (श्लो. १४८)—एवमेव जीर्णबेरोद्धारविधिश्च (पृ. ४३. श्लो. १५१)—आचार्यपूजा (श्लो. १५१)।

सप्तमोऽध्यायः—प्रतिमाविधिः

पञ्चविधाः प्रतिमाः, शिला-लोह-रत्न-काष्ठ-मृन्मय्यः (पृ. ४४. श्लो. १-२)—शिलाभेदाः, तद्गुणाश्च (पृ. ४५. श्लो. ३-१०)—शिलानयनम् (पृ. ४५-६)—सूत्रपातः (पृ. ४६. श्लो. २२)—पुनः

शिलाभेदकथनम् (पृ. ४६-७. श्लो. २२-७)—शिलाशिरोभागज्ञानम् (श्लो. २७-८)—प्रतिमायाम: (पृ. ४७-८. श्लो. ३२-६)।

चित्र-अर्धचित्र-चित्राभासरूपेण प्रतिमात्रैविध्यम् (पृ. ४८. श्लो. ३६-४१)—किरीटलक्षणम् (पृ. ४८-९. श्लो. ४१-४)—अङ्गान्तराणां लक्षणानि (पृ. ४९. श्लो. ४५–५१)—शिलादोषा: प्रतिमादोषाश्च (पृ. ४९-५०. श्लो. ५१-९)—द्विविधा प्रतिमा, सौम्या आग्नेयी च (श्लो. ५९–६१)—पुनर्द्विविधा, शुद्धवर्णा संकीर्णवर्णा च (पृ. ५१. श्लो. ६२)—पुन: शिलादोषगुणा: (श्लो. ६३-५)।

शिलागर्भ: (पृ. ५१-२. श्लो. ६७-७५)—लोहप्रतिमार्थ-लोहभेदलक्षणादि (पृ. ५२-३. श्लो. ७६-८४)—प्रतिमार्थमणि-भेदलक्षणादि (श्लो. ८४-६)—प्रतिमार्थकाष्ठभेदलक्षणादि (पृ. ५३-४. श्लो. ८७-९५)—पादपीठविधि: (श्लो. ९६)—मृद्भेदलक्षणानि (पृ. ५४-५. श्लो. ९७-१०४)—गर्भगृहे पीठविधि: (पृ. ५५-६. श्लो. १०५–१२०)—गर्भगृहस्य सप्तधा क्लृप्ति: (पृ. ५७. श्लो. १२०-२)—तस्य नवधा क्लृप्ति: (पृ. ५७-८. श्लो. १२३-६)—मूर्ते: सप्त-पञ्च-त्रि-तालादिभेदेन पीठमध्ये शूलस्थापनम् (पृ. ५८-६०. श्लो. १२६-५०)—शूलसंख्या (पृ. ६०-३. श्लो. १५०-७३)—रज्जुवेष्टनम् (श्लो. १७४-१८२)—संक्षेपेण लेपवर्णादिविधि: (पृ. ६४. श्लो. १८३-१८८)—जीर्णप्रतिमोद्धारविधि: (पृ. ६४-५. श्लो. १८९-९६)।

## अष्टमोऽध्याय:—प्रासादविधि:

भूपरिग्रह:, कर्षणम्, खात:, होम: (पृ. ६६)—इष्टकाग्रहणम्, तक्षक:, तदुपकरणानि, इष्टकाधानम्, मध्यश्वभ्र: गर्भाधानं च—प्रासादस्य भागानामुद्देश: (पृ. ६७)—चतुर्विध: प्रासाद:, वृत्त-चतुरश्र-आयत-वृत्तायत-भेदात्—प्रतिभेदं प्रासादाङ्गानां संख्या-शयन-स्थान-आसन-यान-विशेषापेक्षया उचितदिग्विशेषनिर्देश: (पृ. ६८)

—प्रासादविस्तारः—भूमिसंख्या—गोपुरोच्छ्रायः—तत्तद्देवतामण्डपानां मानादिनिर्देशः (पृ. ६९-७०)—तत्तन्मूर्तीनां वर्ण-आसनादि-निर्देशः—नर-नारायण-हरि-कृष्णाख्याः चतस्रः दिव्यमूर्तयः, तत्र मत-भेदाः (पृ. ७०-१)।

नवमोऽध्यायः—देवाराधनक्रमः (अर्चनाविधिः)

द्विविधा अर्चना, स्थावरा, अस्थावरा च—एकबेरे पूर्वा, कर्मार्चायामपरा—परिवाराः कर्मार्चायामेव—योगपीठकल्पनम्, तत्पादाः धर्मज्ञानवैराग्यैश्वर्यरूपाः—शिवरूपो मध्यमपादः (पृ. ७२)—द्वौ मूलमन्त्रौ, अष्टाक्षरः द्वादशाक्षरश्च—सृष्टि-स्थिति-संहारन्यासाः—अष्टाक्षरन्यासः (पृ. ७३-४)—द्वादशाक्षरन्यासः (पृ. ७४-६)—अष्टाक्षरबीजन्यासः (पृ. ७६-७)—द्वादशाक्षरबीजन्यासः (पृ. ७७-८)—अष्टाक्षरद्वादशाक्षरबीजानां वर्णाः (पृ. ७८-९)—आवाहनध्यान-प्रोक्षणार्घ्यपाद्यादि (पृ. ७९-८०)—परिवारदेवता-अस्त्र-शस्त्र-लोकपाल-गरुड-विष्वक्सेनानां स्थानकल्पनं तत्प्रोक्षणं च (पृ. ८०)—आचमनस्नानवस्त्रालंकारगन्धपुष्पधूपदीपदानम् (पृ. ८१)—होमः (पृ. ८२)—जपः (पृ. ८२-३)।

दशमोऽध्यायः—दानलक्षणम्

दानोचितदेशाः (पृ. ८४)—दानकालाः (पृ. ८४-५)—दानोचितपात्राणि (पृ. ८५)—वैष्णवः, समर्थी, चक्रवर्त्ती, अभिषिक्तः, गुरुः, आचार्यः, भगवान्, विष्णुः इत्येषु उत्तरोत्तरः श्रेयान् (पृ. ८५)—दानद्रव्याणि (पृ. ८५-६)—दानफलानि (पृ. ८६)—दानद्रव्याणां गुणविशेषाः (पृ. ८६-७) विद्यादानं, तत्र विशेषाश्च (पृ. ८९-९०)—विद्यात्रैविध्यम्, लौकिकं, वैदिकं, अध्यात्मं चेति—तत्र विष्णुतन्त्राणां, तेषु च पाञ्चरात्रस्य प्रकर्षः (पृ. ८९)—विद्यादानफलानि (पृ. ८९-९०)।

एकादशोऽध्यायः—मन्त्रकोशः

मन्त्रमाहात्म्यम् (पृ. ९१)—द्वादशाक्षरम—अष्टाक्षरम—अष्टाक्षरपञ्चाङ्गानि—नारसिंहम् (पृ. ९१)—नारसिंहपञ्चाङ्गानि—अपराजिता (पृ. ९२)—अपराजितपञ्चाङ्गानि—महावराहमन्त्रः—महावराहपञ्चाङ्गानि — ब्रह्ममन्त्रः — ब्रह्मपञ्चाङ्गानि — पञ्चोपनिषन्मन्त्राः (पञ्चोपनिषदः)—तन्मात्राः—मूर्तिमन्त्राः—देवीमन्त्राः—(पृ. ९३) — महासुदर्शनविद्या—सुदर्शनपञ्चाङ्गानि—खड्गमन्त्रः—गदामन्त्रः — शङ्खमन्त्रः—सुदर्शनमन्त्रः—मातृमन्त्राः—मातृपञ्चाङ्गानि—गरुडमन्त्रः—सूर्यमन्त्राः—अग्निबीजम्—उपस्थानमन्त्रः (पृ. ९४)—अग्निमन्त्रः (पृ. ९५)—मन्त्रविषये केचन विशेषाः, फलविशेषाश्च (पृ. ९५)।

## शिवरात्रम्

प्रथमोऽध्यायः—तिथियागः

वह्नियागः, वह्न्यालयः, वह्निबिम्बम्, तद्यागः (पृ. ९७-१००) —ब्रह्मयागः, ब्रह्मालयः, ब्रह्ममूर्तिः, तत्परिवाराः, तद्यागः (पृ. १००-४)—तृतीयायां धनदयागः, तदालयादिपूजान्तं कर्म (पृ. १०४-६)—तथा चतुर्थ्यां गणेशयागः, गणेशगायत्रीमन्त्रः (पृ. १०६-७)—पञ्चम्यां श्रीयागः, श्रीसूक्तेन श्रीपूजाक्रमः (पृ. १०७-९)—षष्ठ्यां स्कन्दयागः (पृ. १०९-१२)—सप्तम्यां सूर्ययागः (पृ. ११२-१४)—अष्टम्यां रुद्रयागः (पृ. ११४-८)—नवम्यां देवीयागः (पृ. ११८-२१)—दशम्यां यमयागः (पृ. १२१-२३)—एकादश्यां शक्रयागः (पृ. १२३-६)—द्वादश्यां विष्णुयागः (पृ. १२६-८) तत्तद्विष्णुमूर्तीनां रक्तादिवर्णविशेषाः (पृ. १२६-७)—त्रयोदश्यां कामयागः (पृ. १२८-३१)—चतुर्दश्याम् अश्वियागः (पृ. १३१-३)—पौर्णमास्यां सोमयागः (पृ. १३३-५)।

द्वितीयोऽध्यायः—मन्त्रलक्षणम्

मन्त्राणां त्रैविध्यं, सौम्य-आग्नेय-उभयात्मकभेदात् (पृ.१३६) —सौम्या विष्णुमन्त्राः; नारसिंह-हेति-सौर-मन्त्रा आग्नेयाः, वाराह-मुद्रा-मूर्तिमन्त्राः, अपराजिता पञ्चोपनिषदश्च सौम्याग्नेयाः—सौम्यानामाग्नेयीकरणम्, तथा आग्नेयानां च सौम्यीकरणम्—बीजाक्षरस्वरूपम् —मन्त्राणां पञ्चाङ्गानामावश्यकता—गायत्रीमहिमा (पृ. १३७)—वर्णमातृकायां प्रत्यक्षरं देवतानिर्देशः (पृ. १३८-९)—मन्त्राणां वेष्टनसकलीकरणादि (पृ. १३९)।

तृतीयोऽध्यायः—मन्त्रवादविधिः

मन्त्रैः वशीकरणादि (पृ. १४०)—महासुदर्शनमन्त्रस्य श्मशानचतुष्पथादिषु जपे विशेषफलवर्णनम् (पृ. १४१)—यक्षराक्षसादीनां वशीकरणार्थं मन्त्रहोमाः (पृ. १४२)—अपराजिता द्विधा, दुर्गावैष्णवीविषया, निग्रहानुग्रहार्था च (पृ. १४३)—गारुडेन सर्पनिग्रहः (पृ. १४४)—विषवादः सर्पवशीकरणं च—गरुडमन्त्रध्यानावेशादिना सर्पविषापहरणम् (पृ १४४-८)—भूतानां प्रेतानां ग्रहाणां च वशीकरणमन्त्रादि (पृ. १४८-६४)—जलस्तम्भः, अग्निस्तम्भः (पृ. १६४)।

चतुर्थोऽध्यायः—विष्णोः पारिषदाः

अष्टोत्तरशतपारिषदेश्वराणामुद्देशः (पृ. १६५-६), तेषां रूपवाहनादि (पृ. १६७)।

पञ्चमोऽध्यायः—चरुपाकविधिः

पाकपात्र-वस्तु-गुणदोषाः (पृ. १६८-९)—निवेदनोचितफलानि, तद्गुणदोषाः (पृ. १७०-१)—मूलानि ओषधयश्च, तद्गुणदोषाः (पृ. १७१-२)—पुनश्च फलभेदाः (पृ. १७२)—हविर्मिश्रणे विशेषाः

(पृ. १७२-३)—निवेदितस्य (निर्माल्यस्य) विनियोगः (पृ. १७३)—हविःसंख्या ।

षष्ठोऽध्यायः—पुष्पयागविधिः

पुष्पयागे पुष्पेषु ग्राह्याग्राह्यविभागः (पृ. १७५-८)—पुष्पग्रहणोचितकालाः (पृ. १७८)—पूजोचितबीजाङ्कुराणामुद्देशः (१७८-९) ।

सप्तमोऽध्यायः—पत्रच्छेदः

पत्रपुष्पादानोपयुक्तक्षुरादीनामुपयोगविभागः (पृ. १८०)—पूजोचितपत्रविशेषोद्देशः—षष्ट्यधिकत्रिशतानि पत्राणि, अथवा षष्ट्यधिकद्विसहस्रभेदाः—अन्यत्रोक्ताः तेषां चतुष्षष्टि-षष्टित्रिशत-त्रिंविंशतिसाहस्रचत्वारिंशत् प्रभेदाः (पृ. १८१) ।

पत्रच्छेदनविधिः (पृ. १८१-३)—पुष्पबन्धन-श्लेषणप्रकाराः (पृ. १८३-४)—पत्रपुष्पैः भक्तिविन्यासः, तादृशभक्तिभेदानां पञ्चानामुद्देशः, तत्फलकीर्तनम् (पृ. १८४) ।

अष्टमोऽध्यायः—स्नपनविधिः

स्नपनमण्डपनिर्माणम् (पृ. १८५)—कलशाः—रत्नसंग्रहः (पृ. १८६)—व्रीहिबीजसंग्रहः (पृ. १८७)—मण्डपालङ्करणम्—आचार्यग्रहणम् (पृ. १८७)—मण्डपालेपनमार्जनादि (पृ. १८८)—कलशस्थापनम् (पृ. १८८)—कलशसंख्या—अभिषेकद्रव्यविशेषाः (पृ. १८९)—घृतादिमन्त्राः (पृ. १९०-१)—क्रमेण पाद्यादिदानम् (पृ. १९१-२)—स्नपनक्रमः (पृ. १९२-६)—स्नपनस्य कलशादिसंख्यया उत्तमोत्तमादिभेदाः (पृ. १९६)—तत्तद्द्रव्यस्य देवताः (पृ. १९७)—कलशक्रमद्रव्यसंयोग-मन्त्र-भूमिभागाः (पृ. १९८-२००)—पाद्यादिमन्त्राः (पृ. २००-१) स्नपनस्यास्य उत्तमोत्तमादिभेदाः (पृ. २०२)—पञ्च परिमार्जनवस्तूनि (पृ. २०२—श्लो. १५३-५)—अपरः

स्नपनविधिः (पृ. २०२-३—श्लो. १९६-६८)—अन्यथा द्रव्यविन्यासः (पृ. २०४-९)।

नवमोऽध्यायः—अङ्कुरारोपणम् (उत्सवाध्यायः)

पालिकादिभेदाः (पृ. २०६-७)—धान्यग्रहणवापने (पृ. २०७)—प्रतिरात्रं भूतबलिः (पृ. २०८-११)—प्रतिसरबन्धः (पृ. २११)—प्रतिमास्नापनम् (पृ. २१२-३)—पुष्पयागः (पृ. २१३)—पालिकास्थापनम् (पृ. २१४)—ब्रह्मरात्रोक्तविधिना अर्चनतिथियागादिकरणम् (पृ. २१४)—पञ्च निवेदनार्थचरुभेदाः पृ. २१४।

दशमोऽध्यायः— मण्डलविधिः

मण्डलकरणार्थगोमयस्य विशेषाः (पृ. २१५)—तत्तद्देवतालये कार्याणां मण्डलानामाकाराः (पृ. २१५-६)—तत्तन्मण्डलानां देवताः (पृ.२१६-७)—मार्जनादिषु प्रीता देवताः (पृ. २१७)—मण्डलभेदाः, मण्डलोचितप्रदेशाः, मण्डलकरणादिषु प्रत्येकं फलविशेषाः (पृ. २१८-२०)।

## इन्द्ररात्रम्

प्रथमोऽध्यायः—(प्रतिमा) पूरणाध्यायः

वेणु-काष्ठ-पत्रैः प्रतिमामानानुसारेण पञ्जरबन्धः (पृ. २२१)—मधूच्छिष्ट-लोह-शालिपिष्ट-मृद्भिरर्गलकरणम् (पृ. २२१)—चरुरसघृततैलपयोमध्वादिभिः तत्पूरणम्, तत्तत्पूरणस्य फलविशेषश्च (पृ. २२२-७)।

द्वितीयोऽध्यायः—मन्त्रोद्धारः

मातृकास्थवर्णानामुत्पत्तिक्रमः (पृ. २२८-९)—स्वराणां व्यञ्जनानां च देवताः (पृ. २२९-३१)—षट्पञ्चाशद् वर्णपुटानि

(पृ. २३१-४)—मन्त्रोद्धारः (पृ. २३४)—मन्त्रविलयक्रमः (पृ. २३४-५)।

तृतीयोऽध्यायः—पुराणाध्यायः

जगदुत्पत्त्यादिवर्णनम् (पृ. २३६)—महार्णवे सुप्तोत्थितस्य परमेष्ठिनो वराहोत्पत्तिः, वराहेण समुद्राद् भूमेरुद्धारः (पृ. २३६-७) —नरसिंहाविर्भाववर्णनम् (पृ. २३७-९)—मत्स्यस्य पुराणं वेदोद्धारश्च (पृ. २३९-२४०)—कूर्मपुराणम् (पृ. २४०)—ताक्ष्यपुराणम् (पृ. २४०-१)—वामनपुराणम (पृ. २४१-२)—हयग्रीवपुराणम् (पृ. २४२-३)—कपिलपुराणं, सांख्यज्ञानप्रवर्तनं च (पृ. २४३) —जामदग्न्यपुराणम् (पृ. २४३)—रामपुराणम् (ग्रन्थपातः) (पृ. २४४)—सात्त्वतस्य (कृष्णस्य) पुराणं, तेन पञ्चरात्रोपदेशश्च; पञ्चरात्रस्य सात्त्वतमिति नामान्तरम्; तथा तदनुयायिनां च सात्त्वता इति नाम (पृ. २४४-५)।

चतुर्थोऽध्यायः—यागविधिः

सप्तयागवर्णनम्—(१) यागः, ब्राह्मणादिवर्णानां तत्तद्वर्णोचित-यागकालः (पृ. २४६)—मण्डप-मण्डल-कलश-विधानम् (पृ. २४७-८)—(२) स्तोमः (पृ. २४८)—(३) महायागः (पृ. २४९-५०)—(४) अध्वरः (पृ. २५०)—(५) सवः (पृ. २५०)—(६) क्रतुः (पृ. २५१)—(७) हरिस्तोमः(पृ. २५१)।

पञ्चमोऽध्यायः—परिवारदेवताः

ब्रह्मसदाशिवादिपरिवारसहितस्यैव विष्णोरुत्तमत्वम् (पृ. २५३) —आलयप्राकारेषु बहिःपरिवाराणामालयाः (पृ. २५३-७)—सप्त वैष्णवमातरः, तासामालयाश्च (पृ. २५७)।

षष्ठोऽध्यायः—विघ्नेश्वरोत्पत्तिः

अव्यक्तसदाविष्णोश्चतुर्णां महाविष्णु-संकर्षण-प्रद्युम्न-अनिरुद्धानामुत्पत्तिः (पृ. २५८-९)—महाविष्णोर्देवी शान्तिः; संकर्षण एव शंकरः संहारकर्ता; तद्देवी श्रीः (पृ. २५८)—प्रद्युम्न एव ब्रह्मा, तद्देवी सरस्वती; अनिरुद्ध एव पुरुषोत्तमः, तद्देवी रतिः—एतेषां वर्णाः (पृ. २५९)—इयं सूक्ष्मसृष्टिः।

अथ अनिरुद्धात् स्थूलसृष्टिः—सलिलसृष्टिः, तत्र महदाख्यं पङ्कजम्, ततो हिरण्यगर्भः; तद्देवी संध्या; ततो रुद्रः, सत्य-अहंकार-रूपः—ततो दक्षादिप्रजापतयः (पृ. २६०)—अग्न्यादीनां सृष्टिः (पृ. २६१)—विष्ण्वादिद्वादशमासाधिपानां सृष्टिः, धात्रादीनां द्वादशसुतानां सृष्टिः, षोडशकलानां सृष्टिः (पृ. २६१)।

विष्णु-महाविष्णु-सदाविष्णु-रूपमूर्तित्रयं तमो-रजः-सत्त्वरूपम् (पृ. २६२)।

वाराहलोके शतं विष्णवः, तेषां नामानि (पृ. २६२-४)—रामलोके शतं, तन्नामानि (पृ. २६४-५)—नारसिंहलोके शतं, तन्नामानि (पृ. २६५-७)—निर्ऋतिदिशि शतं, तन्नामानि (पृ. २६७-८)—श्रीधरलोके शतं, तन्नामानि (पृ. २६८-७०)—वामनलोके शतं, तन्नामानि (पृ. २७०-१)—हयग्रीवलोके शतं, तन्नामानि (पृ. २७१-३)—वासुदेवलोके शतं, तन्नामानि (२७३-४)—कपिललोके तु न संख्या (२७४)।

सप्तमोऽध्यायः—विष्णूनां लोकाः

वाराहलोकवर्णनम्, तत्रत्यपुर-नदी-गोपुर-द्वारपालादीनां वर्णनम् (पृ. २७५-६)—रामलोकवर्णनम् (पृ. २७६-७)—नारसिंहलोकः (पृ. २७७-८)—पुनश्च रामलोकान्तरस्य वर्णनम् (पृ. २७८-९)—(ग्रन्थपातः)—वामनलोकः (पृ. २७९-८०)—हयग्रीवलोकः (पृ. २८१-२)—वासुदेवलोकः (पृ. २८२-३)—कपिललोकः

(पृ. २८३-४)—विष्णुलोकः (पृ. २८४-६)—तदुपरि महाविष्णु-लोकस्तदुपरि नारायणः (पृ. २८६)—सप्तवैष्णवमातॄणां स्थानं, तासां वर्णाः (पृ. २८६-७)—एतदध्यायपठनफलम् (पृ. २८७)।

अष्टमोऽध्यायः—योनिशुद्धिः

क्षेत्रभूतस्त्रीगतो विचारः (पृ. २८८)—क्षेत्रस्य चातुवर्ण्येन चतुर्विधत्वम्—पुनरन्यथा कन्येत्यादि भेदेन चातुर्विध्यम, तत्र गुणदोषौ, तासामुपभेदाः, तत्तत्प्रसूतानामपत्यानां नामानि (पृ. २८८-९१)।

बीजस्वरूपगुणदोषाः (पृ. २९१)—त्रिविधमब्रह्मचर्यं, तदवान्तरभेदाश्च (पृ. २९२)—वर्णाः, वर्णसंकरजाश्च (पृ. २९३)।

चातुर्वर्ण्यप्रशस्ता देशभागाः (पृ. २९४)—देहशुद्ध्यर्था व्रताचारादयः (पृ. २९४)—क्रियाशुद्धिकराः गर्भाधानादिसंस्काराः, वैष्णवदीक्षा च (पृ. २९४-५)—[शिष्यलक्षणमित्यध्यायनाम अन्ते दृश्यते !]।

नवमोऽध्यायः—आचार्यलक्षणम्

आचार्योचित आचारः, तद्वासार्थं निषिद्धाः प्रदेशाः (पृ. २९६-७)—बुद्धिशुद्धिः (पृ. २९७)—आचार्यत्वयोग्याः, त्रयो द्विजातयः, संकरजाः, तेषु आचार्यत्वयोग्याः (पृ. २९७-३०१)—हस्तपादरेखादिविशेषैः आचार्ययोग्यत्वसूचना (पृ. ३०१-२)—याजने निषिद्धाः पुरुषाः (पृ. ३०२-५)—शुभहस्तविधिः, यागस्य प्रोक्षण-पुष्पयाग-मण्डलदर्शन-दीक्षाभेदेन चातुर्विध्यम् (पृ. ३०५-६)—(ग्रन्थपातः)।

(इन्द्ररात्रभागस्त्वपूर्णः)

## ऋषिरात्रम्

प्रथमोऽध्यायः—पञ्चकालविवेकः

अभिगमन - उपादान - इज्या - स्वाध्याय-योगरूपपञ्चकर्मोचिताः प्रातरारभ्य पञ्च कालाः (पृ. ३०७-८)।

नाडीचक्रवर्णनम् (पृ. ३०८-१२)—चक्रमध्ये हृदि क्षेत्रज्ञभूत-सदाविष्णोर्ध्यानम् (पृ. ३१२)—प्राणायामः (पृ. ३१४-५)—सदाविष्णुपदप्राप्तिः (पृ. ३१५)।

द्वितीयोऽध्यायः—मुद्रालक्षणम

स्नान-गन्धाद्युपचाराणां मुद्राः, तासामुद्देशो लक्षणं च (पृ. ३१६-९)—तत्तद्देवानां मुद्राः (पृ. ३१९-२०)—चक्र-गदादिमुद्राः (पृ. ३२०-३)—पुनश्च देवानां मुद्राः (पृ. ३२४)—शक्ति-लोक-कालादीनां मुद्राः (पृ. ३२५)—नृत्त-गीतादीनां मुद्राः (पृ. ३२५)—तत्त्वज्ञान-कर्मादीनां मुद्राः (पृ. ३२६-७)।

तृतीयोऽध्यायः—योगाध्यायः

सात्त्विकादिभेदेन आहारविवेकः (पृ. ३२८-३०)—दश आसनानि (पृ. ३३०-२)—योगोचिता देशाः (पृ. ३३२)—तीर्थक्षेत्रादीनां निर्देशः (पृ. ३३३)—कर्मयोगात् परं ज्ञानयोगः, तदर्थं योगः (पृ. ३३४)—प्राणायामः (पृ. ३३४-७)—नारायणध्यानम् (पृ. ३३८)—योगमध्ये भगवद्दर्शनादिप्रत्ययाः, प्रत्ययेषु पञ्चावस्थाश्च (पृ. ३३८-४१)—योगाभ्यासप्रशंसा (पृ. ३४१)।

चतुर्थोऽध्यायः—तपोऽध्यायः

तपोयोग्याः प्रदेशाः (पृ. ३४२-३)—तपःकालाः कृच्छ्रसंज्ञा च (पृ. ३४३-४)—जपः (पृ. ३४४)—आहारचर्यावशाद् अष्टविधं तपः (पृ. ३४४-८)—ऋतुप्रयुक्ताः तपोभेदाः (पृ. ३४८)।

पञ्चमोऽध्यायः—पुष्पयागः

पुष्पमण्डलविन्यासः (पृ. ३५०-१)—कलशादिन्यासः, प्रथमाद्यावरणेषु होमपूजादयः (पृ. ३५२-३)—वैदिक-तान्त्रिक-

मिश्रभेदेन मन्त्राणां त्रैविध्यम्—तां[redacted]धान्यम्—वर्णविभागेन दीक्षाक्रमः (पृ. ३९४-९)।

षष्ठोऽध्यायः—बलिदानम्

बल्युचितपात्राणि (पृ. ३९६)—बलिपात्रादिषु स्थिता देवाः (पृ. ३९६-७)—बलिद्रव्याणि (पृ. ३९७)—व्रीह्यवघट्टनम् (पृ. ३९८)—तण्डुलगुणाः (पृ. ३९९)—पाकारम्भः, स्वस्तिवाचनं च (पृ. ३६०-१)—अष्टमङ्गल-द्रव्यैः परिभ्रमणं पुष्पबलिश्च (पृ. ३६१)—गरुडशक्रादिस्थानेषु गातव्यानि स्तोत्रगीतानि (पृ. ३६२-३)—पितृ-स्तोत्राणि (पृ. ३६३-४)—चक्रमन्त्रस्तोत्रादि (पृ. ३६४)—बलि-निक्षेपः आत्मरक्षार्थो मन्त्रः (पृ. ३६४)—मध्याह्नपाकविधिः (पृ. ३६५)—प्रतिकृतिविधिः (पृ. ३६५-६)—वर्ज्याः राजस-तामस-राक्षस-पैशाचादिबलिविधि-भेदाः (पृ. ३६६)—तत्तद्देवानां मन्त्र-मुद्रादिपूर्वकं बलिदानम् (पृ. ३६७-७१)—मङ्गलवाचनम् (पृ. ३७१-५)—निर्माल्यमन्त्रेण बलिदानसमापनम् (पृ. ३७५)।

सप्तमोऽध्यायः—मन्त्राणां ऋषिच्छन्दोदैवतविधिः

प्रणवाष्टाक्षरद्वादशाक्षराणां ऋषिच्छन्दोदैवतानि (पृ. ३७६)—विष्णुगायत्री-चक्रमन्त्र-षडक्षर-पञ्चोपनिषदां तथा (पृ. ३७७)—पुरुष-विश्व-निवृत्ति-सर्वाणाम् (पृ. ३७७)—तन्मात्रमन्त्राणाम् (पृ ३७७)—पञ्चाङ्गानां दुर्गा-अपराजिता-नारसिंह-महासुदर्शनानाम् (पृ. ३७८)—शङ्ख-गदा-पद्म-मुसल-खड्ग-धनुर्मन्त्राणाम् (पृ. ३७९)—माला-मन्त्र मूर्तिमन्त्राणाम् (पृ. ३७९)—वासुदेव-प्रद्युम्न-अनिरुद्धमन्त्राणाम् (पृ. ३७९)—देवीमन्त्राणाम् (पृ. ३८०)—सूर्यमन्त्राणां षडक्षरादि-चतुर्णाम् (पृ. ३८०)—वराह-माधवमन्त्राणाम् (पृ. ३८०-१)—विष्णु-मधुसूदन-वामनादिवैष्णवमन्त्राणाम् (पृ. ३८१)—सप्तमातॄणाम् (पृ. ३८१. श्लो. ९०-९४)—विष्वक्सेनादिपारिषदानाम् (पृ. ३८१-२)—

सामान्यतोऽग्निमन्त्राणाम् (पृ. ३८३. श्लो. ६५-८)—शिष्टानां विष्णु-मन्त्राणाम् (पृ. ३८३. श्लो. ६९)—अनुक्तानां मन्त्राणाम् (पृ. ३८३)।

अष्टमोऽध्यायः—प्रायश्चित्तानि

दीक्षितानां समयाः—अर्चनादीनां पञ्च षट् वा कालाः—तेषाम् एककालिकादिभेदाः (पृ. ३८४-६)—तेषां सिद्धिः (पृ. ३८६)—काल-अर्चनयोर्लङ्घने प्रायश्चित्तानि (पृ. ३८७)—तत्तत्पापकरणे प्रायश्चित्तानि (पृ. ३८८-९१)—अभक्ष्यभक्षणे प्रायश्चित्तानि (पृ. ३९१-३)—आचारलङ्घने प्रायश्चित्तानि (पृ. ३९३ ६)—शपथव्यतिक्रमे (पृ. ३९६)—वैष्णवनिन्दायाम्—जातिभ्रंशकेषु पापान्तरेषु (३९७-८)—पञ्चमहापातकेषु (पृ. ३९८-४०१)—उपपातकेषु (पृ. ४०१-४)।

नवमोऽध्यायः—ब्रह्मकूर्चविधिः

गव्यार्थपात्रवर्णनम् (पृ. ४०५)—प्रक्षालनपारभ्य तत्तत्कर्मणां विधिः, मन्त्रश्च (पृ. ४०६)—पञ्चगव्यनिधिः (पृ. ४०६-८)—ब्रह्मकूर्चविधिः (पृ. ४०८)—तत्प्राशनविधिः (पृ. ४०९-१०)—पञ्चगव्यब्रह्मकूर्चप्राशनफलम् (पृ. ४१०)।

दशमोऽध्यायः—आयुधाध्यायः

आयुधोत्पत्तिः, दुष्टैः पीडितानां सुराणां प्रार्थनया हरिणा आयुधसृष्टिः (पृ. ४११-४)—तत्तदायुधानां तत्तद्देवेभ्यो दानम् (पृ. ४१४)—धनुर्वेदप्रवर्तनम् (पृ. ४१४-५)—अस्त्र-शस्त्र-शब्दनिरुक्तिः (पृ. ४१५)—धनुर्वेदविषयसंग्रहः (पृ. ४१५-६)—पञ्च पुरुषभेदाः (पृ. ४१६)—पञ्च धनुराकर्षणोचितानि स्थानानि (पृ. ५१६)—पञ्च हस्ताः, मुष्टयश्च (पृ. ४१६)—अस्त्रमोक्षणे पञ्च न्यायाः (पृ. ४१७)—चत्वारः पतनदोषाः गतिदोषाः, अन्ये नव दोषाः धनुर्मोक्षणे (पृ. ४१७)—धनुर्वेदशिक्षणविधिः (पृ. ४ ८)।

ऋषिरात्रं समाप्तम्

# सनत्कुमारसंहिता

## ब्रह्मरात्रे चतुर्थोऽध्यायः

. . . . [1]द्विगुणं प्रोक्तं धृतं चापि तथाविधम् ।
अत ऊर्ध्वं न वृद्धिः स्याद्वत्सराणां शतैरपि ॥ १ ॥

धर्मवृद्धौ तथा वृद्धिर्द्विगुणं द्विगुणं भवेत ।
लेख्येन साधयेदर्थं साक्षिभिः शपथेन च ॥ २ ॥

लेख्यं प्रधानं पूर्वं तु तदलाभे तु साक्षिणः ।
तयोरलाभे शपथं शास्त्रज्ञाः संप्रचक्षते ॥ ३ ॥

लेख्यं तु द्विविधं प्रोक्तं स्वलेख्यं परलेख्यकम् ।
लेखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ॥ ४ ॥

गूढश्चोत्तरसाक्षी च [2]साक्षी पञ्चविधः स्मृतः ।
पूर्वपूर्वो गरीयान् स्यादेतेषां साक्षिणां क्रमात् ॥ ५

विषपानं तथाम्भश्च तुला च परशुक्रिया ।
शपथं ब्राह्मणानां तु [3]समयः परिकीर्तितः ॥ ६ ॥

[1] All the available MSS. begin only with this line and lack the previous portion.

[2] कृतः A

[3] शपथः A

एतेषां चैव सर्वेषां पूर्वपूर्वो महत्तरः ।
प्रमाणमपि चैतेषु निरीक्ष्य द्रव्यगौरवम् ॥ ७ ॥

न शेकुस्तमतिक्रान्तुं न चक्रेण कदाचन ।
न च यागफलेनापि नाचार्येण शपेदपि ॥ ८ ॥

नरकेष्वेव पातः स्यादेभिश्चेच्छपथः कृतः[1] ।
भगवानपि कुप्येत भवेच्चैव विनाशनम् ॥ ९ ॥

तस्मादेषु न युञ्जीत शपथ समयी नरः ।
नियुनक्ति यदि द्वेषान्नियोक्ता नरकं व्रजेत् ॥ १० ॥

आधिस्तु द्विविधो ज्ञेयश्चरश्चाचर एव च ।
दासीदासगवाश्वाजवस्त्रशय्यासनादयः ॥ ११ ॥

चरा इति च संप्रोक्ताश्चर्मवर्मादयोऽपि च ।
रत्नभूमिहिरण्याद्या [2]आरामायतनानि च ॥ १२ ॥

अचरा इति विज्ञेया धातवश्च सरांसि च ।
दैवाच्चरविनाशे तु कर्तव्योऽन्याधिरेव च ॥ १३ ॥

चर्मवर्मध्वजच्छत्रवस्त्रशय्यासनैर्विना ।
अचराणां तथा नाशे प्राप्तेऽन्याधिर्विधीयते ॥ १४ ॥

धातुरत्नहिरण्याद्यैर्विना चैव यथाविधि ।
भोक्तुरेषां प्रमादेन विनाशः प्रायशो भवेत् ॥ १५ ॥

[1] शपथे कृते A

[2] स्वारामा A

तस्मादाध्यन्तरं प्रोक्तं पूर्वेष्वेषु च निश्चयः ।
भोक्तुरेव भवेद्धानिरात्मनस्तु प्रमादतः ॥ १६ ॥

. . . कानां यदि स्याच्च पुनः क्रिया ।
छलेनाज्ञानतो वापि पूर्वपूर्वा गरीयसी ॥ १७ ॥

न पुत्रर्णं पिता दद्याद् दद्यात् पुत्रस्तु पैतृकम् ।
[कामक्रोधसुराद्यूत]प्रातिभाव्यकृतैर्विना ॥ १८ ॥

दर्शनप्रतिभूश्चापि दानस्य प्रतिभूरपि ।
[1]प्रत्ययप्रतिभूश्चापि त्रिविधः प्रतिभूः स्मृतः ॥ १९ ॥

यो यस्य प्रतिभूस्तस्य दर्शनं प्रति मानवः ।
न दर्शयेत् तं यस्तस्मै प्रदद्यात् स धनं त्वृणम् ॥ २० ॥

तस्मिन् प्रतिभुवि प्रेते न पुत्रो दातुमर्हति ।
दानप्रतिभुवि प्रेते तत् कार्यं तत्सुतैरपि[2] ॥ २१ ॥

ऋणत्रयं हि यः कुर्याद्विना प्रतिभुवा यदि ।
स तस्माद् व्यवहारात्तु मुक्तः स्यान्नात्र संशयः ॥ २२ ॥

तस्मात् तदनुमत्यैव ऋणी कुर्यात् पुनः क्रियाम् ।
रिक्थमूर्ध्वं पितुः पुत्रा विभजेयुः पृथक् पृथक् ॥ २३ ॥

एकांशमधिकं ज्येष्ठो शेषास्तु समभागिनः ।
कनीयान् यदि तन्त्रज्ञः स्थिते ज्येष्ठे तु केवले ॥ २४ ॥

[1] अश्वमेध A

[2] तत्सुतेष्वपि A

अन्ये वा यदि तन्त्रज्ञाः सर्वे ज्येष्ठांशभागिनः ।
दीक्षितानां तु पुत्राणां कर्तव्यास्तु न संशयः ॥ २५ ॥

सह दीक्षां प्रविष्टा ये ते सर्वे सोदराः स्मृताः ।
द्वितीयं जन्म दीक्षा तु पिता चाचार्य उच्यते ॥ २६ ॥

अपुत्राणां तु यद्वित्तमाचार्याधीनमुच्यते ।
तथाशौचविधिश्चापि सर्वेषां सहयाजिनाम् ॥ २७ ॥

व्यवहारो न कर्तव्य आचार्यैस्तु कदाचन ।
न च राजसभायां तु अर्थकामपरो भवेत् ॥ २८ ॥

तथा देवेषु विप्रेषु नान्यभक्तेषु[1] जातुचित् ।
न हेतुवादिवर्गेषु न कारणिकगोचरे ॥ २९ ॥

न श्रोतव्यः कदाचित्तु व्यवहारो विदीक्षितः ।
तेषां चैवाप्यलाभे तु ग्राह्या वैखानसा द्विजाः ॥ ३० ॥

तेषां चैवाप्यलाभे तु ग्राह्याः स्युर्ब्रह्मचारिणः ।
दीक्षितास्तदलाभे तु आचार्यः केवलो भवेत् ॥ ३१ ॥

अलाभे दीक्षितानां तु ग्रहीतव्यास्तु वैष्णवाः ।
अन्यभक्तद्विजाच्छ्रेष्ठो वैष्णवः श्वपचोऽपि वा ॥ ३२ ॥

त्रयो वा द्वौ तथैको वा [2]यद् ब्रूयुर्वैष्णवा नराः ।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥ ३३ ॥

1 नान्यभाक्‍ तेषु E

2 यद् ब्रूयुस्तेतरो A

उदितो व्यवहारस्तु वक्ष्ये जपविधिं ततः ।
जपस्तु त्रिविधो व्यक्तमुपांश्वपि च मानसम् ॥ ३४ ॥

व्यक्तं शतगुणं ज्ञेयमुपांशु स्यात् सहस्रकम् ।
अयुतं मानसं ज्ञेयं स्वराक्षरसमन्वितम् ॥ ३५ ॥

पुत्रजीवं च पद्माक्षं सुवर्णगुलिकानि च ।
कुशवन्धश्च[1] संप्रोक्ता गणना [2]जप एव तु ॥ ३६ ॥

शतं च पुत्रजीवेन पद्माक्षेण सहस्रकम् ।
ततः शतसहस्रं स्यात् सुवर्णगुलिकैर्जपः ॥ ३७ ॥

गर्भाधानादिका वक्ष्ये क्रियाः सर्वा यथाक्रमम् ।
ऋतुकाले रमेत् पत्नीमेकान्ते निर्जने नरः ॥ ३८ ॥

सुगुप्तामदिवास्वप्नां शरावनलभोजिनीम् ।
असूर्यदर्शनां चैव त्रिरात्रमुषितां सदा ॥ ३९ ॥

अर्धरात्रे तदिच्छायां बद्ध्वा नेत्रे तु वाससा ।
कृत्वा चैवाग्निसंस्कारं दक्षिणे चोपवेश्य ताम् ॥ ४० ॥

षोडशाज्याहुतीर्हुत्वा सूक्तेन पुरुषेण च ।
चक्राब्जमण्डले देवं निवेद्य चरुमादरात् ॥ ४१ ॥

ततः पुरुषसूक्तेन चरुहोमं विधाय च ।
तन्नेत्रावरणं[3] मुक्त्वा दर्शयेच्चक्रमण्डलम् ॥ ४२ ॥

[1] बद्धश्च A [2] जप्य A [3] चरणं A

जुहुयान्मूलमन्त्रेण द्वादशाक्षरविद्यया ।
प्राशयेद्धुतशेषं तु विष्णुगायत्रिया प्रियाम् ॥ ४३ ॥

आचामयित्वा तां पश्चादुपवेश्य यथापुरम् ।
अक्षिणी हृदयं नाभिं स्पृशेत् प्रसृतिमुद्रया ॥ ४४ ॥

जितं त इति तां मन्त्रं श्रावयेच्छ्रवणे शनैः ।
प्रणवत्रितयं तत्र स्थितं मन्त्रे त्रिदैवतम् ॥ ४५ ॥

प्रथमं हि सदाविष्णुर्महाविष्णुश्च मध्यमः ।
तृतीयश्च तथा विष्णुरेवं देवत्रयं स्थितम् ॥ ४६ ॥

उद्वास्य देवदेवेशमग्निं पश्चाद्विसर्जयेत् ।
मौनं समापयेत् पश्चादहःशेषं समापयेत् ॥ ४७ ॥

वहन् पुटं दक्षिणं तु यदा वहति मारुतः ।
गच्छेन्निशि तदा पत्नीं नारायणमनुस्मरन् ॥ ४८ ॥

गर्भाधानं भवेदेवं क्रमाद्भावगतं शुभम् ।
तृतीये मासि कुर्वीत पत्न्याः पुंसवनं शुभम् ॥ ४९ ॥

चरुं पुरुषसूक्तेन हुत्वा चैव शतं घृतम् ।
न्यग्रोधस्याङ्कुरं क्षुत्त्वा तस्या नासापुटे ततः ॥ ५० ॥

सेचयेद् दक्षिणे सम्यग् द्वादशाक्षरविद्यया ।
षष्ठके मासि सीमन्तं कुर्यान्मन्त्रविचक्षणः ॥ ५१ ॥

हुत्वा चैव स्रुवेणाज्यं प्रणवेन शताहुतिम् ।
कृसरस्याहुतीः पश्चादष्टावष्टाक्षरेण तु ॥ ५२ ॥

व्याहृतीमिश्चतसृभिः कुर्यात् तत्र त्रिशुक्लया ।
सीमन्तं कारयेन्मूर्ध्नि त्रिभिर्व्याहृतिभिः क्रमात् ॥ ५३ ॥

ततो विष्णुबलिं दद्यादष्टमे मासि साधकः ।
हुत्वा पुरुषसूक्तेन पायसं चरुमेव च ॥ ५४ ॥

तत्तन्मन्त्रेण तेभ्यस्तु क्रमादष्टौ बलीन् हरेत् ।
जितं त इति मन्त्रेण तस्यास्तु जठरं स्पृशेत् ॥ ५५ ॥

जाते तु तनये पश्चात् ततस्तत्प्राशनाच्छुचिः ।
ततो यवांश्च व्रीहींश्च सुवर्णेनावघृष्य च ॥ ५६ ॥

प्राशयित्वा च गायत्र्या हृदये तत् परामृजेत्[1] ।
आघ्राय मूर्ध्नि वै पश्चाद् द्वादशाक्षरविद्यया ॥ ५७ ॥

नाम गुह्यं ततो दद्याद् विष्णुनाम्ना तु किंचन ।
सूतकं तु दशाहं स्यात् तदन्ते नामकर्म च ॥ ५८ ॥

शतमाज्याहुतीर्हुत्वा द्वादशाक्षरविद्यया ।
श्रवणे भगवन्नाम्ना तं सुतं तु समाह्वयेत् ॥ ५९ ॥

पुण्याहं वाचयेत् तत्र वैष्णवैर्मन्त्रवित्तमैः ।
अथान्नप्राशनं कुर्यात् षष्ठे मासि यथाविधि ॥ ६० ॥

चरुहोमं ततः कृत्वा सूक्तेन पुरुषस्य ह ।
प्राशयेद्धुतशेषं तु विष्णुगायत्रिया ततः ॥ ६१ ॥

[1] परामृशेत् A

संवत्सरे तृतीये तु चौलकर्म समाचरेत् ।
हुत्वा शताहुतीश्चापि विष्णुगायत्रिया ततः ॥ ६२ ॥

केशान् दक्षिणपार्श्वस्थान् दर्भाङ्कुरसमन्वितान् ।
[1]क्षुरप्रेण ततः कृत्वा प्रणवेन समाहितः ॥ ६३ ॥

द्वादशाक्षरमन्त्रेण प्लुतानुष्णाम्बुना शनैः ।
गोमये विन्यसेत् पश्चात् त्रिरेवं तु चतुर्दिशम् ॥ ६४ ॥

क्लृप्तकेशं ततः कृत्वा नापितेन कुमारकम् ।
स्नापयेद्विष्णुमन्त्रेण कृत्वा च स्वस्तिवाचनम् ॥ ६५ ॥

चरुहोमं ततः कुर्याद् द्वादश द्वादशाक्षरैः ।
हुत्वा स्विष्टकृतं चापि वह्निं पश्चाद्विसर्जयेत् ॥ ६६ ॥

विप्रस्य पञ्चमे [2]वर्षे अष्टमे वोपनायनम् ।
नृपस्यैकादशे वर्षे द्वादशे तु विशस्तथा ॥ ६७ ॥

एषामा षोडशाद्वर्षादोपनायनिकक्रिया ।
वैदिकं तान्त्रिकं चैव तथा वैदिकतान्त्रिकम् ॥ ६८ ॥

वैदिकं ब्राह्मणानां तु राज्ञां वैदिकतान्त्रिकम् ।
तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकं तु वा ॥ ६९ ॥

स्त्रीशूद्राणां न सर्वेषामौपनायनिकक्रिया ।
दीक्षोपनयनं कर्म कृत्वा [3]सम्यग्यथाविधि ॥ ७० ॥

1 दर्पणेन ततः स्पृष्ट्वा A
2 A omits वर्षे to नायनम्
3 सम्यङ्मना विधि A

तान्त्रिका मूलमन्त्राः स्युस्तन्त्रमन्त्राः प्रकीर्तिताः ।
ततश्च विष्णुगायत्री ज्ञेया वैदिकतान्त्रिकी ॥ ७१ ॥

केवलैर्वैदिकैश्चैव मन्त्रैर्वैदिकमिष्यते ।
वैदिकेन यथाकामं क्षत्रियश्चापि चाचरेत् ॥ ७२ ॥

तान्त्रिकैरेव वैश्यस्तु प्रतिलोमं न चाचरेत् ।
होमं कुर्यात् स्वमन्त्रैस्तु अनुलोमैस्तु वा पुनः ॥ ७३ ॥

यज्ञोपवीतमन्त्रेण दद्याद्यज्ञोपवीतकम् ।
ब्राह्मणस्याजिनं त्वैणं रौरवं क्षत्रियस्य तु ॥ ७४ ॥

बास्ताजिनं च वैश्यस्य सर्वेषां त्वैणमेव वा ।
ब्राह्मणस्य तु पालाशं दण्डं कुर्याद्विचक्षणः ॥ ७५ ॥

बैल्वदण्डं नृपस्यापि वैश्यस्यौदुम्बरं तथा ।
गायत्रीं शिक्षयेत् पश्चाद् विष्णोश्च सवितुश्च ह ॥ ७६ ॥

ततश्छन्दांसि विधिवत् कुमारस्य विशिक्षयेत् ।
ततः कुर्याच्च गोदानं विवाहं च तथा पुनः ॥ ७७ ॥

ततश्च मृतसंस्कारः कर्तव्यो दीक्षितैः क्रमात् ।
मृतं प्रच्छाद्य वस्त्राभ्यां बद्ध्वाङ्गुष्ठं प्रयत्नतः ॥ ७८ ॥

अलंकृत्य यथान्यायं वाहयेद्वैष्णवैर्नरैः ।
श्मशाने चक्रमालिख्य तत्र कुर्याच्चितां पुनः ॥ ७९ ॥

चितामारोपयेत् पूर्वं शवं तु परमेष्ठिना ।
[1]पुंसा च दद्याच्चित्यां च विश्वेन च परिभ्रमेत् ॥ ८० ॥

निवृत्त्या दापयेदग्निं सर्वेणैव विसर्जयेत् ।
आशौचं तु दशाहं स्याद् ब्राह्मणस्य यथाविधि ॥ ८१ ॥

द्वादशाहं नृपस्यापि विशां पञ्चदशाहिकम् ।
मासं शूद्रस्य च प्रोक्तं ततः श्राद्धं समाचरेत् ॥ ८२ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां ब्रह्मरात्रे
समयाध्यायश्चतुर्थः

[1] घटेन A

# ब्रह्मरात्रे पञ्चमोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि वर्णाचारविधिक्रमम् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधाः ॥ १ ॥

विष्णोः शरीरजाता वै मुखबाहूरुपादतः ।
अत्रानुलोमजाः श्रेष्ठा वर्ज्याश्च प्रतिलोमजाः ॥ २ ॥

प्रतिलोमेषु सर्वेषु सूत एकस्तु गृह्यते ।
[1]न दातव्याः परे दीक्षां सर्वे च प्रतिलोमजाः ॥ ३ ॥

न च संस्कारमर्हन्ति वर्णाश्रमबहिष्कृताः ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ॥ ४ ॥

क्रमादाश्रमिणो ज्ञेया दीक्षिता विष्णुमण्डले ।
चातुर्वर्ण्यं पुनर्भिन्नं क्रमादेव पृथक् पृथक् ॥ ५ ॥

ब्रह्मचारी च लिङ्गी च शिष्यश्चैव ह्युपासकः ।
चतुर्विधास्तु संप्रोक्तास्तन्त्रेऽस्मिन् ब्रह्मचारिणः ॥ ६ ॥

दण्डाजिनधरो नित्यं वेदाध्ययनतत्परः ।
अक्षारलवणाशी च भैक्षाहारो मिताशनः ॥ ७ ॥

[1] न दातव्येतरे A

स्थण्डिलाजिनशायी च [1]देवाराधनतत्परः ।
गुरुपूजापरो नित्यं ब्रह्मचारी स उच्यते ॥ ८ ॥

एवं कर्माणि संत्यज्य भैक्षाहारो मिताशनः ।
शङ्खं चक्रं गदां शार्ङ्गं श्रीवत्सं कौस्तुभं तथा ॥ ९ ॥

वहन् प्रतिकृतिं कृत्वा वैनतेयमथापि वा ।
देवताराधने सक्तः स लिङ्गीति प्रकीर्त्यते ॥ १० ॥

भैक्षाहारो मिताहारी [2]गुरौ नित्यं च संयतः ।
शुश्रूषाभिरुपाध्यायं तोषयन् पूजयन् हरिम् ॥ ११ ॥

नान्यकार्यपरो नित्यं स शिष्यः परिकीर्तितः ।
त्रिसंध्यं पूजयन् देवं नान्यकार्यपरायणः ॥ १२ ॥

जपहोमादिनिरतो विहिताध्ययने रतः ।
कुर्वंस्त्रिषवणस्नानमष्टाक्षरपरायणः ॥ १३ ॥

गुरुं [3]चानुचरेद्यस्तु स उपासक उच्यते ।
व्रती गृहस्थश्चाढ्यश्च आचार्य इति च क्रमात् ॥ १४ ॥

गृहस्थाश्चात्र विज्ञेयास्तद्व्रतं कथयामि वः ।
व्रतोपवासनिरतो नियमेनार्चनापरः ॥ १५ ॥

[4]ऋतुगामी मिताहारो नक्तभोजी जितेन्द्रियः ।
स व्रतीति समाख्यातो मूलमन्त्रपरायणः ॥ १६ ॥

1 देवाराधन A    2 गुरुर्नित्यं च संहिताम् A    3 चानुचरन् A
4 C and D begin only with this line.

व्रतोपवासनिरतो[1] देवताराधने रतः[2] ।
संहिताध्ययने युक्तः[3] शिष्याणां भरणे रतः ॥ १७ ॥

स गृहस्थ इति ज्ञेयः स्वदारव्रतिको नरः ।
सर्वातिथिपरो नित्यं कामक्रोधविवर्जितः[4] ॥ १८ ॥

अन्नदानरतो भक्तः पर्वयाजी सुखान्वितः ।
देवोत्सवपरो नित्यं कामरागसमन्वितः ॥ १९ ॥

स चाढ्य इति विज्ञेयो भक्तानां [5]भरणे रतः ।
देवताराधने युक्तः प्रतिष्ठाकर्मकोविदः ॥ २० ॥

प्रयोगनिपुणो नित्यं यागे वैदिकतान्त्रिके ।
नित्ययाजी जितक्रोधः शिष्यानुग्रहकारकः ॥ २१ ॥

तन्त्रज्ञस्तन्त्रवक्ता च स च आचार्य उच्यते ।
वैखानसश्च तन्त्री च गुरुर्निष्कल एव च ॥ २२ ॥

चतुर्विधाः समाख्यातास्तन्त्रेऽस्मिन् वनवासिनः ।
अक्षारलवणाशी यः पुत्रदारसमन्वितः ॥ २३ ॥

आश्रमे वा गृहे वापि वसन्नित्यमतन्द्रितः ।
व्याख्याता संहितानां च नान्यकार्यपरायणः ॥ २४ ॥

स्थण्डिलाजिनशायी च सदा विष्णुपरायणः ।
ज्ञानध्यानपरो नित्यं स वैखानस उच्यते ॥ २५ ॥

1 निरतं A C D  2 रतम् A C D  3 युक्तम् C
4 विवर्जितम् C D  5 हरणे D

अग्राम्यैर्वर्तयन् [1]यात्रां त्रिसंध्यं चार्चने रतः ।
[2]तान्त्रिकैः केवलैर्मन्त्रैर्जपहोमपरायणः ॥ २६ ॥

वल्कलाजिनवासाश्च दर्भशय्यः स विष्णुभाक् ।
अष्टाक्षरपरो नित्यं स तन्त्रीत्यभिधीयते ॥ २७ ॥

यस्तु त्रिषवणस्नायी मुनिर्मूलफलाशनः ।
सदा त्वनियतावासः सर्वतीर्थनिषेवकः ॥ २८ ॥

अर्चयन् वै सदा विष्णुं सदा ध्यानपरायणः ।
द्वादशाक्षरतत्त्वज्ञो द्वादशाक्षरपाठकः ॥ २९ ॥

वल्कलाजिनवासाः स गुरुरित्यभिधीयते ।
अष्टाक्षरपरो नित्यं नक्तभोजी दृढव्रतः ॥ ३० ॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
वल्कलाजिनवासी च त्रिसंध्याराधने रतः ॥ ३१ ॥

अयाजकः कचिच्चापि न कचिच्च प्रतिग्रही ।
तुल्यनिन्दास्तुतिर्मौनी[3] समलोष्टाश्मकाञ्चनः ॥ ३२ ॥

स निष्कल इति ज्ञेयो [4]नान्यकार्यपरायणः ।
हंसः परमहंसश्च भगवान् प्रभुरेव च ॥ ३३ ॥

[5]चतुर्धैवं समुद्दिष्टास्तन्त्रेऽस्मिन् यतयः क्रमात् ।
शङ्खचक्रधरो नित्यमेकदण्डी च भैक्षभुक् ॥ ३४ ॥

[1] यत्नात् C [2] मातृकैः C [3] मानी C
[4] अनन्यकार्य C [5] चतुर्भिरेवम् C

सदाराधनसंयुक्तस्तन्त्रकर्मविचक्षणः ।
काषायाजिनवासास्तु शिखायज्ञोपवीतवान् ॥ ३५ ॥

स हंस इति विज्ञेय [1]एकचारी यतव्रतः ।
दण्डमेकं वहन्नित्यं ध्यानज्ञानपरायणः ॥ ३६ ॥

अद्वैतनिरतो नित्यं रागद्वेषविवर्जितः ।
[2]शिखां यज्ञोपवीतं च परित्यज्य निरुत्सुकः ॥ ३७ ॥

भैक्षभुङ् नियताहारो ब्रह्मचर्यव्रते स्थितः ।
स स्यात् परमहंसाख्यस्तन्त्रकर्मणि निष्ठितः ॥ ३८ ॥

शङ्खं चक्रं वहन्नित्यं ब्रसीं शिक्यं कमण्डलुम् ।
वासुदेवपरो नित्यं त्रिदण्डं योगपट्टिकाम् ॥ ३९ ॥

अष्टाक्षरपरो नित्यं भैक्षाशी नियतेन्द्रियः ।
भगवानिति विज्ञेयश्चरन् वै पृथिवीमिमाम् ॥ ४० ॥

एतान्येव वहन्नित्यमष्टाक्षरपरायणः ।
त्रिदण्डं धारयन्नित्यमुद्वहन् गरुडध्वजम्[3] ॥ ४१ ॥

शक्रयागेन[4] देवेशमर्चयन्नियतात्मवान् ।
त्रिसंध्याराधनरतः स प्रभुः परिकीर्तितः ॥ ४२ ॥

अयने विषुवे चैव संक्रान्तिद्वितयेऽपि च ।
द्वादश्यां श्रवणे चैव तथा जन्मनि पर्वणि ॥ ४३ ॥

1 एकाचर C
2 शिखा C
3 ध्वजः D
4 योगेन D

आर्द्रायां च नवम्यां च ग्राम्यधर्मं विवर्जयेत् ।
मत्स्यकूर्मवराहाणां न च मांसानि भक्षयेत् ॥ ४४ ॥

अर्चयित्वा प्रभुं देवं पूजयित्वातिथीनपि ।
भोक्तव्यं दीक्षितेनान्नं भक्ष्यं ज्ञात्वा यथाविधि ॥ ४५ ॥

मूलेन परिषिच्यान्नं ध्यात्वैव प्रणवेन च ।
यथावच्च पयः पीत्वा ध्यात्वा पुरुषमव्ययम् ॥ ४६ ॥

यस्तु वैश्वानरो नित्यं प्राणिनां देहमाश्रितः[1] ।
ज्योतिर्मयं सदाविष्णुं ध्यात्वैव प्रणवेन तु ॥ ४७ ॥

ततः प्राणाहुतीः कुर्यात् तस्मै पञ्चात्मने नमः ।
प्राणाय चेत्यपानाय तथा व्यानाय चैव हि ॥ ४८ ॥

उदानाय समानाय स्वाहेति जुहुयात् पृथक् ।
मौनी वाप्यथवामौनी प्रहृष्टः संयतेन्द्रियः ॥ ४९ ॥

वक्त्रमात्रं ग्रसेत् पिण्डं नातिरिक्तं कदाचन ।
न हसेन्नोद्विजेचापि न चोत्तिष्ठेत् कदाचन ॥ ५० ॥

न पाणिपादचपलो न वाक्चपल एव च ।
न जुगुप्सेत तच्चान्नं भुञ्जीयाच्छब्दवर्जितम् ॥ ५१ ॥

श्वानं रजस्वलां चापि चण्डालं वा वियज्ञकम् ।
काकं पाषण्डिनं वापि देवलं वापि कुक्कुटम् ॥ ५२ ॥

[1] आश्रितम् D

कारुकान् वा तदा पश्येदन्नं तत्तु विवर्जयेत् ।
स्नात्वा जलाशये पश्चात् पञ्चोपनिषदो जपेत् ॥ ५३ ॥

स्नानस्य तु विधिं वक्ष्ये यथावत् तन्निबोधत ।
वैदिकं तान्त्रिकं चापि द्विविधं स्नानमुच्यते ॥ ५४ ॥

वैदिकं वैदिके प्रोक्तं तान्त्रिकं कथयामि वः ।
मृत्तिकां गोमयं चैव कुशपुष्पतिलानपि ॥ ५५ ॥

यथालाभं तु संगृह्य स्नानार्थं प्रयतो व्रजेत् ।
कूपस्नानं न कुर्वीत तटाकादिषु सत्सु हि ॥ ५६ ॥

तेषां नाल्पाम्भसि स्नायात् स्थितेषु बहुवारिषु ।
एतेष्वपि च न स्नायात् सत्यां सरिति साधकः ॥ ५७ ॥

एतास्वपि च सर्वासु विशिष्टा स्यात् समुद्रगा ।
[1]तासामपि च सर्वासां सर्वाः प्राक्स्रोतसो वराः ॥ ५८ ॥

नदीनामपि सर्वासां [2]दक्षिणं तीरमुत्तमम् ।
प्रत्यङ्मुखस्रवन्तीनां यत्र चोदङ्मुखाः स्थिताः ॥ ५९ ॥

प्राक्तीरं तत्र तीर्थं स्यात् सर्वपापापनोदनम् ।
सुदूरमपि गन्तव्यं यत्र भागवतो जनः ॥ ६० ॥

तद्धि तीर्थं प्रशस्तं हि सर्वपापनिकृन्तनम् ।
कूपाद् दशगुणा वापी वाप्या दशगुणा नदी ॥ ६१ ॥

[1] D omits this line.   [2] दक्षिणान्तर D

नद्या दशगुणं स्नानमेवं विद्यात् समुद्रगा ।
तस्या दक्षिणतीरं तु तथैव प्राक्तटे फलम् ॥ ६२ ॥

स्नाने भागवताक्रान्ते फलमानन्त्यमश्नुते ।
फलमानं समालोच्य तोयतीरं समेत्य च ॥ ६३ ॥

तीरे मृद्गोमयादीनि समीक्ष्य स्थापयेत् पृथक् ।
प्रदक्षिणं परिक्रम्य प्रणम्याञ्जलिमुद्रया ॥ ६४ ॥

प्रणवेन प्रतिस्रोतः [1]प्रमज्जेत् स्नानमुद्रया ।
मृदं समालभेच्चापि सम्यक् कृत्वा विचक्षणः ॥ ६५ ॥

आदित्याभिमुखो मज्जेत् ततश्च परमेष्ठिना ।
गोमयं च समालभ्य प्रणवेन शनैः शनैः ॥ ६६ ॥

प्रतिस्रोतः पुनर्मज्जेत् त्रिभिर्मन्त्रेण चात्मना ।
आचम्य मूलमन्त्रेण कृत्वा न्यासं यथाविधि ॥ ६७ ॥

विश्वेनादित्यमालोक्य निवृत्त्याथ प्रणम्य च ।
सर्वेण दर्भानादाय सिञ्चेदम्बुनि केवलम् ॥ ६८ ॥

अपराजितया सिक्त्वा मूलमन्त्रेण चैव हि ।
अष्टाक्षरसहस्रं तु जपेदन्तर्जलं गतः ॥ ६९ ॥

जप्त्वाघमर्षणं चैव धौतवस्त्रद्वयेन च ।
आचम्य मूलमन्त्रेण कृत्वा न्यासं च पूर्ववत् ॥ ७० ॥

[1] प्रमृजेत् C

दर्भपाणिस्ततो भूत्वा दर्भासनगतः पुनः ।
मूलमन्त्रसहस्रं च जप्त्वा च जपमुद्रया ॥ ७१ ॥

सपुष्पं तोयमादाय प्रत्यादित्यं समुत्क्षिपेत् ।
व्योममुद्रां ततो बद्ध्वा सूर्यस्यैकाक्षरं जपेत् ॥ ७२ ॥

जप्त्वा द्वादशकृत्वश्च सूर्यमन्त्रं ततो जपेत् ।
जप्त्वाथ चतुरो मन्त्रांस्त्रिकृत्वश्च पृथक् पृथक् ॥ ७३ ॥

मुद्रादेवांस्तु चतुरः स्मृत्वा स्मृत्वा यथाक्रमम् ।
ईशानादि समारभ्य वायव्यान्तं समापयेत् ॥ ७४ ॥

ऐशान्यां तु घर्घोत्कश्च स्थितो मुद्राधिदैवतः ।
ऋग्विधाना तथाग्नेय्यामर्किमर्त्यौ च नैर्ऋते ॥ ७५ ॥

महाश्वेतश्च वायव्यां नामैषां मन्त्रमुच्यते ।
प्रणवादिनमोऽन्तांश्च जप्त्वैवं चतुरः क्रमात् ॥ ७६ ॥

[1]ततः प्रदक्षिणीकृत्य मुद्रयाष्टाक्षरेण च ।
ऊर्ध्वबाहुस्ततो भूत्वा सूर्यमीक्षेत् समाहितः ॥ ७७ ॥

जपेद्वै विष्णुगायत्रीमष्टाक्षरमथापि वा ।
द्वादशाक्षरमन्त्रं च शतकृत्वः पृथक् पृथक् ॥ ७८ ॥

नारसिंहं ततो जप्त्वा परिक्रम्य प्रदक्षिणम् ।
सतिलैस्तर्पयेत् तोयैः सदर्भैश्च पितॄनपि ॥ ७९ ॥

1 मुखं D

[1]द्वितया द्वितयाः प्रोक्ता निवापसलिलक्रियाः[2] ।
देवानां पितरश्चापि प्रमीतपितरोऽपि च ॥ ८० ॥

सुतान् वैष्णवमातॄणां[3] तर्पयेच्च पृथक् पृथक् ।
एते चान्ये च जीवन्ति दक्षिणां दिशमाश्रिताः ॥ ८१ ॥

मृता ये मनुजादीनां पितरश्च पितामहाः ।
प्रपितापितरश्चोक्ता जलं कार्यं यथाविधि ॥ ८२ ॥

देवर्षिपितृकार्येण स्नानादस्ति फलं महत्[4] ।
तस्मात् सर्वप्रयत्नेन तर्पयेद् देवताः पितॄन् ॥ ८३ ॥

तेषु तृप्तेषु तृप्ताः स्युः पितरः प्रस्थितास्ततः ।
ततस्ताननृणान् सर्वांस्तर्पयेच्च विचक्षणः ॥ ८४ ॥

स्थिताश्चेत् तृप्तिमायान्ति स्वर्गे वा नरकेऽपि वा ।
[5]सुपुत्रेण गतिं यान्ति [6]विष्णुमन्त्रविपूजिताः ॥ ८५ ॥

तस्माद् दीक्षा प्रवेष्टव्या पितॄणामनृणाय च ।
सप्त पूर्वे प्रमुच्यन्ते समयस्थेन सूनुना ॥ ८६ ॥

आचार्यत्वं गतेनात्र किं पुनः फलमश्नुते ।
आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ॥ ८७ ॥

वैष्णवो नः कुले जातः स नः संतारयिष्यति ।
वक्ष्ये तर्पणमन्त्रांश्च पूर्वं देवपितॄनपि ॥ ८८ ॥

[1] द्वितयं द्वितयं D [2] क्रियाम् E [3] मन्त्राणां D
[4] क्वचित् D [5] सपुत्रेण D [6] विष्णुमन्त्रि A

तृप्यतां हव्यवाडग्निस्तृप्यतां सोम एव च ।
तृप्यतामर्यमाजोऽपि तृप्यतामर्यमापि च ॥ ८९ ॥

अग्निष्वात्ताश्च तृप्यन्तां तृप्यन्तां सोमपा अपि ।
तथा बर्हिषदश्चापि [1]तृप्यन्तामिति तर्पयेत् ॥ ९० ॥

पश्चाद्दपिपितॄन् सर्वांस्तर्पयामीति तर्पयेत् ।
आचार्यं चाप्युपाध्यायं शिष्यान् भ्रातॄन् पितॄन् क्रमात ॥ ९१ ॥

मातरं मातुलं चापि पितृव्यं श्वशुरं तथा ।
वित्तिशांस्तर्पयत्येव पितॄन् पितृविधानपि ॥ ९२ ॥

दर्शयित्वा महामुद्रास्तीर्थं पश्चाद्विसर्जयेत् ।
स्नानवस्त्रं विनिष्पीड्य संध्योपासनमारभेत् ॥ ९३ ॥

संध्यात्रयं समुद्दिष्टं तन्त्रेऽस्मिन् परमेष्ठिना ।
प्रातर्मध्याह्नसायाह्नो संध्यात्रितयमुच्यते ॥ ९४ ॥

विष्णुश्चोपास्यते प्रातः संध्यायां संयतेन्द्रियैः ।
महाविष्णुश्च मध्याह्ने पूज्यते पुरुषोत्तमः ॥ ९५ ॥

सायाह्ने च सदाविष्णुः [2]संधातृत्वेन पूज्यते ।
स्थित्वा चोपास्यते प्रातरुपविश्य च शेषयोः ॥ ९६ ॥

मन्त्रत्रयं समुद्दिष्टं संध्योपासनकर्मणि ।
प्रातश्च विष्णुगायत्री मध्याह्ने द्वादशाक्षरम् ॥ ९७ ॥

[1] तृप्यन्तां तत्र D

[2] संध्याव्याजेन D E

अष्टाक्षरं जपेत् सायं सर्वदाष्टाक्षरं तु वा ।
दर्भेषु दर्भपाणिः सन् ध्यात्वा पुरुषमव्ययम् ॥ ९८ ॥

ऋषिच्छन्दोविशेषं च ज्ञात्वा दैवतमेव च ।
बद्ध्वादौ जपमुद्रां च वहन्नप्यक्षमालिकाम् ॥ ९९ ॥

[1]ततः स्वयमृषिर्भूत्वा मनुदेवमनुस्मरन् ।
प्राणायामान् क्रमात् कृत्वा प्रणवेनैव साधकः ॥ १०० ॥

प्रणवः पञ्चमात्रः स्यात् प्राणायामे स्थितस्तु यः ।
मन्त्रस्थोऽपि तथाभूतस्त्रिमात्रोऽध्ययने स्थितः ॥ १०१ ॥

वेष्टितं तु जपेन्मन्त्रं प्रणवेनैव साधकः ।
राक्षसाश्चासुराश्चापि मन्त्रं गृह्णन्त्यवेष्टितम् ॥ १०२ ॥

तस्मात् सर्वप्रयत्नेन वेष्टयेत् प्रणवेन तु ।
वेष्टितानां तु बीजानां [2]शरीरन्यास इष्यते ॥ १०३ ॥

प्राङ्मुखः प्रातरेवं तु संध्योपासनमाचरेत् ।
मध्याह्ने प्राङ्मुखस्तिष्ठेत् सायं प्रत्यङ्मुखस्तथा ॥ १०४ ॥

संध्यां समापयेत पश्चाच्चक्रमन्त्रेण[3] साधकः ।
सूर्यमन्त्रैश्चतुर्भिस्तु त्रिकृत्वस्तु परिभ्रमेत् ॥ १०५ ॥

सूर्योपस्थानमेवं तु त्रिभिर्मन्त्रैस्तु मन्त्रवित् ।
विधिमाचमनस्याद्य प्रवक्ष्यामि यथातथम् ॥ १०६ ॥

[1] तत्र D [2] शारीर C [3] चन्द्रमन्त्रेण A

हस्ते तीर्थानि च ज्ञात्वा सदाचमनमारभेत् ।
अङ्गुष्ठमूलं ब्राह्मं तु तीर्थमित्यभिधीयते ॥ १०७ ॥

कायमङ्गुलिमूलं तु तीर्थमग्रं तु दैविकम् ।
पैतृकं हस्तमध्यं तु तीर्थं दक्षिणहस्तगम् ॥ १०८ ॥

पैतृकेण पिबेत् तोयं ततो ब्राह्मेण मार्जयेत् ।
दैविकेन स्पृशेदङ्गान्येषां तृप्तिं [1]यदीच्छति ॥ १०९ ॥

पितरस्तृप्तिमायान्ति पानेन प्रथमेन हि ।
पितामहो द्वितीयेन अन्त्येन प्रपितामहः ॥ ११० ॥

मार्जनेनाथ पूर्वेण ब्रह्मतीर्थेन तत्र तु ।
प्रजापतिर्द्वितीयेन त्रयस्तुष्टा इति स्मृताः ॥ १११ ॥

चक्षुषोः स्पृष्टयोस्तृप्तिं चन्द्रादित्यौ प्रयास्यतः ।
नासिकापुटयोस्तृप्तिं स्पृष्टयोर्याति वै त्रयी ॥ ११२ ॥

अश्विनौ गच्छतस्तृप्तिं स्पृष्टयोः कर्णयोरथ ।
तृप्यन्ति भुजयोः शैला नाभौ विष्णुरिति श्रुतिः ॥ ११३ ॥

हृदये च महाविष्णुः सदाविष्णुश्च मूर्धनि ।
अङ्गुष्ठानामिकाभ्यां तु चक्षुषी समुपस्पृशेत् ॥ ११४ ॥

अङ्गुष्ठतर्जनीभ्यां तु स्पृशेन्नासापुटावपि ।
श्रोत्रेऽङ्गुष्ठकनिष्ठाभ्यां बाहू चाङ्गुष्ठकेन च ॥ ११५ ॥

[1] यदिच्छति A

नाभिं मध्यमया स्पृष्ट्वा चतुर्भिर्हृदयं ततः ।
पञ्चभिश्चैव मूर्धानं स्पृष्ट्वा स्पृष्ट्वा पयः स्पृशेत् ॥ ११६ ॥

एवमाचमनं प्रोक्तं सर्वकर्मसु सर्वदा ।
आचार्यपरिचर्यार्थं मया चाद्य प्रवक्ष्यते ॥ ११७ ॥

समयी पुत्रकश्चापि साधकश्च तथापरः ।
आचार्य इति चत्वारश्चतुराश्रमिणः क्रमात् ॥ ११८ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
एषु सर्वेषु चत्वारः समयिप्रमुखास्तथा ॥ ११९ ॥

दीक्षामात्रं प्रविष्टा ये केवले समये स्थिताः ।
अतन्त्रज्ञा अदेवार्चास्ते वै समयिनः स्मृताः ॥ १२० ॥

दीक्षितानां तु सर्वेषां पुत्रवद्ये प्रतिष्ठिताः ।
दीक्षां प्रविष्टा निर्ग्रन्थाः पुत्रकास्ते प्रकीर्तिताः ॥ १२१ ॥

साधको मन्त्रतत्त्वज्ञस्तन्त्रपाठे विचक्षणः ।
देवताराधने सक्तः सर्वदा तत्परायणः ॥ १२२ ॥

कर्माणि साधयेन्नित्यं देवपूजाभिरेव च ।
स साधक इति प्रोक्तस्तन्त्रमन्त्रविशारदः ॥ १२३ ॥

व्याख्याता तन्त्रमन्त्राणां संहितानां च सर्वतः ।
संस्कर्तापि च शिष्याणामाचार्यः सोऽभिधीयते ॥ १२४ ॥

सर्वेषां समयस्थानां साधकस्तु विशिष्यते ।
साधकानां तु सर्वेषामाचार्यस्तु विशिष्यते ॥ १२५ ॥

साधकाचार्ययोरेवं प्रायेणाचार उच्यते ।
[1]व्याख्यानं श्रवणं चापि जपं च स्तवमेव च ॥ १२६ ॥

कुर्यात् संभाषणं चापि शब्दतन्मात्रविद्यया ।
चरून् पुरुषसूक्तेन भोज्यं पेयं तथैव च ॥ १२७ ॥

लेह्यं चापि तथा कुर्याद्रसतन्मात्रविद्यया ।
गन्धपुष्पादिदानं च आदानं च निवेदनम् ॥ १२८ ॥

कुर्याद् गन्धानुलेपं च गन्धतन्मात्रविद्यया ।
आचार्यं च गुरुं ध्यायेद् दैवतं परमं गुरुम् ॥ १२९ ॥

तदुक्तान्येव कर्माणि सर्वाण्येव समाचरेत् ।
अनिवेद्य तु तं किंचिन्नावश्यकमपि त्यजेत् ॥ १३० ॥

प्रधानान्यपि कर्माणि तदर्थं तु समाचरेत् ।
छायेवानुगतो भूत्वा तमेवानुचरेत् सदा ॥ १३१ ॥

पादौ निपीड्य तस्यैव शयानं चानुसंविशेत् ।
न पादसेवनं कुर्यान्न देवप्रतियातने ॥ १३२ ॥

न भास्करे न वा वह्नौ न सोमे नोदकाशये ।
न च भागवते चैव न धान्ये नापि संविशेत् ॥ १३३ ॥

उत्थायानुगुणं चात्र ध्यात्वा नारायणं प्रभुम् ।
दक्षिणेनैव पादेन भूमिं पूर्वमवष्टभेत् ॥ १३४ ॥

[1] व्याख्याता C

नमस्ते प्रियदत्तायै देव्यै चेत्यभिधाय तु ।
निर्गच्छेद् गृहतः [1]प्रातः प्रायः प्रागुदयाद्रवेः ।
आचारानाचरन्नेवं सदाविष्णुपुरं व्रजेत् ॥ १३५ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां ब्रह्मरात्रे
वर्णाचारविधिः पञ्चमोऽध्यायः

[1] प्रायः प्रातः C

# ब्रह्मरात्रे षष्ठोऽध्यायः

अथातः संप्रवक्ष्यामि प्रतिष्ठाविधिमुत्तमम् ।
देवतायतनस्याग्रे कुर्यान्मण्डपमादितः ॥ १ ॥

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ।
यागमण्डपमात्रं वा दशहस्तं तु वा पुनः ॥ २ ॥

मानेन यच्च संप्रोक्तं प्रमाणं यागमण्डपे ।
तदेवात्र प्रमाणं स्यादुत्तमाधममध्यमम् ॥ ३ ॥

सर्वतश्चार्द्रशाखाभिर्निश्छिद्रं कारयेद्बहिः ।
तोरणानां च केतूनां कलशानां तथैव च ॥ ४ ॥

दौवारिकाणां नामानि पूर्वोक्तान्येव मण्डपे ।
प्रासादमभितश्चापि वेष्टयेन्मण्डपं तथा ॥ ५ ॥

तत्रापि कारयेत् सम्यङ् निश्छिद्रं पटलैः क्रमात् ।
पूर्वोक्तमण्डपे चैव षोडशस्तम्भसंयुते ॥ ६ ॥

कुर्यात् तस्मिंश्चतुस्तम्भां मध्ये शयनवेदिकाम् ।
दशतालेन विस्तीर्णां तावदायामसंयुताम् ॥ ७ ॥

चतुरश्रां समां स्निग्धामेकहस्तसमुच्छ्रिताम्
तस्याः कुर्याच्चतुर्दिक्षु वह्न्यायतनानि च ॥ ८ ॥

प्राग्भवेच्चतुरश्रं तु धनुर्वक्रं तु दक्षिणे ।
वृत्तं पश्चिमभागे तु त्रिकोणं चोत्तरे तथा ॥ ९ ॥

तेषां द्वितालं विस्तारस्तावद्गर्तस्य निम्नता ।
त्रितालं वेदिकायास्तु दूरीभूतानि सर्वतः ॥ १० ॥

प्रासादमभितः कुर्याच्चतुरश्राणि सर्वशः[1] ।
अष्टावायतनान्येव दिक्ष्वष्टासु यथाक्रमम् ॥ ११ ॥

तेषां त्रितालविस्तारमेकैकं प्रति तालकम् ।
अकृष्णशाराः कलशा अभिन्नाः शब्दसंयुताः ॥ १२ ॥

सम्यक् पक्वाः समाः सर्वे वितस्त्याथ समुच्छ्रिताः[2] ।
कर्णे त्र्यङ्गुलं प्रोक्तं द्व्यङ्गुलमथापि वा ॥ १३ ॥

अङ्गुलं वक्त्रवलयं द्व्यङ्गुलमथापि वा ।
उत्सेधमानविस्तारं कलशानां प्रचक्षते[3] ॥ १४ ॥

शयनं त्रिविधं प्रोक्तं क्षौमं कार्पासिकं तथा ।
ऊर्णामयं च तत् सर्वं व्याघ्रचर्मोत्तरच्छदम् ॥ १५ ॥

क्षौमोत्तरच्छदं वापि यथावित्तानुसारतः ।
शयनं वेदिकामध्ये कल्पयेन्मन्त्रवित्तमः ॥ १६ ॥

कर्मार्चा स्थापनार्चेति द्विविधा परिकीर्तिता ।
[4]यत्कृता प्रतिमा पूर्वप्रासादे मृन्मयादिभिः ॥ १७ ॥

[1] सर्वतः C
[2] सौधमुच्छ्रिताम् C
[3] प्रशस्यते C
[4] देवताप्रतिमा C

सा स्थापनार्चा विज्ञेया रत्नन्यासोपरि स्थिता ।
अन्या तु लोहजा [1]यात्र सा कर्मार्चेति कीर्तिता ॥ १८ ॥

कर्मार्चास्नपनार्थं तु तस्य वै मण्डपस्य ह ।
ऐशान्यां मण्डपं कुर्याच्चतुःस्तम्भसमन्वितम् ॥ १९ ॥

वेदिकां तत्र कुर्वीत हस्तविस्तारसंयुताम् ।
वितस्तिमात्रमुत्सेधं स्नानपीठसमन्वितम् ॥ २० ॥

उत्तरे वेदिकायास्तु श्वभ्रं स्याद्धस्तमाननः ।
चतुरङ्गुलविस्तारा कुल्या स्याद्वेदिकोपरि ॥ २१ ॥

कुल्यां तां श्वभ्रपतितामविच्छिन्नां तु कारयेत् ।
एवं च मण्डपे सर्वं कारयित्वा विचक्षणः ॥ २२ ॥

वितानवस्त्रसंछन्नमलंकारैरलंकृतम् ।
अक्षतैर्विविधैर्गन्धैः फलैश्च विविधैः शुभैः ॥ २३ ॥

मण्डपं तमलंकृत्य यथालाभमितस्ततः ।
दामानि लम्बयेत् तत्र तोरणेष्वपि सर्वशः ॥ २४ ॥

ततश्चतुर्विधातोद्यं वादयेन्मण्डपाद्बहिः ।
अवनद्धं घनं चैव ततं सुषिरमेव च ॥ २५ ॥

अवनद्धं मृदङ्गादि चर्मणाव्रियते तु यत् ।
घनं तालादि संप्रोक्तं ततं तन्त्रीकृतं भवेत् ॥ २६ ॥

[1] धात्रा

सुषिरं चापि वंशादि चतुर्विधमुदाहृतम् ।
नास्तिकान् भिन्नमर्यादान् देवब्राह्मणदूषकान् ॥ २७ ॥

पाषण्डिनश्च तद्भक्तान् पाषण्डाजीवकानपि ।
दीक्षाबहिष्कृतांश्चापि दूरमुत्सारयेत् ततः ॥ २८ ॥

आरभेताथ कर्माणि मन्त्रवद्भिः यथाविधि ।
वैदिकं तान्त्रिकं चैव तथा वैदिकतान्त्रिकम् ॥ २९ ॥

त्रिविधं कर्म संप्रोक्तं प्रतिष्ठाराधनादिषु ।
वैदिकं ब्राह्मणानां तु राज्ञां वैदिकतान्त्रिकम् ॥ ३० ॥

तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकं तु वा ।
गन्धतोयेन संपूर्णान् सूत्रेण परिवेष्टितान् ॥ ३१ ॥

सरत्नान् सपिधानांश्च मुखे साश्वत्थपल्लवान् ।
अष्टौ तु कलशांस्तत्र द्वौ द्वौ वारि विनिक्षिपेत् ॥ ३२ ॥

ऋचेदं विष्णुरित्येवं विन्यसेत् कलशान् पृथक् ।
प्रागादि चोत्तरान्तं तु तथाष्टाक्षरयुक्तया ॥ ३३ ॥

अष्टाक्षरेण विन्यस्य धान्यराशौ पृथक् पृथक् ।
अष्टदिक्षु तथा चाष्टौ सूत्रेण परिवेष्टितान् ॥ ३४ ॥

अष्टाक्षरेण विन्यस्य इन्द्राद्येव प्रदक्षिणम् ।
अक्षतैर्विकिरेच्चापि प्रणम्याञ्जलिमुद्रया ॥ ३५ ॥

प्रत्यगायतनं चापि तथा द्वादश निक्षिपेत् ।
पूर्वभागे तु सर्वेषां यथोद्दिष्टक्रमेण तु ॥ ३६ ॥

पालिकाश्च तथा न्यस्य प्रत्यगायतनं क्रमात् ।
ततः स्नपनवेद्याश्च पश्चिमे कलशान् न्यसेत् ॥ ३७ ॥

मण्डपं चतुरश्रं तु लिप्त्वालंकृत्य चाक्षतैः ।
तत्र सप्तदशाभिन्नान् [1]कलशान् पूरयेत् क्रमात् ॥ ३८ ॥

मध्यमं तु पदं ब्राह्मं ततश्चावरणद्वयम् ।
प्रत्यावरणमष्टौ तु कलशाः परिकीर्तिताः ॥ ३९ ॥

यवोदकान्ताः पाद्याद्यास्तत्र सप्तदश क्रमात् ।
बहिरावरणे पूर्वे पाद्यं तु विनिवेशयेत् ॥ ४० ॥

अर्घ्यं तु दक्षिणे न्यस्य प्रत्यगाचमनीयकम् ।
उत्तरे पञ्चगव्यं तु घृतमाग्नेयगोचरे ॥ ४१ ॥

नैर्ऋते दधि विन्यस्य वायव्ये क्षीरमेव च ।
ऐशाने मधु विन्यस्य व्यस्तैरष्टाक्षरैः पृथक् ॥ ४२ ॥

अन्तरावरणे प्राच्यां कषायं विनिवेशयेत् ।
उष्णाम्भो दक्षिणस्यां च पश्चिमे रत्नमेव च ॥ ४३ ॥

फलोदकं चोत्तरस्यामाग्नेये लोहमेव च ।
नैर्ऋत्यां मार्जनं चैव वायव्ये गन्धतोयकम् ॥ ४४ ॥

ऐशाने चाक्षतान् न्यस्य ब्रह्मभागे यवोदकम् ।
स्नपनार्थं विधिं चैव कृत्वा तन्त्रविचक्षणः ॥ ४५ ॥

[1] पूरयेत्कलशान् पृथक् C

कर्मार्चां वाप्यथावाच्यां विन्यसेत् स्नानपीठके ।
एकबेरविधानं चेत् प्रथमार्चां निवेशयेत् ॥ ४६ ॥

अश्मना मणिना वापि लोहैर्वा क्रियते तु या ।
[1]ब्राह्मे च स्थाप्यते सा तु एकबेरविधिर्भवेत् ॥ ४७ ॥

मृन्मयी प्रतिमा या तु पूर्वोक्ता यापि काष्ठजा ।
दैविके स्थाप्यते चेत् सा बहुबेरविधिर्भवेत् ॥ ४८ ॥

बहुबेरविधौ सन्ति परिवारा यथाक्रमम् ।
एकबेरविधाने तु केवलं प्रतिमा भवेत् ॥ ४९ ॥

लिङ्गस्य स्थापनायां चाप्येष एव विधिक्रमः ।
लिङ्गं तु त्रिविधं प्रोक्तं ब्राह्मं शांकरमेव च ॥ ५० ॥

वैष्णवं च त्रिदैवं च चतुर्थं परिकीर्तितम् ।
मूलस्थूलं भवेद् ब्राह्मं शिरःस्थूलं तु शांकरम् ॥ ५१ ॥

वैष्णवं समवृत्तं च धारालिङ्गं तथैव च ।
धाराकुल्याश्च कर्तव्या एकबेरविधौ सति ॥ ५२ ॥

बहुबेरविधाने तु न च निर्माल्यकुल्यका ।
कर्मार्चा बहुबेरे तु गृह्यते लोहसंभवा ॥ ५३ ॥

प्रतिमां स्थापयित्वाथ प्रागग्रेषु कुशेषु च ।
प्रत्यृचं कलशं गृह्य षोडशावरणद्वये ॥ ५४ ॥

[1] ब्रह्मार्चा C

दद्यात् पुरुषसूक्तेन पाद्यादि क्रमयोगतः ।
पाद्यादीनां तु सर्वेषां सर्वाण्येव सविस्तरम् ॥ ५५ ॥

द्रव्याणि [1]स्नपनाध्याये शिवरात्रे प्रवक्ष्यते ।
ऋचा प्रथमया पाद्यं दद्यान्मन्त्रविचक्षणः ॥ ५६ ॥

द्वितीयया ततश्चार्घ्यमाचामं तु तृतीयया ।
चतुर्थ्या पञ्चगव्यं च पञ्चम्या घृतमेव च ॥ ५७ ॥

दधि षष्ठ्याथ सप्तम्या पयोऽष्टम्या मधु क्रमात् ।
नवम्या तु कषायाम्भो दशम्योष्णोदकं तथा ॥ ५८ ॥

एकादश्या च [2]रत्नाम्भो द्वादश्या च फलोदकम् ।
लोहतोयं त्रयोदश्या चतुर्दश्या च मार्जनम् ॥ ५९ ॥

पञ्चदश्या च गन्धाम्भः षोडश्याक्षतवारि च ।
यवोदकं ततो दद्यान्मानस्तोक्या च साधकः ॥ ६० ॥

[3]अष्टाक्षरं तु वै दद्यात् केवलाष्टाक्षरेण वा ।
कृत्वैवं स्नपनं पश्चाद् बीजमुद्रां च दर्शयेत् ॥ ६१ ॥

पुण्याहं वाचयेत् पश्चाद् वैष्णवैर्मन्त्रवित्तमैः ।
हिरण्यं वाथ वस्त्रं वा तिला वा दक्षिणा भवेत् ॥ ६२ ॥

चतुर्भिरष्टभिर्वापि ततो द्वादशभिस्तु वा[4] ।
आचार्यो वैष्णवैः सार्धमर्चां वस्त्रैस्तु वेष्टयेत् ॥ ६३ ॥

1 स्नापनाध्याये C
2 रत्नाम्भः C
3 अष्टाक्षरान्तं A
4 तथा C

सूत्रं दद्याच्च हैरण्यं कटिसूत्रं च दापयेत् ।
सौवर्णं कुसुमं चापि सौवर्णं कटिसूत्रकम् ॥ ६४ ॥

दत्त्वा देवाय गन्धादि कृत्वा च स्वस्तिवाचनम् ।
तैः सार्धं वेदिकामध्ये शयने संनिवेशयेत् ॥ ६५ ॥

जयशब्दादिनादैश्च क्ष्वेलिकास्फोटितैरपि ।
नृत्तैर्गेयैश्च वाद्यैश्च नादयित्वा दिशो दश ॥ ६६ ॥

अत्राष्टमङ्गलान्येवमष्टदिक्षु निवेशयेत ।
शङ्खं चक्रं पताकां च श्रीवत्सं दर्पणं वृषम् ॥ ६७ ॥

मत्स्ययुग्म च कुम्भं च मङ्गलानि प्रचक्षते ।
लोहजान्येव कुर्वीत अलाभे काष्ठजानि तु ॥ ६८ ॥

कलशानां च देवस्य मध्ये मध्ये यथादिशम् ।
इन्द्रादीशानपर्यन्तं स्थापयित्वा प्रदक्षिणम् ॥ ६९ ॥

एकं कुम्भं तु निर्दोषं सूत्रेण परिवेष्टितम् ।
अश्वत्थपल्लवच्छन्नं तोयपूर्णं सरत्नकम् ॥ ७० ॥

देवस्य दक्षिणे पार्श्वे विन्यसेच्चान्यपूर्वकम् ।
तोरणानि च केतूंश्च कलशांश्च पृथक् पृथक् ॥ ७१ ॥

पूजयेद् गन्धपुष्पाद्यैः प्रत्येकं तु स्वनामभिः ।
अष्टौ विद्येश्वराः पूज्या वेदिकाकलशेष्वपि ॥ ७२ ॥

प्राच्यामादिवराहस्तु नारसिंहश्च दक्षिणे ।
प्रतीच्यां श्रीधरो देवो हयवक्त्रस्तथोत्तरे ॥ ७३ ॥

[1]आग्नेये भार्गवो रामो नैर्ऋते राम एव च ।
वामनश्चापि वायव्ये वासुदेवस्तथैश्वरे ॥ ७४ ॥

स्वनाम्ना पूजयित्वैतान् कलशेषु पृथक् पृथक् ।
ब्रह्माणं च [2]महाकुम्भे स्वनाम्ना पूजयेत ततः ॥ ७५ ॥

पूजयेद्विष्णुगायत्र्या मातृविद्याभिरेव च ।
कर्मार्चां शयनस्थां वा कर्मार्चां स्वयमर्चयेत् ॥ ७६ ॥

हारकेयूरकटकब्रह्मसूत्रप्रलम्बनैः[3] ।
वस्त्रैश्चित्रैरलंकुर्यात् स्वां स्वां मुद्रां च दर्शयेत् ॥ ७७ ॥

मथित्वा पूर्वमन्त्राग्निं[4] कृत्वा चैव क्रियास्तथा ।
आरभेद्धोमकर्मापि चतुर्ष्वायतनेषु च ॥ ७८ ॥

मूर्तयस्तन्मयाः प्रोक्ताश्चत्वारः क्रमयोगतः ।
[5]पूर्वाग्निर्वासुदेवाख्यो दक्षिणाग्निश्च कर्षणः ॥ ७९ ॥

प्रद्युम्नः पश्चिमाग्निः स्यादनिरुद्धस्तथोत्तरः ।
मूर्तिधारा इति प्रोक्ता होतारस्तु चतुर्विधाः ॥ ८० ॥

स्वनाम्ना जुहुयुश्चैतान् समिदाज्यचरूंस्तथा ।
अष्टोत्तरशतं चैव प्रत्येकं तु पृथक् पृथक् ॥ ८१ ॥

चतुर्ष्वग्निषु संप्रोक्ताः समिधश्च चतुर्विधाः ।
पालाशाः खादिराश्चापि बैल्वा औदुम्बरास्तथा ॥ ८२ ॥

1 आग्नेय्यां C 2 हरिं कुम्भे C 3 प्रपूजनैः C
4 अन्त्राग्निं C 5 C omits three lines from here.

आज्यं चतुर्विधं प्रोक्तं यागाध्याये यथाविधि ।
चरूंश्चतुर्विधानत्र प्रवक्ष्यामि यथातथम् ॥ ८३ ॥

पायसं कृसरं गौडं हरिद्रान्नं चतुर्विधम् ।
यथासंख्यक्रमेणैव हुत्वाग्निषु यथाविधि ॥ ८४ ॥

चतुर्भिर्विविधैर्भक्ष्यैः पायसैश्च गुडौदनैः ।
निवेद्य देवदेवेशमुत्थाप्य प्रणवेन ह ॥ ८५ ॥

हरिद्रान्नैरपूपैश्च कृसरैश्च बलिं हरेत् ।
पायसं भोजयेद् भक्तान् वैष्णवान् द्वादश क्रमात् ॥ ८६ ॥

कारयेच्छान्तिहोमं च [1]मूर्तीर्ध्यायेद्यथाविधि ।
मधुना पयसा दध्ना हूयते यद् घृतेन च ॥ ८७ ॥

शान्तिहोमः समुद्दिष्टः स्थापनादिषु कर्मसु ।
कुर्यात् पुरुषसूक्तेन प्रत्यृचं षोडशाहुतीः ॥ ८८ ॥

मधुहोमं तु पूर्वत्र पयोहोमं तु दक्षिणे ।
पश्चिमे दधिहोमं च घृतहोमं तथोत्तरे ॥ ८९ ॥

हुत्वा स्पृशेयुः प्रतिमां मूलमन्त्रेण ते क्रमात् ।
मधु हुत्वा स्पृशेत् पादं क्षीरं हुत्वोदरं स्पृशेत् ॥ ९० ॥

दधि हुत्वा च वदनं हुत्वाज्यं च शिरः स्पृशेत् ।
पूर्णाहुतिमथाचार्यः कुर्याद्वै पश्चिमेऽनले ॥ ९१ ॥

[1] मूर्तीर्ध्यात्वा C

हुत्वाथ सर्वगात्राणि स्पृशेत् प्रसृतिमुद्रया ।
सिञ्चेदद्भिर्यथादिकं[1] वेदिकाकलशेष्वथ ॥ ९२ ॥

पलाशशाखया सिञ्चेत् प्राच्यां पूर्वं समाहितः ।
दक्षिणस्यां ततः सिञ्चेत् खदिरस्य तु शाखया ॥ ९३ ॥

सिञ्चेत् समूर्तिधाराश्च प्रतीच्यां बिल्वशाखया ।
उदुम्बरस्य चोदीच्यां सिञ्चेदेवं[2] तु शाखया ॥ ९४ ॥

आचार्यः कोणदेशेषु सिञ्चेद्वनसशाखया ।
सर्वे च विष्णुगायत्र्या सिञ्चेयुर्मुष्टिमुद्रया ॥ ९५ ॥

रक्षामुद्रां तथा कृत्वा दर्शयेयुः समन्ततः ।
ततश्च दर्भशय्यायां यजमानं तु शाययेत् ॥ ९६ ॥

एवं कृत्वाधिवासं च प्रभाते विधिनैव च ।
कृत्वा वेतसशाखाभिर्बहिरन्तश्च मार्जनम् ॥ ९७ ॥

सिक्त्वाथ गन्धतोयेन विनिष्क्रम्याथ तैरपि ।
प्रासादस्याष्टदिग्भागेष्वष्टौ होमांश्च कारयेत् ॥ ९८ ॥

समिधोऽष्टविधास्तत्र प्रोच्यन्ते होमकर्मणि ।
पालाशखादिराश्वत्थप्लाक्षन्यग्रोधबैल्वकाः ॥ ९९ ॥

औदुम्बराश्च काश्मर्यः समिधोऽष्ट प्रकीर्तिताः ।
अष्टोत्तरशतं त्वेताः प्रत्येकं समिधः स्मृताः ॥ १०० ॥

[1] यथाधिक्यं C [2] एव C

अग्नयो लोकपालास्ते स्वासु स्वास्वेव दिक्षु च ।
तन्नामान्येव मन्त्राः स्युः स्वाहान्तानि यथातथम् ॥ १०१ ॥

तथा घृतचरूणां चाप्यष्टोत्तरशतं हुनेत् ।
अष्टोत्तरशतं हुत्वा सूक्तेनाष्टाक्षरेण वा ॥ १०२ ॥

मिश्रितं वा घृतं हुत्वा केवलं प्रणवेन वा ।
गुडाज्यमधुसंमिश्रमष्टोत्तरशतं पुनः ॥ १०३ ॥

रत्नन्यासं ततः कुर्याद् गर्भाधानविधानतः ।
एकबेरविधानं चेत् सद्यः कुर्याद्विचक्षणः ॥ १०४ ॥

बहुबेरविधानं चेच्चूडाकाले कृतं भवेत् ।
महाकुम्भार्चनं कृत्वा गन्धपुष्पैः प्रदक्षिणम् ॥ १०५ ॥

जिनं त इति मन्त्रेण कलशं चोद्धरेद् बुधः ।
प्रतिमां मूर्तिधारास्तु चोद्धरेयुरनन्तरम् ॥ १०६ ॥

मङ्गलान्युद्धरेयुश्च दिशाहोमकरास्ततः ।
शलाकामात्रया चैव धारयाच्छिन्नया पुनः ॥ १०७ ॥

सेचयेदुद्धरन् कुम्भमाचार्यस्त्वग्रतो व्रजेत् ।
प्रतिमामुद्वहन्तो वै मूर्तिधारास्त्वनन्तरम् ॥ १०८ ॥

अन्तरा गमनं न स्यात् प्रतिमाचार्ययोस्तदा ।
तथैव मूर्तिधारास्ते गच्छेयुश्चैव संयुताः ॥ १०९ ॥

अभितस्तं समायान्ति सर्वे मङ्गलधारकाः ।
ततः शाकुनसूक्तादीन् पठन्तो ब्राह्मणाः सह ॥ ११० ॥



यान्ति चैव यथाकामं पश्चान्मङ्गलधारिणः ।
वाग्यतो यजमानश्च कुशहस्तप्रणामवान् ॥ १११ ॥

विप्राणां पृष्ठतो यायादितरे तस्य पृष्ठतः ।
साग्निं प्रदक्षिणीकृत्य देवागारमिति क्रमात् ॥ ११२ ॥

अनुधारापथं देवं देवागारं प्रवेशयेत् ।
जपंस्तु विष्णुगायत्रीं मूलमन्त्रद्वयं तथा ॥ ११३ ॥

स्थापयेत् प्रतिमां पश्चान्मूलमन्त्रमनुस्मरन् ।
स्थापनास्थापना चैव तथा संस्थापनेति च ॥ ११४ ॥

प्रस्थापना प्रतिष्ठेति प्रतिष्ठापञ्चकं विदुः ।
स्थितां तु प्रतिमां पश्चात् स्थापयेत् परमेष्ठिना ॥ ११५ ॥

स्थापना सा समाख्याता सर्वशान्तिकरी शुभा ।
आसीनां स्थापयेत् पुंसा सा चास्थापनसंज्ञिता ॥ ११६ ॥

विश्वेन शयिनां चापि सा च संस्थापना मता ।
निवृत्त्या यानगां चापि सा च प्रस्थापना भवेत् ॥ ११७ ॥

चरा तु प्रतिमा ज्ञेया यावाहोद्वासनान्विता ।
देवालये गृहे वापि कर्मार्चान्या प्रकीर्तिता ॥ ११८ ॥

तासां प्रतिष्ठा या प्रोक्ता सर्वा च क्रियते पुनः ।
सा प्रतिष्ठापना ज्ञेया सर्वासां वक्ष्यते विधिः ॥ ११९ ॥

कर्मार्चामर्चनापीठे स्थापयित्वा यथाविधि ।
धारावशिष्टं यत् तोयं तच्छरावे निषिच्य च ॥ १२० ॥

शलाकामात्रया चैव धारयाच्छिन्नया पुनः ।
परितः परिषेकं च कुर्याद्वै मूलमन्त्रतः ॥ १२१ ॥

मूलेन प्रतिमान्यासं कुर्यान्मन्त्रविचक्षणः ।
स्थिते कुर्यात् स्थितिन्यासमासीने सृष्टिसंज्ञितम् ॥ १२२ ॥

शयने संहृतिन्यासं त्रितयं यानगे पुनः ।
कृत्वा तथात्मनि न्यासं ततो ध्यानं समारभेत् ॥ १२३ ॥

प्राणायामं समासीनः कुर्यादभिमुखं विभोः ।
ध्यायेच्च प्रतिमादेहे नाडीचक्रं यथाविधि ॥ १२४ ॥

तत्सर्वमृषिरात्रे तु योगाध्याये प्रवक्ष्यते ।
अत्र तूद्देशमात्रं च कथयामि यथातथम् ॥ १२५ ॥

द्वासप्ततिसहस्राणि नाडयः परिकीर्तिताः ।
दश प्रधानास्तासां तु वायवश्च तथा दश ॥ १२६ ॥

इडा च पिङ्गला चैव सुषुम्ना च तथा परा ।
गान्धारी हस्तिजिह्वा च पूषा च सुयशास्तथा ॥ १२७ ॥

अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता ।
प्राणोऽपानः समानश्च व्यानश्चोदान एव च ॥ १२८ ॥

नागश्च कूर्मः कृकरो देवदत्तो धनंजयः ।
वायवो दश संप्रोक्ता नाडीषु दशसु क्रमात् ॥ १२९ ॥

नाभिर्मूलं भवेत् तासां नाडीनां कन्दवत् स्थिता ।
वायुभिस्ताश्च पूर्यन्ते कुम्भ्यन्ते ताश्च मात्रया ॥ १३० ॥

रेच्यन्ते च यथायोगं प्राणायामैस्तथैव च ।
आत्मनि त्रितयं कुर्याद् देवे पूरककुम्भकौ ॥ १३१ ॥

पूरके नाडयः सर्वाः पूर्यन्ते नात्र संशयः ।
ततो हृदयपद्मं च विकासमुपयास्यति ॥ १३२ ॥

कुम्भकेन निरुद्धं तु भवेदूर्ध्वमुखस्थितम् ।
एवं पूरककुम्भौ तु कृत्वा देवे यथाविधि ॥ १३३ ॥

सदाविष्णुं ततो ध्यात्वा निष्कलं तु निरञ्जनम् ।
तेजोमयं परं ज्योतिस्तमसः परमव्ययम् ॥ १३४ ॥

आनीय प्रणवेनाथ आत्मपद्मे निवेशयेत् ।
निरुध्यात् प्रणवेनैव सर्जीवो जायते तथा ॥ १३५ ॥

शरावस्थेन तोयेन प्रोक्षयेत् परमेष्ठिना ।
एवमास्थापनादीनां [1]क्रिया भवति मन्त्रतः ॥ १३६ ॥

बीजमुद्रां ततः कृत्वा निरुध्य प्रणवेन च ।
प्रोक्षयेत् परिवारांश्च ततः प्रणवमुद्रया ॥ १३७ ॥

विष्णुश्चापि महाविष्णुरुभौ च प्रतिमागतौ ।
प्रतिमा सा क्रियाहीना विष्णुः स्यात् प्रतियातनम् ॥ १३८ ॥

प्रतिष्ठाकर्मसंयुक्तो महाविष्णुर्न संशयः ।
विष्णुश्चैव महाविष्णुस्तौ वै [2]पूज्यौ च कर्मणि ॥ १३९ ॥

1 क्रियापदमिदं ततः A

2 पूज्यश्च A

सकलस्तु भवेद्विष्णुरन्यः सकलनिष्कलः ।
निष्कलस्तु सदाविष्णुस्तस्य रूपं न विद्यते[1] ॥ १४० ॥

प्रतिष्ठाप्य महाविष्णुमेवं च विधिनैव तु ।
साङ्गावरणमभ्यर्च्य गन्धपुष्पैर्यथाविधि ॥ १४१ ॥

पायसं कृसरं गौडं शुद्धान्नं च चतुर्विधम् ।
निवेदयेच्चतुर्दिक्षु पादपीठस्य शक्तितः ॥ १४२ ॥

ततश्चण्डप्रचण्डौ तु देवौ दौवारिकावुभौ ।
शङ्खचक्रधरौ वीरौ नरसिंहसुतावुभौ ॥ १४३ ॥

उत्तरे दक्षिणे चैव स्थितौ द्वारि गदाधरौ ।
प्रोक्षयेन्मूलमन्त्रेण ततः प्रणवमुद्रया ॥ १४४ ॥

गरुत्मन्तं ततः प्रोक्ष्य लोकपालांस्तथैव च ।
निवेद्य शेषमेतेभ्यः क्रमेणैव निवेदयेत् ॥ १४५ ॥

अष्टदिक्षु बलिं दत्त्वा बलिपीठे बलिं हरेत् ।
दत्त्वाथाचमनं कृत्वा तन्निर्माल्यं व्यपोह्य च ॥ १४६ ॥

विष्वक्सेनप्रतिष्ठां च कृत्वा तत्र विनिक्षिपेत् ।
स्नानं कृत्वाथ विधिवत् प्रणम्याञ्जलिमुद्रया ॥ १४७ ॥

दक्षिणां दापयेत् पश्चात् तेभ्यो ये वैष्णवाः स्थिताः ।
स्नपनं विधिवत् कृत्वा वस्त्राभरणभूषणम् ॥ १४८ ॥

1 विधीयते A

क्षुरिकां बन्धयेद् देवे पुण्याहं तत्र कारयेत् ।
सूचीमुद्रां ततः पश्चाद् दर्शयेच्च विचक्षणः ॥ १४९ ॥

शङ्खतूर्यनिनादैश्च नादयित्वा दिशो दश ।
आचण्डालान्तमन्नाद्यं तत्र कुर्याद्विचक्षणः ॥ १५० ॥

एवं पुराणे जीर्णे च क्रिया स्यात् प्रतियातने ।
आचार्यं पूजयेत् पश्चाद् ग्रामयानासनादिभिः ।
वस्त्रैराभरणैश्चित्रैर्विविधैश्चानुलेपनैः ॥ १५१ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां ब्रह्मरात्रे
प्रतिष्ठाविधिः षष्ठोऽध्यायः

# ब्रह्मरात्रे सप्तमोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि प्रतिमाविधिमुत्तमम् ।
शिलामयी लोहमयी तथा रत्नमयीति च ॥ १ ॥

तथा काष्ठमयी चेति मृन्मयी चेति पञ्चधा ।
चतुर्वर्णा शिला प्रोक्ता [1]चातुर्वर्ण्यक्रमेण तु ॥ २ ॥

ब्राह्मणस्य सिता ज्ञेया रक्ता वै क्षत्रियस्य तु ।
वैश्यस्य पीता संप्रोक्ता कृष्णा शूद्रस्य चोच्यते ॥ ३ ॥

पर्वते तु शिला ग्राह्या तदलाभे तु [2]भूतले ।
गुल्मवृक्षसमाकीर्णे बहूदकतृणान्विते ॥ ४ ॥

पद्मोत्पलवनाकीर्णे व्रीहिक्षेत्रसमावृते ।
हिन्तालतालन्यग्रोधनालिकेरसमावृते ॥ ५ ॥

पलाशक्रमुकाश्वत्थपिप्पलोदुम्बराकुले ।
कुशदर्भसमाकीर्णे देशे ग्राह्याः सदा शिलाः ॥ ६ ॥

नदीतीरे ह्रदतटे ग्राममध्ये चतुष्पथे ।
भूतिभूमौ श्मशाने च चण्डालशबरोषिते ॥ ७ ॥

[1] चतुर्वर्णसमावृत C

[2] भूगता C

वातातपाग्नितप्ते च तथा च जनदूषिते ।
शर्करोत्करसंयुक्ते निस्तृणे जलवर्जिते ॥ ८ ॥

[1]मरुप्रायेषु देशेषु कण्टकिद्रुमसंकुले ।
गोमायुवृकभूयिष्ठे गृध्रर्क्षश्येनसंकुले[2] ॥ ९ ॥

पक्षिसर्पसमाकीर्णे म्लेच्छदेशे च भीषणे ।
ग्रामोपान्ते च वल्मीके वर्जनीयाः शिलाः सदा ॥ १० ॥

अथ पुण्ये तु नक्षत्रे शकुनाद्यनुकूलतः ।
आचार्यः शिल्पिभिः सार्धं नवाम्बरधरः शुचिः ॥ ११ ॥

प्रतिमार्थं तु निर्गच्छेत् प्राङ्मुखो वाप्युदङ्मुखः ।
शिला यदि तु संपश्येद् भूगताः शुभलक्षणाः ॥ १२ ॥

तां दक्षिणोत्तरायामां प्रत्यक्प्रागायतां तु वा ।
पुण्याहं वाचयित्वा तु परिभ्रम्य प्रदक्षिणम् ॥ १३ ॥

प्राङ्मुखस्तु नमस्कुर्यात् [3]ततः श्रीवत्समुद्रया ।
पूर्णकुम्भांस्तथा चाष्टावष्टदिक्षु च विन्यसेत् ॥ १४ ॥

शिलायां ब्रह्मकलशं[4] गन्धादिभिरलंकृतम् ।
अश्वत्थपल्लवच्छन्नं स्थापयेत् परमेष्ठिना ॥ १५ ॥

तस्याष्टदिक्षु वै दद्यादक्षतान् पुरुषात्मना ।
ततो [5]विश्वात्मबीजेन रत्नान्यन्तर्विनिक्षिपेत् ॥ १६ ॥

[1] C omits this line. [2] श्वानसंकुले C
[3] तत्र C [4] कलशे A. E [5] विश्वेन C

ततो निवृत्तिबीजेन परिषेकं समाचरेत् ।
चक्रिकां च सदा भद्रां ततः सर्वात्मना न्यसेत् ॥ १७ ॥

[1]दर्शयित्वा महामुद्रां प्रणम्याञ्जलिमुद्रया ।
पश्चिमे दर्भशय्यायामासीनोऽधिवसेद् गुरुः ॥ १८ ॥

अष्टदिक्षु पताकाश्च स्थापयित्वा यथाक्रमम् ।
अपनीय जनान् सर्वानिमं मन्त्रमुदीरयेत् ॥ १९ ॥

अश्वत्थो ब्राह्मणो राजा विष्णुरूपाणि चैव हि ।
अदर्शनेऽपि गृह्णीयात् विपरीते निवर्तयेत् ॥ २० ॥

कलशान् प्रातरुद्वास्य शिल्पिभिः खानयेद् भुवम् ।
सर्वेण च बलिं दत्त्वा स्पृशेत् पुंसा ततः शिलाम् ॥ २१

सूत्रपातं ततः कुर्याद् ग्राहयेच्छिल्पिभिः शिलाम् ।
त्रिविधाश्च शिलाः प्रोक्तास्तन्त्रे पुंस्त्रीनपुंसकाः ॥ २२ ॥

विवरावर्तरहिता सुस्निग्धा ग्रन्थिवर्जिता ।
व्यक्तवर्णैकशब्दा च सा पुमानिति कीर्तिता ॥ २३ ॥

वरवर्णा लघुः स्निग्धा स्वच्छा शीता मृजावती ।
मृदुस्वना शिला प्रोक्ता स्त्रीति तन्त्रविचक्षणैः ॥ २४ ॥

सिरामण्डलसंयुक्ता शरावोदरकर्कशा ।
शब्दहीनातिखर्वा च सा नपुंसकसंज्ञिता ॥ २५ ॥

1 अर्चयित्वा C

या पुंलिङ्गशिला प्रोक्ता तया तु प्रतिमा भवेत् ।
अतो नपुंसकाख्यां च रत्नन्यासाय कल्पयेत् ॥ २६ ॥

स्त्रीलिङ्गेति च या प्रोक्ता सा भवेत् पादपीठिका ।
शिलायाश्च शिरो ज्ञात्वा कारयेत् प्रतिमां ततः ॥ २७ ॥

[1]कांस्यघण्टाध्वनिर्यत्र तच्छिलायाः शिरो भवेत् ।
प्रासादे प्राङ्मुखी स्थाप्या प्राक्शिराः प्रतिमा ततः ॥ २८ ॥

तथैव दक्षिणग्रीवा दक्षिणद्वारवेश्मनि ।
तथैव पश्चिमग्रीवा पश्चिमद्वारवेश्मनि ॥ २९ ॥

तथैव चोत्तरग्रीवा उत्तरद्वारवेश्मनि ।
प्राग्द्वारे दक्षिणग्रीवा प्रासादे प्रतिमा भवेत् ॥ ३० ॥

तथैव चोत्तरग्रीवा प्रत्यग्द्वारे च शस्यते ।
प्रासादयुक्त्या प्रतिमा कर्तव्या तन्त्रवित्तमैः ॥ ३१ ॥

प्रतियातनयुक्त्या वा प्रासादं तु समारभेत् ।
अत्र तु प्रतिमायामः पञ्चधा परिकीर्तितः ॥ ३२ ॥

प्रासादगर्भभागार्धसमायामा समा भवेत् ।
पञ्चभागीकृते तत्र त्रिभागैर्मध्यमा भवेत् ॥ ३३ ॥

त्रिभागीकृतगर्भे तु द्विभागा चोत्तमा भवेत् ।
प्रासादायामश्च कर्तव्यो द्वारायामस्तथैव च ॥ ३४ ॥

1 कांस्यतुल्यध्वनिः C

प्रतिमा नवहस्तान्ता त्वेकहस्तादिरुच्यते ।
अत ऊर्ध्वं न कुर्वीत हीनां वापि कदाचन ॥ ३५ ॥

कालयोगप्रमाणेन कर्तव्या प्रतिमा तथा ।
त्रिविधं प्रतिमाकर्म शास्त्रज्ञाः संप्रचक्षते ॥ ३६ ॥

चित्रं चाप्यर्धचित्रं च चित्राभासं तथैव च ।
दृश्यन्तेऽवयवा यस्याः प्रतिमायाः समन्ततः ॥ ३७ ॥

मानोन्मानप्रमाणा हि सा चित्रमिति कीर्तिता ।
शिलागताया यस्यास्तु पृष्ठभागो न दृश्यते ॥ ३८ ॥

मानप्रमाणसंयुक्ता सार्धचित्रमिति स्मृता ।
या स्थितालेख्यरूपेण लिखिता वापि शिल्पिभिः ॥ ३९ ॥

मानप्रमाणसंयुक्ता सा चित्राभासमुच्यते ।
उत्तमं तु फलं चित्रे मध्यमं चार्धचित्रके ॥ ४० ॥

आलेख्ये त्वधमं प्रोक्तं प्रतिमाकर्मणि क्रमात् ।
चतुर्विधं किरीटाख्यमस्मिंस्तन्त्रे मया श्रुतम् ॥ ४१ ॥

छत्राण्डपद्मकूर्माणां कुर्यादाकारमन्ततः ।
शान्तिदं पद्मसंकाशं कूर्माकारं [1]शुभप्रदम् ॥ ४२ ॥

छत्राकारं तु वा कुर्यादथवा कुक्कुटाण्डवत् ।
श्रीकरं छत्रसंकाशमण्डाकारं सुखप्रदम् ॥ ४३ ॥

[1] प्रजाप्रदम् C

पद्माकारं तु वा केचित् कूर्माकारं तु वा पुनः ।
प्रवदन्ति किरीटान्तं शेषमन्यद् विवर्जयेत् ॥ ४४ ॥

प्रणीते तु महान् दोषः कर्तुः कारयितुर्भवेत् ।
पदपद्मं भवेत् फुल्लमष्टपत्रं सकर्णिकम् ॥ ४५ ॥

द्वाराष्टभागविस्तारं तावदुत्सेधसंयुतम् ।
तस्य नालं तु वृत्तं [1]वा चतुरश्रं तु वा भवेत् ॥ ४६ ॥

वृत्तं शिवात्मकं प्रोक्तं ब्राह्मं स्याच्चतुरश्रकम् ।
आयामोऽत्र तु यावान् स्यात् तावांश्चात्र[2] [3]प्रशस्यते ॥ ४७ ॥

रत्नन्यासस्पृगेव स्यान्नान्यथा नालमिष्यते ।
ततः पादशिलायाश्च च्छिद्रं तन्नाभिमानतः ॥ ४८ ॥

चतुरश्रं तु वा वृत्तं [4]तद्युक्तां कारयेद् बुधः ।
स्थाने चैष विधिः प्रोक्त आसीने कथयामि वः ॥ ४९ ॥

गर्भागारचतुर्भागः पादपद्मस्य चोच्छ्रयः ।
तावदायामविस्तारः शेषं सर्वं तु पूर्ववत् ॥ ५० ॥

न चैष शयने याने विधिरुक्तः कदाचन ।
तत्र चैव शिलादोषाः प्रवक्ष्यन्ते यथाविधि ॥ ५१ ॥

सिराश्च विवराश्चैव आवर्ता ग्रन्थयस्तथा ।
मण्डलानि तथा गर्भा रूक्षताश्चेति सप्त वै ॥ ५२ ॥

[1] तु C
[2] तावन्नाहः C
[3] प्रवक्ष्यते C
[4] तद्युक्तं C

शिलादोषाः समाख्याताः सर्वसंपद्विनाशनाः ।
अधिकं चैव हीनं च स्फुटितं वक्रमेव च ॥ ५३ ॥

स्थूलं चैव कृशं चैव सुषिरं चेति सप्त वै ।
वदन्ति प्रतिमादोषाञ्छास्त्रेऽस्मिंस्तन्त्रवित्तमाः ॥ ५४ ॥

अत्र दोषफलं वक्ष्ये शिलासु प्रतिमासु च ।
सिरायां [1]संपदां नाशो विवरे राष्ट्रविग्रहः ॥ ५५ ॥

आवर्ते चापि दुर्भिक्षं ग्रन्थौ स्याद्राष्ट्रविप्लवः ।
मण्डले सर्वदोषास्तु गर्भे सर्वजनक्षयः ॥ ५६ ॥

रूक्षतायां धनापायः कर्तुः कारयितुर्भवेत् ।
अधिके तु भवेद् व्याधिर्हीने चैव धनक्षयः ॥ ५७ ॥

स्फुटिते प्राणनाशस्तु कर्तुः कारयितुर्भवेत् ।
वक्रे तु सर्वसंतापः स्थूले व्याधिर्भविष्यति ॥ ५८ ॥

कृशेऽपि च कृशं द्रव्यं सुषिरे स्वामिनाशनम् ।
प्रतिमा द्विविधा प्रोक्ता सौम्याग्नेयीति संज्ञिता[2] ॥ ५९ ॥

सौम्यायां तु भवेत् प्रीतिः प्रतिमा श्रीविवर्धनी ।
आग्नेय्यां तु भवेदुष्णं सा दारिद्र्यविवर्धनी ॥ ६० ॥

सौम्या तु वैष्णवी ज्ञेया आग्नेयी शांकरी मता ।
तस्मात् सौम्यैव कर्तव्या आग्नेयी न कदाचन ॥ ६१ ॥

1 स्यन्दनारोग्यं A; स्यन्दनायोध्यः C　　　2 संज्ञया A E

संकीर्णेति च शुद्धेति अत्रापि प्रतिमाद्वयम् ।
एकवर्णा भवेच्छुद्धा संकीर्णा वर्णमिश्रिता ॥ ६२ ॥

शुद्धैव प्रतिमा ग्राह्या संकीर्णा तदलाभतः ।
अनुलोमं तु गृह्णीयात् प्रतिलोमं विवर्जयेत् ॥ ६३ ॥

शुक्ले रक्तं च गृह्णीयात् रक्ते पीतं तथैव च ।
पीते चैव तथा कृष्णं कृष्णे सर्वं विवर्जयेत् ॥ ६४ ॥

चत्वारो यत्र वर्णाः स्युस्तां शिलां परिवर्जयेत् ।
दृष्ट्वैव तानि सर्वाणि परिच्छेत्तुं न शक्यते ॥ ६५ ॥

गर्भेणान्तर्गतेनैव[1] तस्माद्गर्भं वदामि वः ।
शिलायां यत्र दृश्यन्ते मण्डलानि यथाक्रमम् ॥ ६६ ॥

तानि द्विविधवर्णानि तत्र गर्भं विनिर्दिशेत् ।
मण्डले रक्तवर्णे तु रक्तपांसुं विनिर्दिशेत् ॥ ६७ ॥

श्वेतपद्मसमे चैव श्वेतपांसुं विनिर्दिशेत् ।
स्निग्धे तु कपिले कूर्मं रूक्षे फेनकमेव च ॥ ६८ ॥

[2]कपोतसदृशे वर्णे निर्दिशेद् गृहगोलिकाम् ।
मञ्जिष्ठसदृशे वर्णे निर्दिशेद्रक्तदर्दुरम् ॥ ६९ ॥

शुकपिञ्जरवर्णे तु [3]रक्तपीते च कच्छपः ।
कुसुम्भपीतवर्णे तु तत्र स्यात् पीतदर्दुरः ॥ ७० ॥

[1] गर्भे चैव C [2] कपाल C [3] रक्ते पीते C

शुक्लपीतनिभे वर्णे तत्र स्यात् कृकलासकः ।
अपां सदृशवर्णे तु गोधां तत्र विनिर्दिशेत् ॥ ७१ ॥

गुडवर्णे तु पाषाणः[1] खद्योतो मधुवर्णके ।
सारङ्गसदृशे वर्णे वृश्चिकं तु विनिर्दिशेत् ॥ ७२ ॥

निस्त्रिंशवर्णे सलिलं नीले तु शकलं तथा ।
रूक्षे तु मूषिको ज्ञेयः कृष्णे कृष्णाहिरेव च ॥ ७३ ॥

शष्पश्यामे तथा मत्स्यमिन्द्रगोपं मधुप्रभे ।
शान्तिहोमं ततः कुर्याद् गर्भाणां दर्शने तदा ॥ ७४ ॥

न कुर्याद्गर्भसंयुक्तां प्रतिमां लोभमोहितः ।
क्रियते यदि वा मोहाज्जगन्नाशयतेऽखिलम् ॥ ७५ ॥

लोहं तु त्रिविधं प्रोक्तं तन्त्रेऽस्मिन् प्रतिमाविधौ ।
सुवर्णं रजतं ताम्रं यथावित्तानुसारतः ॥ ७६ ॥

सुवर्णं द्विविधं प्रोक्तं जातरूपं च हाटकम् ।
जातरूपं प्रशस्तं स्यात् तदलाभे तु हाटकम् ॥ ७७ ॥

द्विविधं रजतं चोक्तं[2] रूप्यं रजतमित्यपि ।
रूप्यमत्र प्रशस्तं स्यात् तदलाभे तु राजतम् ॥ ७८ ॥

ताम्रं च द्विविधं प्रोक्तं शुल्वमौदुम्बरं तथा ।
शुल्वं तत्र प्रशस्तं स्यात् तदलाभे उदुम्बरम् ॥ ७९ ॥

[1] पाषाणे C    [2] प्रोक्तं C

अत्र च द्विविधं प्रोक्तं शुद्धं मिश्रितमेव च ।
शुद्धमेव प्रशस्तं स्यात् तदलाभे तु मिश्रितम् ॥ ८० ॥

शुल्बमौदुम्बरं चैव मिश्रितं तु विवर्जयेत् ।
अत्रापि वर्जयेत् कुप्यं[1] मृदाद्यैः शिल्पिभिः कृतम् ॥ ८१ ॥

अर्धचित्रं न कुर्वीत लोहजे तु विचक्षणः ।
सुवर्णं रजतं ताम्रं ब्राह्मणानां विशिष्यते ॥ ८२ ॥

रजतं चैव ताम्रं च क्षत्रियस्य विशस्तथा ।
ताम्रमेव तु शूद्राणां सर्वेषां ताम्रमेव[2] वा ॥ ८३ ॥

लोहजाः प्रतिमाः सर्वा निर्दोषाः समुदाहृताः ।
त्रिविधा मणिजा चाथ सौम्याग्नेयी समेति च ॥ ८४ ॥

चन्द्रकान्तमयी सौम्या आग्नेयी सूर्यकान्तजा ।
समा स्फटिकजा प्रोक्ता पूर्वा पूर्वा गरीयसी ॥ ८५ ॥

अर्धचित्रं च चित्रं च चित्राभासं तथैव च ।
त्रितयं मणिजं कुर्यात् फलं पूर्वोक्तमेव च ॥ ८६ ॥

शिलानामिव वृक्षाणां भूमिभागो विधीयते ।
[3]कटुकण्टकिनो वृक्षा वर्जनीयाः प्रयत्नतः ॥ ८७ ॥

भुग्ना भग्नाः प्रभिन्नाश्च भिन्नशाखा गतत्वचः ।
शुष्का दग्धाः क्षता घृष्टा [4]दक्षिणाप्रवणास्तथा ॥ ८८ ॥

[1] कुम्भं A. C. E
[2] लोहमेव C
[3] गन्ध C
[4] दक्षिण A

उत्कीर्णाः क्रिमिदुष्टाश्च संकीर्णाः पक्षिसेविताः ।
ग्रामे चैत्ये च जाता ये वर्जनीयास्त्वनेकशः ॥ ८९ ॥

चन्दनश्चागरुश्चैव सालः खदिर एव च ।
मधूको देवदारुश्च तमालः पनसस्तथा ॥ ९० ॥

लिकुचश्चैव शाकश्च काश्मर्यो हरिचन्दनः ।
कदम्बस्तिलको बिल्वो नमेरुः फलिनी तथा ॥ ९१ ॥

सुरभिश्चैव नागश्च चम्पकः स्तबकस्तथा ।
शिंशुपा च तथा श्यामा बीजकः कुरुविन्दकः ॥ ९२ ॥

केसरः कुरवश्चैव कुटजश्चासनस्तथा ।
राजादनः शिरीषश्च प्रतिमार्थमुदाहृताः ॥ ९३ ॥

सारवन्तस्तु संग्राह्या ये चान्ये दोषवर्जिताः ।
शिलायामिव वृक्षेषु [1]गर्भाः प्रोक्ता यथाविधि ॥ ९४ ॥

चित्रं चाप्यर्धचित्रं च वृक्षे कुर्यान्न चापरम् ।
सर्वासामपि चैतासां पादपद्मं तु पूर्ववत् ॥ ९५ ॥

लोहस्फटिककाष्ठानां प्रतिमानां यथाविधि ।
पादपीठं तु शैलं स्याद्रत्नजानां तु लोहजम् ॥ ९६ ॥

मृन्मयीं प्रतिमां वक्ष्ये सर्वसंपत्प्रसाधिनीम् ।
शुक्ला रक्ता च पीता च कृष्णा चेति चतुर्विधा ॥ ९७ ॥

[1] गर्भः प्रोक्तो C

शूद्रस्योक्ता तु कृष्णैव कृष्णा पीता विशस्तथा[1] ।
कृष्णा पीता च रक्ता च क्षत्रियस्य प्रकीर्तिता ॥ ९८ ॥

कृष्णा पीता च रक्ता च शुक्ला स्याद्विप्रजन्मनः[2] ।
अनुलोमं तु गृह्णीयात् प्रतिलोमं विवर्जयेत् ॥ ९९ ॥

मिश्रितं वर्जयेच्चैव वर्णसंकरदूषितम् ।
नदीसंगमतीर्थेषु देवनायतनेषु च ॥ १०० ॥

क्षेत्रे च पर्वताग्रे च मृदं गृह्य यथाविधि ।
गर्तं कृत्वा निखातेषु स्थापयेत् तत्र मृत्तिकाम् ॥ १०१ ॥

लोहपाषाणचूर्णं तु शर्कराचूर्णमेव च ।
मृत्तिकायाश्चतुर्थांशं क्षिपेद्भागक्रमेण तु ॥ १०२ ॥

खादिरं चार्जुनं चैव कषायं तत्र सेचयेत् ।
कषाये सर्वमालोड्य मासं तत्रैव वासयेत् ॥ १०३ ॥

[3]कुङ्कुमं चैव कुष्ठं च श्रीवेरं कटुकत्रयम् ।
मृत्तिकायां यथालाभं श्लक्ष्णं चूर्णीकृतं न्यसेत् ॥ १०४ ॥

तदप्यालोड्य मासं तु तत्रैव परिवासयेत् ।
ततो गर्भगृहे पीठं कुर्याच्छूलसमन्वितम् ॥ १०५ ॥

हस्तमात्रां भुवं खात्वा पञ्चगव्येन सेचयेत् ।
नपुंसकशिलायां तु स्थापयेत् परमेष्ठिना ॥ १०६ ॥

1 विशां तथा C
2 द्विजन्मनाम् C
3 C omits three lines from here.

रत्नादि विन्यसेत् तत्र ततः पुंसा पृथक् पृथक् ।
वज्रमौक्तिकवैडूर्यप्रवालस्फटिकादिकान्[1] ॥ १०७ ॥

चन्द्रकान्तं महानीलं ब्रह्मरागं तथैव च ।
पूर्वस्यां दिशि वज्रं तु दक्षिणस्यां तु मौक्तिकम् ॥ १०८ ॥

[2]पश्चिमायां तु वैडूर्यमुत्तरस्यां तु विद्रुमम् ।
आग्नेय्यां स्फटिकं चैव नैर्ऋत्यां पुष्यकं तथा ॥ १०९ ॥

वायव्यां चन्द्रकान्तं च नीलमीशानगोचरे ।
मध्यमे ब्रह्मरागं च विन्यस्यैवं प्रदक्षिणम् ॥ ११० ॥

विघ्नेन प्रोक्षयेत् तोयैस्ततः प्रणवमुद्रया ।
निवृत्त्या चाक्षतांस्तत्र [3]यथादिक्षु च विन्यसेत ॥ १११ ॥

तत्र पादशिलां चैव ततः सर्वेण विन्यसेत् ।
वृत्तं वा चतुरश्रं वा पादपीठं तु तद्भवेत् ॥ ११२ ॥

प्रतिमायां शिलामध्यां शिलां चैव विनिक्षिपेत् ।
शिलायामुपरिष्टात्तु शेषाणां पीठकल्पना ॥ ११३ ॥

भवेत् पादशिलायां तु शूलार्थे सुषिरद्वयम् ।
इष्टकाभिस्ततः कुर्यात् पीठिकां तु शिलोपरि ॥ ११४ ॥

उत्सेधश्चापि चायामो भूमिभागप्रमाणतः ।
द्वाराष्टभागमथवा पादाष्टकमथापि वा ॥ ११५ ॥

[1] पुष्यकादिकान् A [2] पश्चिमस्यां C [3] यथादीक्षं C

प्रतिमाष्टांशभागं वा पादपीठप्रमाणतः ।
वृत्तं वा चतुरश्रं वा पादपीठं यथा भवेत् ॥ ११६ ॥

वृत्ते वा चतुरश्रे वा पद्मं चोपरि कारयेत् ।
स्थाने तु पीठिका प्रोक्ता आसने द्विगुणा भवेत् ॥ ११७ ॥

उत्सेधश्चापि चायामस्तत्र पद्मासने समम् ।
तथानन्तासने चैव वृत्तमेव भविष्यति ॥ ११८ ॥

पीठिका किंचिदायामा चतुरश्रा तथोच्छ्रिता ।
सिंहासने तु सा प्रोक्ता सिंहैश्च विविधैर्वृता ॥ ११९ ॥

शयने तावदुत्सेधः प्रतिमायामसंमितः ।
प्रासादे गर्भभागं तु सप्तधा परिकल्पयेत् ॥ १२० ॥

ब्राह्मं तु मध्यमं भागं दैविकं तदनन्तरम् ।
तृतीयं मानुषं चैव पैशाचं चापरं विदुः ॥ १२१ ॥

एकबेरविधिः प्रोक्तो दैविके बहुबेरकम् ।
मानुषं किंचिदाश्रित्य आसनं तु विधीयते ॥ १२२ ॥

देवमानुषभागाभ्यां शयनं परिकल्पयेत् ।
केचित्तु नवधा भागं गर्भगेहस्य कुर्वते ॥ १२३ ॥

तत्रापि मध्यमं ब्राह्मं दैविकं तदनन्तरम् ।
तृतीयं पैतृकं भागं चतुर्थं मानुषं भवेत् ॥ १२४ ॥

पञ्चमं चापि पैशाचं[1] भागमाहुर्मनीषिणः ।
प्रतिष्ठा दैविके चैव परिवारास्तु पैतृके ॥ १२५ ॥

[1] वैश्यानां C

मानुषे चायुधानि स्युः पैशाचे तु न किंचन ।
त्रिशूलं स्थापयेत् तत्र रत्नस्पृष्टं विचक्षणः ॥ १२६ ॥

खदिराद्यास्तु संप्रोक्ताः सारवन्तस्तु ये द्रुमाः[1] ।
तान् निर्दोषान् समानीय कृत्वा च स्वस्तिवाचनम् ॥ १२७ ॥

शिल्पिभिस्तक्षयित्वा च असारं व्यपनीय तु ।
ततस्तु कारयेच्छूलं यथाप्रोक्तप्रमाणतः ॥ १२८ ॥

द्वादशाङ्गुलमायामं मुखं प्रोक्तं च साधकैः ।
उष्णीषमङ्गुलं चापि मूर्धायामोऽङ्गुलत्रयम् ॥ १२९ ॥

भागः कण्ठस्य चायामः सोष्णीषं मुखमेव हृत् ।
नाभेरूर्ध्वं तथा तालं[2] तावन्नाभेरधस्तथा ॥ १३० ॥

पञ्चविंशाङ्गुलायाममूरुदण्डं प्रचक्षते ।
पञ्चाङ्गुलं ततो जानु जङ्घा चोरुसमा भवेत् ॥ १३१ ॥

जानुमानं च पादान्तं दशतालक्रमस्त्वयम् ।
नवतालादि शेषं तु त्रितालान्तं वदाम्यतः ॥ १३२ ॥

मुखमासप्ततालं तु मुखमेव प्रमाणतः ।
शेषाङ्गानां प्रमाणानि कथयामि यथातथम् ॥ १३३ ॥

उष्णीषमङ्गुलं प्रोक्तं मूर्धा गोलकमेव च ।
अध्यर्धगोलकं कण्ठं हृदयं मुखमुच्यते ॥ १३४ ॥

[1] स्मृताः C

[2] Tāla = 12 *aṅgula-s*. See *Pādmatantra*, Mysore ed., 1891, p. 122, verse 48 and p. 168, verse 55.

नाभेरूर्ध्वं तथा तावत् तावन्नाभेरधोऽपि च ।
मुखद्वयं भवेदूरुर्जानु कण्ठसमं भवेत् ॥ १३५ ॥

जङ्घा चोरुसमा ज्ञेया पादान्तं जानुसंमितम् ।
नवतालक्रमश्चायमष्टतालमथोच्यते ॥ १३६ ॥

गोलकं च भवेत् कण्ठं वृत्तमेकादशाङ्गुलम् ।
नाभेरूर्ध्वं तथा तावत् तावन्नाभेरधोऽपि च ॥ १३७ ॥

अङ्गुलेन भवेन्मूर्धा न चोष्णीषं तु मानुषे ।
द्वाविंशाङ्गुलमूरुं च जघनं च प्रचक्षते ॥ १३८ ॥

गोलकं जानुपादान्तमष्टताले त्वयं क्रमः ।
कण्ठमङ्गुलमुद्दिष्टं हृदयं तु दशाङ्गुलम् ॥ १३९ ॥

तावती च भवेन्नाभिरधस्ताच्च नवाङ्गुलम् ।
विंशत्यङ्गुलमूरुः स्यात् जङ्घा तावत् प्रकीर्तिता ॥ १४० ॥

अङ्गुलं जानुपादान्तं सप्तताले त्वयं क्रमः ।
पादान्तं जानुकण्ठानां नाभिमानमतः परम् ॥ १४१ ॥

एवं दशाङ्गुलं प्रोक्तं प्रतितालं मुखेऽपि च ।
मुखे हीनं शरीरे तु प्रक्षिपेच्च विचक्षणः ॥ १४२ ॥

पञ्चविंशाङ्गुलं कायं मुखमेकादशाङ्गुलम् ।
अष्टादशाङ्गुलावूरू जङ्घे तावत् प्रकल्पयेत् ॥ १४३ ॥

शरीरगोलकं गृह्य कुब्जपादे नियोजयेत् ।
यथायोगं तु शेषाणां वामने विपरीतकम् ॥ १४४ ॥

पादमानं तु वा काये कायमानं तु पादयोः ।
कुब्जवामनकौ प्रोक्तौ पादतालक्रमेषु वै ॥ १४५ ॥

सप्ततालेऽपि केचित्तु कुब्जमाहुर्मनीषिणः ।
पञ्चताले प्रवक्ष्यामि प्रमाणं तदनन्तरम् ॥ १४६ ॥

दशाङ्गुलं मुखं प्रोक्तं कायं तद्द्विगुणं भवेत् ।
ऊरुश्चापि तथा जङ्घा स्यातां पञ्चदशाङ्गुलम् ॥ १४७ ॥

वामने कायमानं तु पादयोः प्रक्षिपेद् बुधः ।
पादमानं तथा काये शेषाणां स्याद्यथाविधि ॥ १४८ ॥

चतुस्ताले क्रमश्चोक्तस्त्रिताले कथयामि वः ।
अष्टाङ्गुलं मुखं प्रोक्तं कायं चापि दशाङ्गुलम्[1] ॥ १४९ ॥

नवाङ्गुलो भवेदूरुर्जङ्घे वै तावदेव तु ।
शूलप्रमाणमित्युक्तं शूलसंख्यां वदामि वः ॥ १५० ॥

वंशदण्डः कटीदण्डो वक्षोदण्डस्तथैव च ।
बाहुदण्डाश्च चत्वारः प्रकोष्ठास्तावदेव तु ॥ १५१ ॥

पाददण्डौ च इत्येते शूलदण्डास्त्रयोदश ।
वक्षोदण्डस्य चायामं प्रवदन्ति मुखद्वयम् ॥ १५२ ॥

कटिदण्डस्य चायामो[2] भागयुक्तं मुखं तथा ।
बाहुदण्डस्य चायाम ऊरुदण्डसमो भवेत् ॥ १५३ ॥

[1] नवाङ्गुलौ C
[2] चायामं C

प्रकोष्ठबन्धस्तावांस्तु मणिबन्धकमङ्गुलम् ।
विंशत्यङ्गुलमायाममुरोबाहुं विदन्ति च ॥ १५४ ॥

श्लेषयेत् तांश्च मतिमान् सुषिरं तु न कारयेत ।
न कीलकं कदाचित्तु दातव्यं शूलकर्मणि ॥ १५५ ॥

द्विशिखं त्रिशिखं वापि तथैकशिखमेव वा ।
दण्डं कृत्वा च निम्नं च श्लेषयेच्च पृथक् पृथक् ॥ १५६ ॥

वक्षोदण्डस्य मध्ये तु निम्नं कुर्याद् विचक्षणः ।
तथा चैव कटीदण्डे मध्ये निम्नं न कारयेत् ॥ १५७ ॥

वंशदण्डं तयोः सम्यङ् निश्छिद्रं निम्नयोः क्षिपेत् ।
वंशदण्डं मुखं प्राहुः सकिरीटं च केचन ॥ १५८ ॥

मूर्धान्तमेव केचित्तु उभयं तु मतं मम ।
वक्षोदण्डं ततः कुर्यात् त्रिशिखाग्रं विचक्षणः ॥ १५९ ॥

ततश्च बाहुमूलानि विशिखान्येव कारयेत् ।
तथोपबाहुमूलानि अन्तं चैकशिखं पृथक् ॥ १६० ॥

द्विशिखं च प्रकोष्ठादि कुर्यात् तत् कूर्परं विदुः ।
दण्डान् सर्वांस्तथैवं तु श्लेषयेन्मतिमान् नरः ॥ १६१ ॥

श्लेषितं श्लेषितं संधिं ताम्रपट्टेन वेष्टयेत् ।
यथा दार्ढ्यं भवेत् संधेस्तथा सम्यक् तु वेष्टयेत् ॥ १६२ ॥

[1]कृत्वा चैकशिखं पश्चात् कटिदण्डं च तन्त्रवित् ।
द्विशिखं चोरुमूलं च श्लेषयित्वा तु वेष्टयेत् ॥ १६३ ॥

1 Gap from here up to 7th line of the eighth chapter in D

न जानुसंधिश्चात्रोक्तो दार्ढ्यार्थे स्नानकर्मणि ।
प्रतिमासंमितायामं शूलकं वृत्तमेव च ॥ १६४ ॥

उपशूलं प्रकुर्वीत प्रतिमास्थितये पुनः ।
विष्णुब्रह्मशिवानां तु दशतालं प्रचक्षते ॥ १६५ ॥

शेषाणामथ देवानां नवतालं प्रशस्यते ।
अष्टतालं मनुष्याणां स्त्रीणां चैव प्रशस्यते ॥ १६६ ॥

[1]दशतालं च संप्रोक्तं तद्विंशतिशताङ्गुलम् ।
नवतालं च संप्रोक्तं ततश्चाष्टशताङ्गुलम् ॥ १६७ ॥

षण्णवत्यङ्गुलं प्रोक्तमष्टतालं मनीषिभिः ।
आसने [2]जानुसंधौ च शयने चापि कारयेत् ॥ १६८ ॥

तत्र पञ्चदश प्रोक्ताः शूलदण्डाः पृथक् पृथक् ।
केचिच्चरणमूलं च पार्श्वमूलं च कुर्वते ॥ १६९ ॥

चतुरः श्लेषयेद् दण्डान् त्रिशिखानेव तान् पुनः ।
दण्डाः सप्तदशैते तु स्थाने प्रोक्ता विचक्षणैः ॥ १७० ॥

एवं शूलं क्रमात् कृत्वा स्थापयेत् परमेष्ठिना ।
आसने स्थापयेत् पुंसा तत्र स्याज्जानु संहितम् ॥ १७१ ॥

जङ्घादि द्विशिखं कुर्यादूरुमेकशिखं तथा ।
एकोनविंशतिर्ज्ञेयाः शूलदण्डास्तथा खलु ॥ १७२ ॥

1 दशताला च संप्रोक्ता A

2 जानुसंधिश्च C

शयने च तथा दण्डास्तत ऊर्ध्वं न कारयेत् ।
न च पादशिलादीनि शयने कारयेद् बुधः ॥ १७३ ॥

विध्येन शूलं शयने स्थापयेत् तन्त्रवित्तमः ।
नालिकेरत्वचां सारं गृह्णीयाद्रज्जुकर्मणि ॥ १७४ ॥

समवृत्ता यथा रज्जुर्नातिस्थूला न वा कृशा ।
शलाकामात्रनाभिश्च शूलग्रन्थिविवर्जिता ॥ १७५ ॥

न चैवातिदृढा कार्या नातिमृद्वी कदाचन ।
एवं रज्जुमयं कृत्वा सर्वेष्वङ्गेषु वेष्टयेत् ॥ १७६ ॥

यथा शरीरे सर्वेषां चतुःषष्टिः सिराः स्मृताः ।
शूले तथैव पाशास्तु कर्तव्यास्तन्त्रकोविदैः ॥ १७७ ॥

शूलमस्थि सिरा रज्जुर्मृन्मांसं त्वक् पटं भवेत् ।
द्वाभ्यां द्वाभ्यां तु रज्जुभ्यां बद्ध्वा बद्ध्वा तु वेष्टयेत् ॥ १७८ ॥

आलोड्य त्रिफलातोये नालिकेरफलान्विते ।
नालिकेररसं सारं सारयित्वा मृदं शनैः ॥ १७९ ॥

श्लेषयेत् स्थूलबन्धेषु सर्वाङ्गेषु शनैः शनैः ।
आद्येष्वेव चतुष्केषु तेषु रज्ज्वाथ वेष्टयेत् ॥ १८० ॥

वेष्टयित्वा समीकृत्य मृदा चैवं शनैः शनैः ।
त्रिरेव रज्जुबन्धं च त्रिशुष्कं चापि दापयेत् ॥ १८१ ॥

अत ऊर्ध्वं न रज्जुं च न शुष्कं चापि कारयेत् ।
मृदा चैव शनैर्ज्ञात्वा शुष्काशुष्कं विचक्षणः ॥ १८२ ॥

कुर्याच्छरीरसंवेष्टं भेदच्छिद्रविवर्जितम् ।
हस्तेनैव मृदं दद्यात् कूर्चेन कटुशर्कराम् ॥ १८३ ॥

पिष्ट्वा तु त्रिफलातोये शर्कराकल्कमेव च ।
कार्पासमूलसंयुक्तं सम्यक् कृत्वा विचक्षणः ॥ १८४ ॥

कूर्चेनैव तु तत्कल्कं शनैरेव परामृजेत् ।
ततः करण्डिकाग्रेण लिप्ताङ्गानि च लेपयेत् ॥ १८५ ॥

लिप्तेष्वङ्गेषु सर्वेषु पटेनाच्छाद्य बुद्धिमान् ।
शुक्तिकादिक्रियास्तत्र सर्ववर्णांश्च कारयेत् ॥ १८६ ॥

वर्णयोगविधिं पश्चात् प्रकुर्वीत विचक्षणः ।
किरीटं मुखतोऽप्यर्धं तदर्धं फालपट्टकम् ॥ १८७ ॥

मानोन्मानप्रमाणानि सर्वाण्येव सविस्तरम् ।
चित्राध्याये प्रवक्ष्यन्ते इन्द्ररात्रे यथाविधि ॥ १८८ ॥

पुराणप्रतिमा शीर्णा कर्तव्या पुनरेव तु ।
स्थानं तत्र प्रकुर्वीत स्थानयोगविधानतः ॥ १८९ ॥

ततः स्थाने विशीर्णे च कुर्यादासनकर्म च ।
तथासने विशीर्णे च शयनं तत्र कारयेत् ॥ १९० ॥

शयने तु विशीर्णे च कुर्याच्छयनमेव च ।
नातः परतरं कुर्याच्छयनादन्यदेव तु ॥ १९१ ॥

न स्वस्थोत्पाटनं कुर्यात् कदाचित् तन्त्रवित्तमः ।
अचिरान्नाशमभ्येति स्वस्थोत्पाटनकृन्नरः ॥ १९२ ॥

मृन्मये शूलभागे च बुधः कुर्यात् पुनः क्रियाम् ।
शेषाणां शैलजातीनामङ्गभङ्गे पुनः क्रिया ॥ १९३ ॥

पुराणां निक्षिपेदप्सु प्रतिमां लोहजामृते ।
भग्नां तु सर्वदा योग्ये लोहजे प्रतियातने ॥ १९४ ॥

प्रदद्यात् तद्विदे चैव तथा भागवताय वा ।
तेषामलाभे दद्याद्वै दीक्षिताय न संशयः ॥ १९५ ॥

प्रतिमासु विशीर्णासु राष्ट्रनाशो भवेद् ध्रुवम् ।
तस्मात् सर्वप्रयत्नेन बुधः कुर्यात् पुनः क्रियाम् ॥ १९६ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां ब्रह्मरात्रे
प्रतिमालक्षणोद्देशः सप्तमोऽध्यायः

# ब्रह्मरात्रे अष्टमोऽध्यायः

अथातः संप्रवक्ष्यामि प्रासादस्य विधिं परम् ।
प्रशस्तभूमिभागे तु कुर्याद् भूमिपरिग्रहम् ॥ १ ॥

सूत्रपातं क्रमात् कुर्यादाप्राकारपरिग्रहम् ।
दिक्षु कोणेषु चैवाष्टौ शङ्कूनश्वत्थवृक्षजान् ॥ २ ॥

ऐन्द्रादि प्राङ्मुखो भूत्वा स्थापयेत् परमेष्ठिना ।
पुंसा तु परिषिच्याथ विश्वेनाक्षतमुत्सृजेत् ॥ ३ ॥

निवृत्त्यात्र प्रणम्याथ सर्वेण तु बलिं हरेत् ।
पायसं कृसरं गौडं शुद्धान्नं बलिकर्मणि ॥ ४ ॥

वृक्षमूलान्यपाकृष्य शोधयेच्च[1] ततः क्षितिम् ।
उक्षभ्यां च सवर्णाभ्यां कर्षयेद् विधिनैव तु ॥ ५ ॥

यावान् प्रासादविस्तारः[2] खानयेत् तावदेव तु ।
खाते होमं ततः कृत्वा मूलमन्त्रेण साधकः ॥ ६ ॥

पूरयेत् तं पुनः खातं यथा वै यागमण्डपम् ।
इष्टकाधानहोमं च मूलमन्त्रेण कारयेत् ॥ ७ ॥

[1] बन्धयेच्च C  [2] विस्तारं C

सुपक्वाः सुस्वनाश्चैव इष्टकाः समुदाहृताः ।
विलीनाश्चापि वक्राश्च परावृत्ताः क्षतान्विताः ॥ ८ ॥

[1]भिन्नासनाश्च भग्नाश्च अतिदग्धाश्च वर्जयेत् ।
सर्वलक्षणसंपन्नो नीरोगः कोपवर्जितः ॥ ९ ॥

युवा भद्रः सुशीलश्च कृतहस्तो विचक्षणः ।
तक्षकश्चात्र संप्रोक्तः शास्त्रज्ञैस्तत्त्वदर्शिभिः ॥ १० ॥

वाशिं च हस्तवाशिं च क्रकचं चैषणिं तथा ।
आदाय शुचिर्भूत्वा वस्त्रालंकारभूषितः ॥ ११ ॥

इष्टकास्तक्षकः कुर्यादष्टौ वा द्वादश क्रमात् ।
वाश्या तु तक्षणं कृत्वा हस्तवाश्या ततः परम् ॥ १२ ॥

क्रकचेन परामृश्य एषण्या परिमीय तु ।
द्वारस्य दक्षिणे पार्श्वे इष्टकाधानमाचरेत् ॥ १३ ॥

इन्द्रादि स्थापयेदष्टौ ततो द्वादश वा पुनः ।
गर्भाधाननिमित्तं तु श्वभ्रं मध्ये तु कारयेत् ॥ १४ ॥

गर्भाधानं क्रमात् कृत्वा प्रासादं च समारभेत् ।
जगती कुमुदं चैव वेदिकापट्टिका ततः ॥ १५ ॥

पादं कपोतो वेदिश्च ततश्चोपरि पट्टिका ।
कण्ठनालश्च कण्ठश्च शिरश्चैव शिरोघटः ॥ १६ ॥

[1] हीना C

एवमादि क्रमात् कुर्यात् पञ्चहस्तानि चैव हु[1] ।
ऊर्ध्वे च पञ्चहस्तं च शालाकूटचरं तथा ॥ १७ ॥

तथा निम्नप्रदेशाश्च कर्तव्याः शास्त्रकोविदैः ।
वृत्तं वा चतुरश्रं वा आयतं वृत्तमेव वा ॥ १८ ॥

आयतं चतुरश्रं वा प्रासादं च चतुर्विधम् ।
वृत्ते च चतुरश्रे च चतस्रो नाडिकाः पुनः ॥ १९ ॥

अष्टौ [2]कपोता नाड्यश्च प्रतिदिक्षु विभागशः ।
अष्टाश्रे शिखरं कुर्यादष्टौ वै नाडिकाः क्रमात् ॥ २० ॥

अष्टाश्रे चैव वृत्ते च वृत्त एव शिखाघटः ।
वृत्तं वा चतुरश्रं वा चतुरश्रेषु कारयेत् ॥ २१ ॥

आयते चतुरश्रे च आयते वृत्त एव वा ।
शयनं तत्र कुर्वीत न स्थानं नासनं तथा ॥ २२ ॥

यानं च शयनं चैव सर्वत्रैव तु कारयेत् ।
सर्वे वै ग्राममध्ये च पश्चिमे चासनं तथा ॥ २३ ॥

शयनं चोत्तरे चैव स्थानं प्राच्यां प्रशस्यते ।
दक्षिणस्यां तथा यानं कोणेषु स्थानमेव च ॥ २४ ॥

शयने च चतुर्दिक्षु द्वारं शस्तं मनीषिभिः ।
प्राग्द्वारे दक्षिणग्रीवं शयनं तु प्रशस्यते ॥ २५ ॥

[1] हि C [2] कपोतनाड्यश्च C

कुर्यात् तथोत्तरग्रीवं प्रत्यग्द्वारे[1] तु धामनि ।
तथैव दक्षिणद्वारे प्रत्यग्ग्रीवं प्रशस्यते ॥ २६ ॥

प्राग्ग्रीवमुत्तरद्वारे विपरीतं विवर्जयेत् ।
प्राक्प्रत्यग्द्वारमेव स्यात् तथा स्थानासनादिषु ॥ २७ ॥

गर्भभागाच्चतुर्भागं भित्तिभागं प्रचक्षते ।
शिलाभिरिष्टकाभिर्वा काष्ठैर्वा मृद्भिरेव वा ॥ २८ ॥

कुर्यात् प्रासादविस्तारं यथावित्तानुसारतः ।
एकहस्तादि कुर्वीत त्रिंशद्धस्तान्तमेव वा ॥ २९ ॥

एकभूम्यादि कुर्वीत [2]नवभूम्यन्तमेव वा ।
अथ द्वादशभूम्यन्तमत ऊर्ध्वं न कारयेत् ॥ ३० ॥

प्रासादात् पादहीनस्तु गोपुरोच्छ्राय उच्यते ।
त्रिभागहीनं प्रासादाद् गोपुरार्धं तु मण्डपम् ॥ ३१ ॥

गर्भभागार्धमानस्तु[3] तथा गरुडमण्डपः[4] ।
तावच्च लोकपालानां तदर्धं बलिपीठिका ॥ ३२ ॥

उपरिष्टाच्चतुर्दिक्षु दिङ्मूर्तीः कारयेद् बुधः ।
प्राच्यां दिशि च वाराहं नारसिंहं च दक्षिणे ॥ ३३ ॥

श्रीधरं पश्चिमायां च हयवक्त्रं तथोत्तरे ।
कोणेषु गरुडं कुर्याद् भित्तिं मुक्त्वा तु किंचन ॥ ३४ ॥

[1] द्वारं C
[2] नवभूम्यां तथैव वा C
[3] मानं तु C
[4] मानतः C

वाराहं श्यामलं रूपं नारसिंहं सितं भवेत् ।
श्रीधरस्तु सुवर्णाभो रक्तः स्याद्धयशीर्षकः ॥ ३५ ॥

वैनतेयः सुवर्णाभो भवेन्नीलाग्रनासिकः ।
दिङ्मूर्तीनां च सर्वासां प्रत्येकं पद्ममासनम् ॥ ३६ ॥

सुखासनं च वाराहं रूपमद्भुतदर्शनम् ।
पर्यङ्कबन्धसंयुक्तं नारसिंह तथाद्भुतम् ॥ ३७ ॥

श्रीधरः श्रीसहायो वा सुखासनगतोऽपि वा ।
योगासनस्थं कुर्वीत तथैव हयशीर्षकम् ॥ ३८ ॥

दक्षिणं चोरुमुन्नम्य वामं चासनगं भवेत् ।
सुखासनमिदं प्रोक्तं तथैव गरुडस्य च ॥ ३९ ॥

दिङ्मूर्तयस्त्ववस्ताच्च चतस्रः संप्रकीर्तिताः ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ ४० ॥

ऐन्द्रादि सोमपर्यन्तं चतस्रो मूर्तयः स्मृताः ।
केचिच्च वासुदेवादीनाचार्याः परिचक्षते ॥ ४१ ॥

अपरे पुरुषाद्यास्तु दिशामूर्तीः प्रचक्षते ।
एतेषामपि सर्वेषां प्रत्येकं पद्ममासनम् ॥ ४२ ॥

चित्रे चाप्यर्धचित्रे च चित्राभासेऽपि वा पुनः ।
स्थानासनादि कुर्वीत शयनं यानगं तथा ॥ ४३ ॥

स्थिता एव दिशामूर्तीः स्थिते देवे प्रचक्षते ।
आसीनाश्च तथासीने उभयं वापि कुर्वते ।
एवं शास्त्रान्तरान्वेषी कारयेत् तन्त्रवित्तमः ॥ ४४ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां ब्रह्मरात्रे
प्रासादविधिः अष्टमोऽध्यायः

# ब्रह्मरात्रे नवमोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि देवस्याराधनक्रमम् ।
अर्चना द्विविधा प्रोक्ता स्थावरास्थावरेति च ॥ १ ॥

एकबेरविधानेन कर्तव्या स्थावरार्चना ।
कर्मार्चायां तु कर्तव्या भवेदस्थावरार्चना ॥ २ ॥

एकबेरविधिस्थाने प्रायेण परिकीर्तिते ।
शयनासनयानेषु बहुबेरविधिर्भवेत् ॥ ३ ॥

न कार्याः स्थावरार्चायां परिवाराः कथंचन ।
कर्मार्चायां परीवाराः कर्तव्याः परितः क्रमात् ॥ ४ ॥

उभयत्र यथाशास्त्रं योगपीठं प्रकल्पयेत् ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमादिमे ॥ ५ ॥

योगपीठस्य पादाः स्युराग्नेयादिदिगाश्रिताः ।
तत्र मध्यमपादस्तु शिवः स्यान्नीललोहितः ॥ ६ ॥

परमेष्ठ्या न्यसेद्धर्मं पुंसा ज्ञानं च विन्यसेत् ।
विश्वेन चैव वैराग्यं निवृत्त्यैश्वर्यमेव च ॥ ७ ॥

सर्वेण रुद्रं मध्ये च योगपीठं समर्चयेत् ।
पद्मं तु विन्यसेन्मध्ये प्रणवेन समाहितः ॥ ८ ॥

तमश्चापि रजश्चापि सत्त्वं चापि गुणत्रयम् ।
कर्णिकायां न्यसेत् पूर्वं प्रणवेनोत्तरोत्तरम् ॥ ९ ॥

मन्त्रन्यासं ततः कुर्यात् मूलमन्त्रेण साधकः ।
मूलमन्त्रो द्विधा प्रोक्तस्तन्त्रेऽस्मिन् परमेष्ठिना ॥ १० ॥

अष्टाक्षरस्ततो मन्त्रो द्वादशाक्षर एव च ।
कुर्वीत चानयोरेकं न्यासकर्मणि साधकः ॥ ११ ॥

सृष्टिन्यासः स्थितिन्यासः संहृतिन्यास इत्यपि ।
यथाभिलषितं कुर्यात् सर्वथा कर्तुरिच्छया ॥ १२ ॥

मूर्धादिपादपर्यन्तः सृष्टिन्यासः प्रकीर्तितः ।
नाभ्यादिहृदयान्तस्तु स्थितिन्यास उदाहृतः ॥ १३ ॥

यः पादादिशिरोऽन्तः स संहृतिन्यास उच्यते ।
अष्टाक्षरस्य स्थानानि वक्ष्यन्ते क्रमयोगतः ॥ १४ ॥

मूर्धा चक्षुर्मुखं चापि हृदयं नाभिरेव च ।
गुह्यं चापि ततो जानु चरणश्चाष्टमः स्मृतः ॥ १५ ॥

सृष्टिन्यास इति प्रोक्तः फलमैहिकमस्य तु ।
क्रियते राज्यकामैश्च धनकामैश्च योगिभिः ॥ १६ ॥

पुत्रकामैर्वधूकामैर्ग्रामकामैः सुखार्थिभिः ।
प्रायेणैषा गृहस्थैश्च क्रियते ब्रह्मचारिभिः ॥ १७ ॥

स्थितिन्यासं तु वक्ष्यामि यथावत् तं निबोधत ।
पूर्वं नाभिर्भवेत् स्थानं द्वितीयं गुह्यमेव च ॥ १८ ॥

तृतीयं जानुदेशः स्याच्चतुर्थं चरणः स्मृतः ।
पञ्चमस्तु भवेन्मूर्धा षष्ठं चक्षुस्तथा स्मृतम् ॥ १९ ॥

सप्तमं मुखमध्यं तु हृदयं चाष्टमं तथा ।
स्थितिन्यास इति प्रोक्तः पूर्वोक्तक्रमयोगतः ॥ २० ॥

हृदयादि च नाभ्यन्तं केचिदाहुर्मनीषिणः ।
नाभ्यन्तं तु स्थितिन्यासमाहुरूर्ध्वमुखं बुधाः ॥ २१ ॥

आहुस्तमेव विद्वांसो हृदयान्तमधोमुखम् ।
स्थितिकामैरयं कार्योऽमुत्रेह च फलार्थिभिः ॥ २२ ॥

स्थिते चोर्ध्वमुखे चास्मिन्नमुत्र द्विगुणं फलम् ।
स्थिते चाधोमुखे चास्मिन्निहैव द्विगुणं फलम् ॥ २३ ॥

प्रायेणैष गृहस्थानां न्यास उक्तः सनातनः ।
वक्ष्यामि संहृतिन्यासं साक्षान्मोक्षसुखप्रदम् ॥ २४ ॥

पादः स्थानं भवेदाद्यं द्वितीयं जानु कीर्तितम् ।
तृतीयं गुह्यदेशस्तु चतुर्थं नाभिरेव च ॥ २५ ॥

हृदयं पञ्चमं प्रोक्तं षष्ठं वै मुखमुच्यते ।
चक्षुश्च सप्तमं स्थानं मूर्धा चाष्टम उच्यते ॥ २६ ॥

एष वै संहृतिन्यासः क्रियते मोक्षकाङ्क्षिभिः ।
वानप्रस्थयतीनां च प्रायो न्यासस्त्वयं भवेत् ॥ २७ ॥

द्वादशाक्षरबीजानां स्थानानि कथयामि वः ।
पूर्वं तु शिरसो मध्यं द्वितीयं दक्षिणं ततः ॥ २८ ॥

तृतीयं पश्चिमं चैव चतुर्थं चोत्तरं ततः ।
पूर्वं तु पञ्चमं प्रोक्तं चक्षुः षष्ठमुदाहृतम् ॥ २९ ॥

सप्तमं तु मुखं प्रोक्तमष्टमं हृदयं विदुः ।
नवमं नाभिदेशस्तु दशमं गुह्यमेव च ॥ ३० ॥

एकादशं भवेज्जानु द्वादशं चरणस्तथा ।
सृष्टिन्यास इति प्रोक्तः स्थितिन्यासस्तु वक्ष्यते ॥ ३१ ॥

मुखं तु प्रथमं स्थानं द्वितीयं हृदयं तथा ।
तृतीयं नाभिदेशस्तु चतुर्थं गुह्यमुच्यते ॥ ३२ ॥

पञ्चमं जानुदेशश्च षष्ठं चरण उच्यते ।
मूर्धानं सप्तमं प्राहुरष्टमं तस्य दक्षिणम् ॥ ३३ ॥

नवमं पश्चिमं प्रोक्तमुत्तरं दशमं तथा ।
पूर्वमेकादशं प्रोक्तं द्वादशं चक्षुरुच्यते ॥ ३४ ॥

अत्रापि चक्षुरादिं च स्थितिन्यासं प्रचक्षते ।
आहुरूर्ध्वमुखं चैतन्मुखान्तं तन्त्रवित्तमाः ॥ ३५ ॥

तथैव कथयन्त्येते चक्षुरन्तमधोमुखम् ।
स्थितिकामैरयं कार्यः फलं पूर्वोक्तमेव तु ॥ ३६ ॥

वक्ष्यते संहृतिन्यासः पूर्वोक्तक्रमयोगतः ।
पादस्तु प्रथमं स्थानं द्वितीयं जानु कीर्तितम् ॥ ३७ ॥

तृतीयं गुह्यदेशश्च चतुर्थं नाभिरेव च ।
पञ्चमं हृदयं चैव षष्ठं वै मुखमुच्यते ॥ ३८ ॥

सप्तमं तु तथा चक्षुः शिरसः पूर्वमष्टमम् ।
उत्तरं नवमं प्रोक्तं पश्चिमं दशमं तथा ॥ ३९ ॥

एकादशं दक्षिणं तु मूर्धा द्वादशमुच्यते ।
एष वै संहृतिन्यासः फलं पूर्वोक्तमेव तु ॥ ४० ॥

वक्ष्यते च करन्यासो येन शुद्धिः करस्य तु ।
सर्वाङ्गुलीनां मध्ये च करन्यासः प्रशस्यते ॥ ४१ ॥

अङ्गुल्याद्यन्तरेखाः स्युः स्थानानि प्रणवस्य ह ।
अत्रापि त्रिविधो न्यासः पूर्ववत् परिकीर्तितः ॥ ४२ ॥

यस्तु दक्षिणहस्तादि वामहस्तान्त इष्यते ।
स सृष्टिन्यास इत्युक्तः संहारे विपरीतकः ॥ ४३ ॥

कनिष्ठाद्यन्तमत्रापि स्थितिन्यासं[1] प्रचक्षते ।
त्रिमात्रं प्रणवं हस्ते दक्षिणे विनिवेशयेत् ॥ ४४ ॥

तथा चाङ्गुष्ठमध्ये तु तर्जन्यादौ तथैव च ।
अष्टाक्षरादिर्बीजं च तर्जन्या मध्यमे न्यसेत् ॥ ४५ ॥

अन्ते त्रिमात्रं प्रणवं मध्यमादौ तथैव च ।
द्वितीयं मध्यमामध्ये प्रणवं चान्तगोचरे ॥ ४६ ॥

प्रणवं चाप्यनामादौ तृतीयं मध्यमे न्यसेत् ।
अन्ते च प्रणवं तद्वत् कनिष्ठादौ तथैव च ॥ ४७ ॥

[1] न्यासः स उच्यते C

चतुर्थं मध्यमे तस्याः प्रणवं चान्तगोचरे ।
तथा वामकनिष्ठादौ प्रणवं विनिवेशयेत् ॥ ४८ ॥

मध्ये च पञ्चमं तस्या अन्ते प्रणवमेव च ।
प्रणवं चाप्यनामादौ षष्ठं वै मध्यतो न्यसेत् ॥ ४९ ॥

तस्यां तु प्रणवं चान्ते मध्यमादौ तथा पुनः ।
सप्तमं मध्यमामध्ये प्रणवं चान्तगोचरे ॥ ५० ॥

तर्जन्यादौ तथा चैव मध्ये चाष्टममेव तु ।
अन्ते च प्रणवं तस्यास्तथा चाङ्गुष्ठमध्यमे ॥ ५१ ॥

वामहस्तस्य मध्ये च तथैव प्रणवं न्यसेत् ।
सृष्टिन्यास इति प्रोक्तः संहारे विपरीतकः ॥ ५२ ॥

अङ्गुष्ठे करमध्ये च तर्जन्या न्यास इष्यते ।
केचिन्मध्यमया न्यासं करमध्ये प्रचक्षते ॥ ५३ ॥

अङ्गुलीष्वथ सर्वासु अङ्गुष्ठाग्रेण विन्यसेत् ।
स्वस्वाङ्गुलीषु स्वाङ्गुल्या करयोर्न्यास इष्यते ॥ ५४ ॥

द्वादशाक्षरबीजानामेवं न्यासं प्रचक्षते ।
अङ्गुष्ठे करमध्ये चाप्याद्यन्ते प्रणवं न्यसेत् ॥ ५५ ॥

दक्षिणेन करेणैव शरीरे न्यास इष्यते ।
मूर्ध्नि मध्यमया न्यासमङ्गुल्या समुदाहृतम् ॥ ५६ ॥

मध्यमातर्जनीभ्यां तु चक्षुषोर्न्यास इष्यते ।
अङ्गुष्ठानामिकाभ्यां तु मुखे न्यासः प्रकीर्तितः ॥ ५७ ॥

अङ्गुष्ठतर्जनीभ्यां तु हृदये न्यास उच्यते ।
तथाङ्गुष्ठकनिष्ठाभ्यां नाभिन्यासं प्रकल्पयेत् ॥ ५८ ॥

गुह्येऽङ्गुष्ठेन शेषाभिर्जानुनोर्न्यास उच्यते ।
पञ्चभिश्चाङ्गुलीभिस्तु पादे न्यासः प्रकीर्तितः ॥ ५९ ॥

एवमेव स्थितिन्यासे संहारे च प्रकल्पयेत् ।
एष त्वष्टाक्षरन्यासो विशेषो द्वादशाक्षरे ॥ ६० ॥

शिरसो दक्षिणे भागे तर्जन्या विन्यसेद् बुधः ।
पश्चिमे मध्यमाग्रेण उत्तरे चाप्यनामया ॥ ६१ ॥

कनिष्ठया पूर्वभागे शेषं सर्वं तु पूर्ववत् ।
बीजानि विन्यसेदेवं कृत्वा प्रणवसंपुटम् ॥ ६२ ॥

सर्वं पृथक् पृथग्वर्णं ध्यात्वा ध्यात्वा तु विन्यसेत् ।
वर्णानष्टाक्षराणां तु प्रवक्ष्यामि यथायथम् ॥ ६३ ॥

रक्तं तु प्रथमं बीजं द्वितीयं गौरमेव च ।
तृतीयं [1]धूम्रवर्णं तु चतुर्थं श्यामलं भवेत् ॥ ६४ ॥

पञ्चमं ज्योतिषो रूपं षष्ठं स्फटिकसंनिभम् ।
शङ्खाभं सप्तमं बीजमष्टमं रजतप्रभम् ॥ ६५ ॥

द्वादशाक्षरबीजानां वर्णान् वक्ष्ये यथाक्रमम् ।
पीतं तु प्रथमं बीजं द्वितीयं कृष्णमेव च ॥ ६६ ॥

[1] ताम्रवर्णं C

गौरवर्णं तृतीयं तु चतुर्थं श्यामलं भवेत् ।
रक्तं तु पञ्चमं षष्ठं धूम्रवर्णमुदाहृतम् ॥ ६७ ॥

सप्तमं तु भवेन्नीलमष्टमं रक्तमेव च ।
नवमं शुक्लवर्णं तु दशमं लोहितप्रभम् ॥ ६८ ॥

एकादशं तमोरूपं द्वादशं पीतमेव च ।
एवं ध्यायेद्यथान्यासं न्यासस्थानेषु साधकः ॥ ६९ ॥

सकृदेव करन्यासो द्विः करन्यास उच्यते ।
यथा देहे तथा देवे न्यासं कुर्याद्विचक्षणः ॥ ७० ॥

करन्यासं तु देवस्य कारयित्वा यथोदितम् ।
अर्चयेद्गन्धपुष्पैस्तु न्यासबीजानि साधकः ॥ ७१ ॥

एवं कृत्वा करन्यासमर्चनापात्रमाहरेत् ।
प्रक्षाल्य विष्णुगायत्र्या प्रणवेन परामृशेत् ॥ ७२ ॥

अष्टाक्षरेण तोयं तु सगन्धं तत्र सेचयेत् ।
पञ्च गन्धांश्च मूलं च क्रमेण विनिवेशयेत् ॥ ७३ ॥

चक्रमन्त्रैर्दिशाबन्धं प्रकुर्याच्चक्रमुद्रया ।
षडक्षरेण संदध्यादग्निप्राकारमेव च ॥ ७४ ॥

दर्शयित्वा महामुद्रां ततः कवचमुद्रया ।
विष्णु चापि महाविष्णुं सदाविष्णुं च चिन्तयेत् ॥ ७५ ॥

तेजोमयं [1]सदाविष्णुं प्रणवेन समाह्वयेत् ।
तं च युञ्ज्यान्महाविष्णौ तं विष्णौ विनिवेशयेत् ॥ ७६ ॥

[1] तदा विष्णुं A

तं च पात्रे प्रयुञ्जीत पात्रेऽस्मिन्निश्चयेद्धरिम् ।
तत् तोयं प्रतिमामूर्ध्नि मूलमन्त्रेण सेचयेत् ॥ ७७ ॥

अर्घ्यं दद्याच्च मूलेन पाद्यमाचमनीयकम् ।
ततः स्वागतमुद्रां तु दर्शयित्वा विचक्षणः ॥ ७८ ॥

आसनं विष्णुगायत्र्या दत्त्वा स्थानानि कल्पयेत् ।
कल्पयेत् परिवाराणां सरस्वत्यास्तु नैर्ऋते ॥ ७९ ॥

वायव्ये तु रतेः स्थानं [1]शान्तेरीशानगोचरे ।
द्वितीयावरणे पश्चान्मुद्रास्थानानि कल्पयेत् ॥ ८० ॥

पूर्वे शङ्खं नियुञ्जीत दक्षिणे चक्रमेव च ।
पश्चिमे तु गदां कुर्यादुत्तरे पद्ममेव च ॥ ८१ ॥

आग्नेये लाङ्गलं चैव नैर्ऋते खड्गमेव च ।
[2]वायव्ये च तदा शार्ङ्गमीशाने वनमालिकाम् ॥ ८२ ॥

तृतीयावरणे पश्चाल्लोकपालांस्तु कल्पयेत् ।
स्वनाम परिवाराणां मन्त्र इत्यभिधीयते ॥ ८३ ॥

सर्वेषामपि चैतेषां प्रत्येकं पद्ममासनम् ।
भगवत्प्रमुखं पश्चाद् गरुत्मन्तं नियोजयेत् ॥ ८४ ॥

विष्वक्सेनं तथैशान्यां तृतीयावरणाद्बहिः ।
[3]पात्रस्थं सेचयेत् तोयं प्रत्यावरणमासने ॥ ८५ ॥

[1] शान्तिरीशान C
[2] C omits five lines from here.
[3] स्वर्णस्थं C

सेचयित्वा क्रमेणैव स्वां स्वां मुद्रां च दर्शयेत् ।
अत्रावशिष्टं सर्वं तु विष्वक्सेनाय निक्षिपेत् ॥ ८६ ॥

बद्ध्वा निर्माल्यमुद्रां च प्रक्षाल्य विधिवत् करम् ।
अथाचमनमुद्रां च दर्शयित्वा विचक्षणः ॥ ८७ ॥

ततः पुरुषसूक्तेन [1]देवं तमभिषेचयेत् ।
स्नानमुद्रां ततो बद्ध्वा स्नापयेत् परिवारकान् ॥ ८८ ॥

दद्याद् [2]वस्त्रं च मूलेन [3]वस्त्रमुद्रां च दर्शयेत् ।
तेन यज्ञोपवीतं च तन्मुद्रान्तं निवेदयेत् ॥ ८९ ॥

तथैव परिवारेभ्यो दत्त्वा मुद्राश्च दर्शयेत् ।
तेनालंकरणं दत्त्वा कृत्वालंकारमुद्रिकाम् ॥ ९० ॥

गन्धं [4]पुंसा तु दातव्यं पुष्पं विश्वेन चैव हि ।
धूपं चापि निवृत्त्या तु दीपं सर्वेण चैव हि ॥ ९१ ॥

दत्त्वा दत्त्वा क्रमादेवं स्वां स्वां मुद्रां च दर्शयेत् ।
एतांस्तु परिवारेभ्यो दद्यात्तन्मात्रविधया ॥ ९२ ॥

वस्त्रं सूत्रमलंकारं स्पर्शतन्मात्रविधया ।
गन्धं पुष्पं च धूपं च गन्धतन्मात्रविधया ॥ ९३ ॥

दीपमादर्शकं चापि रूपतन्मात्रविधया ।
[5]चरून् निवेदयेत् पश्चात् साधकः परमेष्ठिना ॥ ९४ ॥

[1] देवताम् C
[2] वेत्रं च C
[3] वेत्रमुद्रां C
[4] पुष्पं च C
[5] चरुं C

रसतन्मात्रया वापि मूलमन्त्रेण वा पुनः ।
एकबेरविधानं चेद्धोमस्तत्र न विद्यते ॥ ९५ ॥

तत्रापि चाग्निकार्याणि केचिदाहुर्मनीषिणः ।
अग्नौ च कल्पयेद् देवं योगपीठादिलक्षणम्[1] ॥ ९६ ॥

समिधो मूलमन्त्रेण प्रणवेनाज्यमेव च ।
चरुं पुरुषसूक्तेन हुत्वा ध्यायेत् सदाहरिम् ॥ ९७ ॥

आचम्य मूलमन्त्रेण न्यासं कृत्वा तु पूर्ववत् ।
मूर्ध्नि प्रणवमुद्रां च [2]विन्यस्यार्कमुदीक्ष्य च ॥ ९८ ॥

नमस्कृत्वा ततो देवं दद्यादाचमनं ततः ।
बद्ध्वाचमनमुद्रां च उच्छिष्टान्यपनीय च ॥ ९९ ॥

हस्तौ प्रक्षाल्य तोयेन कृत्वा निर्माल्यमुद्रिकाम् ।
मालामञ्जलिपुष्पं च दत्त्वा देवाय मात्रया ॥ १०० ॥

देवस्याभिमुखो भूत्वा जपेच्चैवाक्षमालया ।
मूलमन्त्रद्वयं चापि पञ्चोपनिषदो जपेत् ॥ १०१ ॥

ततश्च विष्णुगायत्रीमष्टोत्तरशतं क्रमात् ।
जप्त्वाथ जपमुद्रां च दर्शयित्वा विचक्षणः ॥ १०२ ॥

कृत्वाष्टाङ्गनमस्कारं जपेत् त्रिर्वै षडक्षरम् ।
अर्चनां च फलं चापि आत्मानं विनिवेद्य च ॥ १०३ ॥

1 योगपीठं विचक्षणः C
2 विन्यस्य समुदीक्ष्य च C

उत्थाय त्रिः परिक्रम्य प्रदक्षिणमनुस्मरन् ।
अग्निं प्रदक्षिणीकृत्य प्रणम्याञ्जलिमुद्रया ॥ १०४ ॥

दक्षिणां च यथाशक्ति वैष्णवाय निवेदयेत् ।
तदनुज्ञासमायुक्तो देवमुद्वासयेत् ततः ॥ १०५ ॥

पात्रे तोयं समादाय कराभ्यां वै पिधाय च ।
सेचयेत् [1]प्रतिमामूर्ध्नि मन्त्रमेतमुदीरयन् ॥ १०६ ॥

जितं त इति यो मन्त्रस्तारत्रयनमोऽन्तकः ।
मानसं तु जपं कृत्वा त्रिस्त्रीन् विष्णूननुस्मरन् ।
यथैव देवता भूता तथैव तु लयं स्मरेत् ॥ १०७ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां ब्रह्मरात्रे
अर्चनाविधिः नवमोऽध्यायः

[1] प्रतिमां C

## ब्रह्मरात्रे दशमोऽध्यायः

सनत्कुमारः—

दानस्य लक्षणं वक्ष्ये मुच्यन्ते येन जन्तवः।
देशं कालं च पात्रं च द्रव्याणां संग्रहं तथा ॥ १ ॥

फलान्यपि च दानानां प्रवक्ष्यन्ते यथातथम्।
कुरुक्षेत्रं गया चैव पुष्करं पुरुषोत्तमम् ॥ २ ॥

प्रयागं ब्रह्मदुर्गं च सालग्रामं च संगमम्।
प्रभासं जाह्नवीपातं तथा बदरिकाश्रमम् ॥ ३ ॥

ब्रह्मावर्तं ब्रह्मसरस्तथा नैमिशमेव च।
कारञ्जरं मतङ्गं च गङ्गाद्वीपं सरिन्मुखम् ॥ ४ ॥

विष्णुतीर्थानि सर्वाणि तथा विष्ण्वालयाश्च वै।
संगमं वैष्णवानां च क्षेत्रं भागवतोषितम् ॥ ५ ॥

यतीनां च तथावासं यतीनां संगमानपि।
देशानिमान् प्रधानांश्च दानाय कथयामि ते ॥ ६ ॥

द्वादश्यां श्रवणे चैव नवम्यां चापि पर्वणि।
सोमसूर्यग्रहे चैव व्यतीपातेऽयने तथा ॥ ७ ॥

विषुवे चैव संक्रान्त्यामुत्सवेषु स्वजन्मनि ।
तथैव चार्चनाकाले दीक्षाकाले तथैव च ॥ ८ ॥

यतीनां दर्शने चापि दीक्षितानां च दर्शने ।
दर्शने वैष्णवानां च कर्मारम्भे तथैव च ॥ ९ ॥

व्रतारम्भे व्रतान्ते च पुत्रजन्मनि चैव हि ।
देयमेतत्तु कालेऽस्मिन् दानं दानफलार्थिभिः ॥ १० ॥

वैष्णवः प्रथमं पात्रं वैष्णवात् समयी परः ।
चक्रवर्ती ततः श्रेष्ठस्त्वभिषिक्तस्ततो वरः ॥ ११ ॥

अभिषिक्ताद् गुरुः श्रेष्ठ आचार्यश्च ततो वरः ।
आचार्याद्भगवान् मुख्यस्तस्माद्विष्णुर्विशिष्यते ॥ १२ ॥

विष्णोः परतरं पात्रं न भूतं न भविष्यति ।
पात्राण्युक्तानि चैतानि द्रव्याणि कथयामि वः ॥ १३ ॥

भूमिर्गावो हिरण्यं च कन्या चान्नं गृहाणि च ।
वस्त्रालंकारशयनान्यासनं वाहनं तथा ॥ १४ ॥

भक्ष्यभोज्यान्नपानानि गन्धपुष्पफलानि च ।
फलवृक्षास्तथा तोयं तोयपात्रं च पादुके ॥ १५ ॥

छत्रं च चामरं चापि वितानं केतुरेव च ।
तैलं सर्पिर्दधि क्षीरं मधुस्नेहगुडादिकम् ॥ १६ ॥

धान्यौषधिविशेषाश्च तिला मूलं वनस्पतिः ।
बीजानि रत्नमणयो लोहानि च परिच्छदाः ॥ १७ ॥

विद्या तीर्थाभिषेकश्च दासी दासा वसूनि च ।
एवमादीनि चान्यानि देयान्येव विशेषतः ॥ १८ ॥

फलं दशगुणं दद्याद् दानं पुण्यस्थले कृतम् ।
तस्माच्छतगुणं काले पात्रे शतगुणं ततः १९ ॥

फलं शतगुणं दद्याद् पात्रेभ्यो वैष्णवे कृतम् ।
तस्माच्छतगुणं दद्यात् समयी फलमुत्तमम् ॥ २० ॥

ततः शतगुणं दद्याद् दीक्षितः फलमुत्तमम् ।
ततः शतगुणं चैव चक्रवर्ती फलं महत् ॥ २१ ॥

ततः शतगुणं दद्यादभिषिक्तः फलं परम् ।
ततः शतगुणं दद्याद् गुरुर्वै फलमुत्तमम् ॥ २२ ॥

ततः शतगुणं दद्यादाचार्यः फलमुत्तमम् ।
ततः शतगुणं दद्याद्भगवान् फलमुत्तमम् ॥ २३ ॥

अनन्तं हि फलं दद्याद्विष्णुर्नात्र विचारणा ।
द्रव्याणां फलभेदं तु दाने वक्ष्याम्यशेषतः ॥ २४ ॥

भूमिस्तु द्विविधा प्रोक्ता व्रीहिक्षेत्रं मरुक्षितिः ।
व्रीहिक्षेत्रं परं तत्र तदलाभे मरुक्षितिः ॥ २५ ॥

द्विविधा व्रीहिभूमिश्च यस्याश्च फलमुत्तमम् ।
अदेवमातृकं चापि देवमातृकमित्यपि ॥ २६ ॥

अदेवमातृकं प्रोक्तं नदीतोयेन पच्यते ।
पच्यते वृष्टिपातेन केवलं देवमातृकम् ॥ २७ ॥

अदेवमातृकं श्रेष्ठं तदलाभे ततः परम् ।
अदेवमातृका या तु सा च भूमिश्चतुर्विधा ॥ २८ ॥

केवला च तथा कृष्टा उप्ता सस्यवतीति च ।
केवला केवला भूमिः कृष्टा कर्षणसंयुता ॥ २९ ॥

उप्ता विन्यस्तबीजा तु पक्का सस्यवती स्मृता ।
एतासामापि सर्वासां गरीयस्युत्तरोत्तरा ॥ ३० ॥

दद्यात् पृथक् पृथक् चैव फलं दशगुणोत्तरम् ।
कुमारी गर्भिणी सूता क्षीरिणी चेति भेदतः ॥ ३१ ॥

गावश्चतुर्विधाः प्रोक्तास्तन्त्रेऽस्मिन् दानकर्मणि ।
वत्सभावमतिक्रान्ता कुमारीत्यभिधीयते ॥ ३२ ॥

गर्भिणी तु वृषारूढा प्रसूता प्रसवस्थिता ।
क्षीरिणी प्राप्तदोहा स्यादतिक्रान्तदशाहिका ॥ ३३ ॥

एतासामपि सर्वासां गरीयस्युत्तरोत्तरा ।
फलं दशगुणं चापि तत्रोभयमुखी परा ॥ ३४ ॥

फलं [1]शतगुणं तासामियं दद्याद्विशेषतः ।
गवां दशगुणं दद्यादनड्वान् फलमुत्तमम ॥ ३५ ॥

तत्रापि द्विविधोऽनड्वान् दम्यश्चादम्य एव च ।
वत्सभावमतिक्रान्तो दम्य इत्यभिधीयते ॥ ३६ ॥

[1] दशगुणं C

धुर्यश्चादम्य इत्युक्तस्तस्माद्धुर्यो विशिष्यते ।
हिरण्यं द्विविधं प्रोक्तमलंकारश्च केवलम् ॥ ३७ ॥

अलंकारीकृतं यत्तदलंकार उदाहृतः ।
केवलं केवलं तस्मादलंकारो विशिष्यते ॥ ३८ ॥

कन्या च द्विविधा प्रोक्ता स्वसुतान्यसुतेति च ।
स्वसुता तु स्वतो जाता यान्यतोऽन्यसुता स्मृता ॥ ३९ ॥

प्रायेणान्यसुता दाने स्वसुताया विशिष्यते ।
दत्ता क्रीतापविद्धा च त्रिविधान्यसुतापि च ॥ ४० ॥

मात्रा भ्रात्रा च पित्रा च दत्ता या मातुलेन वा ।
सा दत्तेति समुद्दिष्टा क्रीता क्रीतैव वस्तुभिः ॥ ४१ ॥

बाल्ये मात्रा परित्यक्ता मृतबन्धुसुहृज्जना ।
अपविद्धेति विज्ञेया दानकर्मणि पूजिता ॥ ४२ ॥

फलं दशगुणं दद्यादेतासामुत्तरोत्तरम् ।
द्विविधं चान्नदानं स्यादग्रान्नं केवलं तथा ॥ ४३ ॥

दद्यात्तु पाकभेदेन स्वयं निम्नासनस्थितः ।
अग्रासने द्विजं स्थाप्य पक्वान्नं चापि संहितम् ॥ ४४ ॥

तदेवाग्रान्नमित्युक्तं केवलं चान्यदुच्यते ।
अग्रान्नं तु प्रधानं स्यात् फलं दशगुणोत्तरम् ॥ ४५ ॥

गृहं च द्विविधं प्रोक्तं केवलं सपरिच्छदम् ।
केवलाद् गृहदानात्तु प्रधानं सपरिच्छदम् ॥ ४६ ॥

वस्त्रं तु द्विविधं प्रोक्तं विचित्रं केवलं तथा ।
विचित्रं चित्रवर्णं तु केवलं शुद्धमुच्यते ॥ ४७ ॥

विचित्रं केवलान्मुख्यं फलं दशगुणोत्तरम् ।
द्विविधं स्याद्विचित्रं च क्षौमं कार्पासमित्यपि ॥ ४८ ॥

मुख्यं क्षौमं तु कार्पासात् फलं दशगुणोत्तरम् ।
शयनासनयानेषु [1]महार्घं तु विशिष्यते ॥ ४९ ॥

एवमेव तु शेषाणां फलं द्रव्यविशेषतः ।
विद्यादाने विशेषो यस्तत्र तं कथयाम्यथ ॥ ५० ॥

लौकिकं वैदिकं चापि तथाध्यात्मिकमेव च ।
त्रिविधं तत् समुद्दिष्टं प्रधानं चोत्तरोत्तरम् ॥ ५१ ॥

लौकिकं त्वर्थशास्त्रादि वैदिकं वेदसंयुतम् ।
अध्यात्मज्ञानमन्यच्च योगतन्त्रादि कथ्यते ॥ ५२ ॥

योगतन्त्रेषु सर्वेषु विष्णुतन्त्रमनुत्तमम् ।
विष्णुतन्त्रेषु सर्वेषु पञ्चरात्रं विशिष्यते ॥ ५३ ॥

पञ्चरात्रे तथा मन्त्रा मन्त्रेष्वर्थो विशिष्यते ।
अर्थेष्वप्युपदेशश्च नोपदेशात् परं ततः ॥ ५४ ॥

सालोक्यं वैष्णवे दानात् सैश्वर्यं समयस्थिते ।
सौभाग्यं दीक्षिते चैव सामीप्यं चक्रवर्तिनि ॥ ५५ ॥

[1] महार्हं C

सैश्वर्यमभिषिक्ते च तदेव च गुरौ कृते ।
सार्ष्टिता च तथाचार्ये सायुज्यं भगवत्यपि ॥ ५६ ॥

न शक्यते फलं वक्तुं दाने वै विष्णुसात्कृते ।
तस्मात् सर्वप्रयत्नेन देयं दानं तु विष्णवे ॥ ५७ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तयां ब्रह्मरात्रे
दानविधिः दशमोऽध्यायः

# ब्रह्मरात्रे एकादशोऽध्यायः

सनत्कुमारः—

मन्त्रकोशं प्रवक्ष्यामि यथावत् तं निबोधत ।
ज्ञानानां परम ज्ञानं मन्त्रज्ञानं प्रचक्षते ॥ १ ॥

मन्त्रमूलाः क्रियाः सर्वा मन्त्रमूलमिदं जगत् ।
मन्त्रमूलो हि भगवान् विष्णुर्मन्त्रमयः प्रभुः ॥ २ ॥

न मन्त्रेण विना किंचित् कृत्यमस्ति जगत्त्रये ।
शब्दब्रह्मसमाख्यातो मन्त्र एव प्रसाधकः ॥ ३ ॥

यथा ब्रह्मा ममाचष्ट मन्त्रेऽस्मिन् भगवान् स्वयम् ।

ओं ; प्रणवः । ॠं ; प्रणवबीजम् । ओं नमो भगवते वासुदेवाय ; द्वादशाक्षरम् । हं ; द्वादशाक्षरबीजम् । ओं नमो नारायणाय ; अष्टाक्षरम् । अं ; अष्टाक्षरबीजम् । क्रुद्धोल्काय स्वाहा । ठठ ; हृदयम् । महोल्काय ; शिरः । वीरोल्काय ; शिखा । अर्धोल्काय ; कवचम् । सहस्रोल्काय स्वाहा । अस्त्राय फट् । अष्टाक्षरपञ्चाङ्गानि । ओं नमो नारसिंहाय महानारसिंहाय दानवशोणितदिग्ध-नखाय पच ग्रह शोषय ग्रन्थय हन सर लिह हुं फट् । दर हुं फट् । हुलु हुं फट् । ज्वल हुं फट् । गर हुं फट् । चुलु हुं फट् । क्षुरु हुं फट् । ए हुं फट् । ऐ हुं फट् । क्षीरु हुं फट् । द्रव सर्वपातालनिवासिनां हृदयान्याकर्षय विद्वेषय भगवन्नारायण वासुदेव हृषीकेश केशव दानवदहन राक्षसान्तक सुदर्शनपाञ्चजन्यनन्दककौमोदकीधर गरुडध्वज त्रिधामन् नमोऽस्तु ते । त्वां

प्रपन्नोऽस्मि । ठठ नारसिंहाय । क्ष्रौं; नारसिंहबीजम् । ज्वल हुं फट्; हृदयम् । स्तोभय हुं फट्; शिरः । गुलु हुं फट्; शिखा । वज्रनखाय ठठ; कवचम् । तीक्ष्णनखाय ठठ; अस्त्रम् । नरसिंहपञ्चाङ्गानि ।

अन्यथा चापरे ब्रुयुर्बीजं पञ्चाङ्गमेव च ॥ ४ ॥

तदप्यत्र यथाशास्त्रं मया चाद्य प्रवक्ष्यते ।

क्ष्रौं; बीजम् । पुरुषविग्रहाय नमः; हृदयम् । सिंहमुखाय नमः; शिरः । भीमरूपाय नमः; शिखा । दिव्यसिंहाय नमः; कवचम् । विस्फारणाय नमः; अस्त्रम् । यमघटोज्झिणि चिन्तामणि सूरु कामदुघे यथामनीषितानि मे दिशन्तु । ओं ठठ यथागतं पापं तथा गच्छतु । ठठ अतिबले, ठठ महाबले, ठठ असिद्धसाधनि अपराजितवैष्णवि नमोऽस्तु ते ठठ ॥ ५ ॥

केचिदेतावतीं विद्यां वदन्त्येवापराजिताम् ।
ब्रह्मा चान्यां महाविद्यां कथयत्यपराजिताम् ॥ ६ ॥

सबीजां च सपञ्चाङ्गां सर्वकर्मप्रसाधनीम् ।
कथयामि यथावत् तां यथैवाह पितामहः ॥ ७ ॥

अभये अमरे अवितथे परितसिद्धे एतानङ्क इमे ध्रुवे अरुन्धति सावित्रि गायत्रि जातवेदसे मानहिस्तालके सरस्वति धरणि धारणि अदिति विरुचि गान्धारि किराति मातङ्गि कृष्णे रुद्राणि सुरभि सुरोपमि हरणि गन्धर्वयक्षराक्षस-भूतपिशाचभयंकरि हर, कालि सर, गौरि धम, विद्ये धम, दुर्गे अले शूलिनि अपमृत्युं नाशय, विषं द्रमिल द्रामिल केशवभगिनि पशुपतिसहिते दुरु गुरु जुरु, योऽस्मान् द्वेष्टि प्रत्यक्षे परोक्षे वा तं हन मर्दय प्रमर्दय तापय शोषय उत्सादय, ब्रह्माणि माहेश्वरि कौमारि वैष्णवि वाराहि इन्द्राणि आग्नेयि चामुण्डे प्रमुण्डे

प्रद्योतय शोधय, विन्ध्यवासिनि इन्द्रे पेन्द्रभगिनि जये विजये शान्तिपुष्टिवर्धनि कामांशुकि सर्वकामप्रदे विश्वेश्वरि सर्वभूतेषु मे प्रियं कुरु, आकर्षय, वारणि भावनि मर्दनि मनोत्सादिनि मालापताकाज्वालामालिनि महागौरि महाशुके महामयूरि आदित्यरश्मिजाले विधम, घण्टेझिणि चिन्तामणि सुरु सुरभिकामदुघे यथामनीषितानि मे दिशन्तु, ठठ भूः, ठठ भुवः, ठठ स्वः, ठठ यथैवागतं पापं तथैव गच्छतु। ठठ महाबले ठठ अतिबले ठठ असिद्धसाधनि ठठ अपराजिते ठठ पराजिते दुर्बीजसाधनि महासाधनि ठठ। क्रिये विक्रिये ठठ। मालिनि शूलिनि ठठ। कृष्णे महाकृष्णे ठठ। नमो भगवति सूर्ये हन ठठ। अपराजिताङ्गानि। ओं नमो भगवते महावराहाय एकदंष्ट्राय मेघोल्काय मेघवर्णाय छन्दोमयाय ब्रह्ममयाय नमोऽस्तु ते। हन दह पच भौम महाभौम हुरु सूरु खन ठठ भूः बीजम्। एकशृङ्गाय नमः। व्योमोल्काय नमः। तेजोऽधिपतये नमः। विश्वरूपाय नमः। महादंष्ट्राय नमः। महावराहपञ्चाङ्गानि। ओं नमो भगवते ब्रह्मणे ब्रह्मेशानाय विष्णवे महाविष्णवे स्वयंभुवे चतुर्मुखाय वेदाधिपतये पद्मासनाय हंसवाहनाय हंसाय महाहंसाय सावित्रीपतये सर्वलोकेश्वराय सर्वदेवाधिपतये अनुगृहाण मां पोषय ठठ। तत् सं बीजम्। अजाय नमः। हिरण्याय नमः। वेदान्ताय नमः। द्रुहिणाय नमः। आत्मभुवे नमः। ब्रह्मपञ्चाङ्गानि। ओं षौं नमः पराय परमेष्ठ्यात्मने नमः। ओं यां नमः पराय पुरुषात्मने नमः। ओं रां नमः पराय विश्वात्मने नमः। ओं वां नमः पराय निवृत्त्यात्मने नमः। ओं लां नमः पराय सर्वात्मने नमः। पञ्चोपनिषदः। ओं मं नमः पराय शब्दात्मने नमः। ओं भं नमः पराय स्पर्शात्मने नमः। ओं बं नमः पराय रूपात्मने नमः। ओं फं नमः पराय रसात्मने नमः। ओं पं नमः पराय गन्धात्मने नमः। तन्मात्राः। ओं हं वासुदेवाय। ओं सं संकर्षणाय। ओं षं प्रद्युम्नाय। ओं शं अनिरुद्धाय। मूर्तिमन्त्राः। ओं •ां शान्त्यै नमः। ओं सां श्रियै नमः। ओं षां सरस्वत्यै नमः। ओं शां रत्यै नमः। देवीमन्त्राः। ओं नमो भगवते सुदर्शनाय महाचक्रराजाय रक्ष माम्, मम शत्रून् नाशय दर दारय

भिन्धि ज्वल ज्वालय सह शतसहस्रकिरण प्रज्वलितशिखादुष्प्रेक्ष दारुण दुःसहदहनात्मक दह पच चट चाटय गर्ज त्रासय सूरु हुरु मुरु चुरु यन्त्रांश्चूर्णय परप्रयुक्तानां मन्त्राणामष्टशतं स्फोटय । परिसंधिं गृह्ण । परमन्त्रान् संहर ररर । मद्यमांसामिषरुधिरभोजनप्रिय तीक्ष्णासिधार असुरेन्द्रसंग्रामयन्त्रमथन शङ्ख-चक्रचापोद्यतकर नारायणवरास्त्र ह किलि विलि मिलि बलि मथ मर्दय यक्षराक्षस-भूतपिशाचकूश्माण्डशाकिनिरेवतीः विनाशय ज्वरसर्पलूतविषविष्टम्भक हर मारय ललल घुघुघु त्रिविक्रम बलिनर पुराण विष्वक्सेनकरवरायुध गृहाण मोदय भञ्जय आविशकस्थ विष्णुकवचं स्मर ठठ। महासुदर्शनविद्या। सं बीजम्। आचक्राय ठठ विचक्राय ठठ सूर्यचक्राय ठठ महाचक्राय ठठ । सुदर्शनपञ्चाङ्गानि । ओं नमो भगवते नन्दकाय ज्वल हुं फट् ठठ । खड्गः। ओं नमो भगवत्यै गदायै भवरूपिण्यै कौमोदक्यै हुं फट् ठठ। गदा । ओं नमो भगवते शार्ङ्गाय महाधर्माय हुं फट् ठठ। धनुः। ओं नमो भगवते पाञ्चजन्याय शङ्खपालाय सर्वपाताल-वासिनां विक्षोभणकराय हुं फट् ठठ। शङ्खः । ओं नमो भगवते सुदर्शनाय महाचक्रराजाय ज्वल हुं फट् ठठ । सुदर्शनम् । एषां हुंकार एव पञ्चाङ्गम्। ओं लं नमः परायै वागीश्वर्यै नमः । ओं लं नमः परायै क्रियायै नमः । ओं लैं नमः परायै कीर्त्यै नमः। ओं लौं नमः परायै लक्ष्म्यै नमः। ओं लं नमः परायै सृष्ट्यै नमः। ओं लैं नमः परायै विद्यायै नमः । ओं लां नमः परायै कान्त्यै नमः। मातृमन्त्राः। रुं बीजम्। अं हृदयम्। सं शिरः। आं शिखा। हुं कवचम्। फट् अस्त्रम् । मातृपञ्चाङ्गानि। ओं नमो भगवते गरुडाय पुरुषोत्तमवाहनाय अरुण-कनीयसे नागशोणितदिग्धाङ्गाय ररर हुं फट् ठठ लल हुं फट् ठठ। यवव हुं फट् ठठ। धधध हुं फट् ठठ। वैनतेयाय पक्षिराजाय नमोऽस्तु ते। वैं बीजम्। सुपर्णाय नमः; हृदयम्। वक्रतुण्डाय; शिरः । सुपर्णाय; शिखा। खगेश्वराय; कवचम्। अनन्तवीर्याय; अस्त्रम्। अङ्गानि। ओं खषोल्काय नमः। ऋग्विधात्रे अर्कमर्किणे महाश्वेताय। सूर्यमन्त्राः। रं बीजम्। व्योममुद्रायै नमः। चतुर्मुखाय गीर्वाणाधिपतये नमः। सर्वतेजसामुत्कृष्टतेजसे ज्वालामालिने

नमः। सूर्याङ्गानि। वर्गोऽसि पाप्मानं मे वृद्धि। उपस्थानम्। प्रवर्गोऽसि पाप्मानं मे वृद्धि। मध्याह्ने। संवर्गोऽसि। सायम्। सप्तार्चिषे नमः। हुं फट् ठठ। अग्निबीजम्। हुतभुजे नमः। भूमिदेवाय नमः। ऊर्ध्वशिखाय। हव्यवाहनाय। ज्वल प्रज्वल हुं फट्। अग्न्यङ्गानि। अर्वाणाय नमः। उपस्थानमन्त्रः। हव्यवाहनाय विद्महे सप्तजिह्वाय धीमहि। तन्नो वह्निः प्रचोदयात्। ओम् अं बीजानां बीजम्। ओं पों नमः। मुद्रामन्त्रः ॥ ८ ॥

एष मन्त्रसमुद्देशः कथंचित् कथितो मया।
मन्त्रा विसर्जनीयान्ताः सर्वे शत्रुविनाशनाः ॥ ९ ॥

हुंकारान्ताः फडन्ताश्च मारणोच्चाटनावहाः।
वधबन्धपरिक्लेशं वौषडन्ताश्च कुर्वते ॥ १० ॥

नमोऽन्ताः प्रणवान्ताश्च शान्तिभोगसुखप्रदाः।
अनुस्वारमकारान्ता विषसर्पविनाशनाः ॥ ११ ॥

स्वरान्ताः सर्वमुद्रास्तु सर्वग्रहनिवारणाः।
हुंफट्तारयुना मन्त्रा यक्षरक्षोविनाशनाः ॥ १२ ॥

हुंकारादिफडन्ताश्च सर्ववश्येषु पूजिताः।
हुंकारान्ताः फडन्ताश्च पूजिता राजमारणे।
हुंकाराद्यास्तदन्ताश्च परचक्रनिवारणाः ॥ १३ ॥

फडाद्याश्च फडन्ताश्च देववश्येषु पूजिताः।
प्रणवाद्यन्तरूपाश्च सर्वकामप्रसाधकाः ॥ १४ ॥

ब्रह्मरात्रं मया प्रोक्तमेतत् सर्वं समासतः ।
एतद्यशस्यमायुष्यं स्वर्ग्यं धन्यं महाबलम् ॥ १५ ॥

ब्रह्मणा कथितं पूर्वं श्रुत्वा नारायणात् प्रभोः ।
तत्प्रसादेन वक्ष्यामि शिवरात्रमतः परम् ॥ १६ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां ब्रह्मरात्रे
मन्त्रकोशः एकादशोऽध्यायः

ब्रह्मरात्रं संपूर्णम

# शिवरात्रम्

## प्रथमोऽध्यायः

सनत्कुमार उवाच—

शिवरात्रं प्रवक्ष्यामि यथाह भगवाञ्छिवः ।
तिथियागादि सर्वं तु समासोक्त्या ब्रवीमि वः[1] ॥ १ ॥

याः पञ्चदश संप्रोक्तास्तिथयः शुक्लपक्षगाः ।
[2]तासु यागो यथायोगं वह्न्यादीनां मयोच्यते ॥ २ ॥

वह्नेरायतनं कुर्याद् वह्निस्थाने विचक्षणः ।
प्रत्यग्द्वारं तथैशाने नान्यत्र तु कथंचन ॥ ३ ॥

शिलाभिरिष्टकाभिर्वा काष्ठैर्वा मृद्भिरेव वा ।
कुर्यात् प्रासादविस्तारं पूर्वोक्तक्रमयोगतः ॥ ४ ॥

प्रासादयुक्त्या प्रतिमां नवतालविधानतः ।
कारयेल्लोहपाषाणमृद्दामन्यतमेन च ॥ ५ ॥

त्रिशिखं रक्तवर्णं तद्रक्तमाल्याम्बरस्रजम् ।
द्विमुखं च त्रिरक्ताक्षं त्रिपदं चाष्टबाहुकम् ॥ ६ ॥

रक्तकेशनखश्मश्रु वह्निरूपं तु कारयेत् ।
चत्वारः परिवाराश्च तस्य प्रोक्ता हविर्भुजः ॥ ७ ॥

[1] तम् D

[2] For names of deities presiding over various Tithi-s, see the *Pādmatantra*, Mysore ed., 1891, Caryāpāda, ch. 30, verses 2 and 3.

[1]स्वधा चैव सुधा चापि पश्चादुत्तरदक्षिणे ।
कार्ये चामरहस्ते तु पीते शुक्लाम्बरस्रजौ ॥ ८ ॥

स्वाहा चापि मनुश्चापि अर्चनापीठपार्श्वयोः ।
उत्तरे दक्षिणे कुर्याच्छ्यामे रक्ताम्बरस्रजौ ॥ ९ ॥

कृताञ्जली अथासीने किंचित् प्रह्वशिरोधरे ।
स्थिते चामरहस्ते तु स्थितो देवो हुताशनः ॥ १० ॥

आसनं शयनं यानं प्रतिषिद्धं हविर्भुजः ।
प्रतिष्ठां पूर्ववत् कुर्याद्विदं तु कथयामि वः ॥ ११ ॥

होमस्तु वह्निगायत्र्या खादिराः समिधः स्मृताः ।
प्रतिष्ठां वह्निमन्त्रेण कारयेत् तन्त्रवित्तमः ॥ १२ ॥

रक्तैर्गन्धैश्च माल्यैश्च चरुभिर्बलिभिस्तथा ।
कारयेच्छेषकर्माणि पूर्वोक्तविधिना बुधः ॥ १३ ॥

आराधनविधिं वक्ष्ये यथावत् तं निबोधत ।
स्थण्डिले कल्पयेत् पद्ममष्टपत्रं सकर्णिकम् ॥ १४ ॥

कर्मार्चां कर्णिकायां तु विन्यसेदोमिति ब्रुवन् ।
प्रोक्षयेद् गन्धतोयेन विकिरेदक्षतैरपि ॥ १५ ॥

न्यासं च वह्निमन्त्रेण स्वदेहे विनियोजयेत् ।
तथैव प्रतिमायां च कुर्यान्न्यासं यथाविधि ॥ १६ ॥

1 स्वयं D

पश्चादावाहयेद् देवं प्रणवेन समाहितः ।
दर्भकूर्चासनं दत्त्वा ततः स्थानानि कल्पयेत् ॥ १७ ॥

प्राच्यामाहवनीयस्य दक्षिणाग्नेश्च दक्षिणे ।
ततो वै गार्हपत्यस्य प्रतीच्यां दिशि कल्पयेत् ॥ १८ ॥

औपासनस्य चोदीच्यां सभ्यस्याग्नेयगोचरे ।
क्रव्यादो नैर्ऋते पश्चात् वायव्ये वैद्युतस्य च ॥ १९ ॥

ईशाने बडबाग्नेस्तु कल्पयित्वा विचक्षणः ।
आसनं पाद्यमर्घ्यं च तथैवाचमनीयकम् ॥ २० ॥

वस्त्रं च ब्रह्मसूत्रं च प्रणवेन निवेदयेत् ।
गन्धं पुष्पमलंकारं दीपं धूपं चरुं तथा ॥ २१ ॥

दद्याच्च वह्निगायत्र्या तया चैव बलिं हरेत् ।
परिवारान् स्वनाम्नैव पूजयित्वा यथाक्रमम् ॥ २२ ॥

गायत्र्योद्वासनं कुर्याच्छेषं कृत्वा तु पूर्ववत् ।
उत्सवं कथयिष्यामि प्रतिपद्यर्थसिद्धये ॥ २३ ॥

शुक्लपक्षे यथाशास्त्रमहोरात्रमुपोषितः ।
रक्तचन्दनचूर्णेन चक्रं कृत्वा यथाविधि ॥ २४ ॥

नाभिक्षेत्रे लिखेत् पद्ममष्टपत्रं सकर्णिकम् ।
तत्र देवं तु विन्यस्य पूजयेत् पूर्ववत् क्रमात् ॥ २५ ॥

रक्तमाल्याम्बरधरो रक्तगन्धानुलेपनः ।
रक्तैर्गन्धैश्च पुष्पैश्च चरुभिः पूजयेत् ततः ॥ २६ ॥

सार्ववर्णिकमन्नाद्यं तस्मिन्नहनि कारयेत् ।
एवमिष्टे हुताशेऽस्मिन्निष्टाः स्युः सर्वदेवताः ॥ २७ ॥

तस्मात् सर्वप्रयत्नेन पूजयेदग्निमात्मवान् ।
एवमेकेन यागेन सर्वैः पापैः प्रमुच्यते ॥ २८ ॥

पतितोऽपि प्रमुच्येत किं पुनः शुद्धमानसः ।
अग्नियाग इति प्रोक्तो ब्रह्मयागं ब्रवीमि वः ॥ २९ ॥

प्रासादं पश्चिमद्वारं ब्रह्मणो ग्राममध्यमे ।
चतुर्मुखं चतुर्द्वारं सर्वतोभद्रमेव वा ॥ ३० ॥

कुर्यादेवंविधानेन यथावित्तानुसारतः ।
प्राकारं तु ततः कुर्याच्चतुर्भिर्गोपुरैर्युतम् ॥ ३१ ॥

गोपुराणां ततः कुर्यादन्तर्दिग्देववेदिकाः ।
दिग्देवान् स्थापयेन्मध्ये मध्ये मध्ये यथा भवेत् ॥ ३२ ॥

कोणेषु कोणदेवानामेवं गोपुरवद्भवेत् ।
दिशादेवांस्तु चतुरो ब्रह्मणोऽभिमुखान् बुधः ॥ ३३ ॥

प्राक्प्रत्यग्वदनाञ्छेषान् कोणदेवांश्च कारयेत् ।
निर्ऋत्यां चापि वायव्ये प्राङ्मुखे चैव देवते ॥ ३४ ॥

ईशाने च तथाग्नेये स्यातां प्रत्यङ्मुखे ततः ।
प्रासादस्यानुरूपेण प्रतिमां कारयेद्बुधः ॥ ३५ ॥

चतुर्मुखं चतुर्बाहुं जटामकुटधारिणम् ।
हिरण्यवर्णमासीनं पीताम्बरधरं प्रभुम् ॥ ३६ ॥

ब्रह्माणं कारयेत् तत्र पूर्वोक्तैर्द्रव्यविस्तरैः ।
आसीनमेव कुर्वीत न स्थितं शयितं न च ॥ ३७ ॥

परिवारान् प्रवक्ष्यामि उत्तमाधममध्यमान् ।
उत्तमा द्वादश प्रोक्ता मध्यमाः षट् प्रकीर्तिताः ॥ ३८ ॥

अधमाश्चापि चत्वारः परिवारा यथाक्रमम् ।
कपिलः कश्यपो दक्षो दक्षिणं पक्षमाश्रिताः ॥ ३९ ॥

रुद्रो वह्निर्मनुश्चापि[1] वामपार्श्वे समाश्रिताः ।
पश्चाच्चामरहस्ते तु सावित्री च[2] सरस्वती ॥ ४० ॥

दक्षिणे चोत्तरे भागे स्थिते देव्यौ च पृष्ठतः ।
भृगुश्च नारदश्चापि अर्चनापीठपार्श्वयोः ॥ ४१ ॥

दक्षिणे चोत्तरे कार्यौ स्वासीनौ च कृताञ्जली ।
तयोस्तु पृष्ठतः कार्यौ चन्द्रादित्यौ ततः स्थितौ ॥ ४२ ॥

षण्णां तु कपिलादीनामासनं स्थानमेव वा ।
ब्रह्माणं दशतालेन नवतालेन चेतरान् ॥ ४३ ॥

त्रीन् मुनीनष्टतालेन कारयेत् तन्त्रवित्तमः ।
शुक्लो वर्णेन कपिलः कश्यपः पीतवर्णयुक् ॥ ४४ ॥

दक्षस्त्वजमुखः शुक्लो रुद्रोऽग्निश्चाग्निसंनिभौ ।
मनुः श्यामः सिते देव्यौ वर्णतः परिकीर्तिते ॥ ४५ ॥

[1] यमश्चापि E     [2] तु D

पद्मकिंजल्कवर्णाभो भृगुः शुक्लश्च नारदः ।
शुक्लरक्तौ च चन्द्रार्कौ वर्णतः परिकीर्तितौ ॥ ४६ ॥

पद्मासनो भवेद् ब्रह्मा शेषाः सर्वे त्वनासनाः ।
सहासनं न कुर्वीत ब्रह्मणोऽन्यैस्तु दैवतैः ॥ ४७ ॥

यस्तु मोहेन वै कुर्याद् विनाशमचिराद् व्रजेत् ।
प्रासादस्याग्रतः कुर्याद्धंसस्थानं विचक्षणः ॥ ४८ ॥

ग्रामस्य मध्ये पूर्वे च पश्चिमद्वारमारभेत् ।
दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखं ततः ॥ ४९ ॥

न कुर्यात् कोणदेशेषु ब्रह्मणः स्थानमुत्तमम् ।
आग्नेये कोणदेशे तु राष्ट्रनाशं विनिर्दिशेत् ॥ ५० ॥

नैर्ऋते कोणदेशे तु ब्राह्मणानां च विप्लवः ।
वायव्ये राजनाशः स्यादीशाने सर्वसंक्षयः ॥ ५१ ॥

तस्मात् सर्वप्रयत्नेन [1]कोणं तु परिवर्जयेत् ।
मध्यमास्तु परीवारा वक्ष्यन्ते अनुपूर्वशः[2] ॥ ५२ ॥

देव्यौ मुनी च चन्द्रार्कौ षडेते मध्यमाः स्मृताः ।
चत्वारो मुनिचन्द्रार्का अधमाः परिवारकाः ॥ ५३ ॥

पूजाविधिमथो वक्ष्ये यथावत् तं निबोधत ।
प्रणवं मूर्ध्नि विन्यस्य योगपीठं प्रकल्पयेत् ॥ ५४ ॥

[1] कोणं तु D [2] आनुपूर्व्यशः E

धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमादिमे ।
योगपीठस्य पादाः स्युराग्नेयादिदिगाश्रिताः ॥ ५५ ॥

मध्यपादो भवेद्रुद्रः पद्मं तस्योपरि न्यसेत् ।
पद्मस्य कर्णिकामध्ये ब्रह्मबीजं च विन्यसेत् ॥ ५६ ॥

प्रणवेनाथ कर्माचां ब्रह्मबीजोपरि न्यसेत् ।
आवाहयेत् ततो देवं ब्रह्मबीजेन साधकः ॥ ५७ ॥

दत्त्वासनार्घ्यपाद्यानि ततः स्थानानि कल्पयेत् ।
प्राच्यां तु सामवेदस्य यजुर्वेदस्य दक्षिणे ॥ ५८ ॥

ऋग्वेदस्य प्रतीच्यां तु सौम्ये चाथर्वणस्तथा ।
आग्नेये चैव सावित्र्याः सरस्वत्याश्च नैर्ऋते ॥ ५९ ॥

वायव्यां चैव संध्यायाः सृष्टेरीशानगोचरे ।
द्वितीयावरणे पश्चान्मुद्रास्थानं प्रकल्पयेत् ॥ ६० ॥

प्राच्यां च ब्रह्ममुद्राया दक्षिणस्यां कमण्डलोः ।
प्रतीच्यामक्षमालायाः कूर्चस्यैवोत्तरे तथा ॥ ६१ ॥

अग्नावोंकारमुद्राया ऋचो निर्ऋतिगोचरे ।
वायव्ये वेदमुद्रायाः पद्मस्येशानगोचरे ॥ ६२ ॥

तृतीयावरणे पश्चाल्लोकपालांस्तु विन्यसेत् ।
स्नानं तथासनं पाद्यमर्घ्यमाचमनीयकम् ॥ ६३ ॥

वस्त्रं च ब्रह्मसूत्रं च ब्रह्मबीजेन दापयेत् ।
गन्धं पुष्पमलंकारं दीपं धूपं चरुं तथा ॥ ६४ ॥

प्रणवेनैव दद्यात्तु स्वनाम्नान्यांस्तु पूजयेत् ।
धूपैर्गन्धैश्च पुष्पैश्च चरुभिश्चाभिपूजयेत् ॥ ६५ ॥

स्थानान्यग्नौ तथा कृत्वा पूजयेद्धोमकर्मणा ।
ब्रह्मविद्याजपं कृत्वा ब्रह्ममुद्रां विधाय च ॥ ६६ ॥

उद्वासयेत् ततो देवं ब्रह्मबीजेन साधकः ।
ब्रह्मरात्रे प्रतिष्ठोक्ता विष्णोर्नारायणस्य ह ॥ ६७ ॥

तद्रुदस्य प्रतिष्ठोक्ता तस्मान्नोक्ता मयाधुना ।
तिथियागं प्रवक्ष्यामि ब्रह्मणः परमेष्ठिनः ॥ ६८ ॥

उपोष्य च द्वितीयायां स्नात्वा सम्यग्यथाविधि ।
शुक्लचन्दनचूर्णेन ततश्चक्रं समालिखेत् ॥ ६९ ॥

नाभिक्षेत्रे लिखेत् पद्मं ततो द्वादशभिर्दलैः ।
शेषं तु पूर्ववत् कुर्यात् परिवारादिसंग्रहम् ॥ ७० ॥

ब्रह्मयाग इति प्रोक्तः सर्वपापप्रणाशनः ।
ततो धनदयागं तु प्रवक्ष्यामि यथातथम् ॥ ७१ ॥

धनदस्यालयं कुर्यात् ग्रामस्योत्तरपार्श्वतः ।
हस्तिपृष्ठं च नाम्ना तु दक्षिणद्वारमुत्तमम् ॥ ७२ ॥

त्रिभागहीनः प्रासादो गोपुरात्तु विधीयते ।
तस्मादर्धविहीनं च प्राकारस्योच्छ्रयं विदुः ॥ ७३ ॥

शिलाभिरिष्टकाभिर्वा कुर्यान्नान्यैः कदाचन ।
प्रासादयुक्त्या कर्तव्या प्रतिमा लोहमृन्मयी ॥ ७४ ॥

नवतालस्य मानेन स्थितं कुर्याद्धनेश्वरम् ।
अष्टतालस्य मानेन केचित्तं परिचक्षते ॥ ७५ ॥

त्रिपादं वृत्तपिङ्गाक्षं पीनरक्ताम्बरस्रजम् ।
सपट्टमुण्डमालं च चूलिकामौलिधारिणम् ॥ ७६ ॥

तुङ्गनासं च तुङ्गास्यं पिङ्गकेशं बृहद्भुजम् ।
धनेशं कारयेत् तत्र यथावित्तानुसारतः ॥ ७७ ॥

परिवारद्वयं प्रोक्तमृद्धिगुप्ती च पृष्ठतः ।
चामरव्यग्रहस्ते तु स्थिते देव्यौ सितप्रभे ॥ ७८ ॥

प्रतिष्ठा शान्तिहोमेन कार्या धनदविद्यया ।
[1]सा चों नमः कुबेराय इति विद्या धनेशिनः ॥ ७९ ॥

तयैव जुहुयादाज्यं दधिक्षीरमधूनि च ।
द्वारस्योभयपार्श्वे तु पीनरूपौ सितप्रभौ ॥ ८० ॥

शङ्खपद्मनिधी कार्यौ स्वासीनौ मृन्मयौ शुभौ ।
तस्य पूजां प्रवक्ष्यामि कुबेरस्य महात्मनः ॥ ८१ ॥

कुर्याद्वै स्थण्डिले पद्ममष्टपत्रं सकर्णिकम् ।
कर्मार्चां तत्र विन्यस्य ततो धनदविद्यया ॥ ८२ ॥

न्यासं सप्ताक्षरैः कृत्वा देवमावाहयेत् तदा[2] ।
स्नानादीन्यपि कर्माणि तथा कुर्याद्विचक्षणः ॥ ८३ ॥

[1] स च D. E [2] ततः D

मद्यमांसोपहारैश्च रक्तैश्च कुसुमैः शुभैः ।
हरिद्राचरुणा चैव पूजयेत् तन्त्रवित्तमः ॥ ८४ ॥

एवमेव तृतीयायामहोरात्रमुपोषितः ।
पूजयेद्धैरिकैश्चूर्णैश्चक्रं कृत्वा विचक्षणः ॥ ८५ ॥

षाडवापूपिकाधानैर्लाजैः सक्तुभिरेव च ।
धनेशं पूजयेद् देवमग्निकार्यबहिष्कृतम् ॥ ८६ ॥

मुद्गान्नं भोजयेद्विप्रान् कृसरान्नमथापि वा ।
अनेन विधिना यस्तु धनेशं पूजयेन्नरः ॥ ८७ ॥

सर्वान् कामानवाप्नोति वित्तवांश्च विशेषतः ।
धनेशयागः संप्रोक्तो गणेशस्य प्रवक्ष्यते ॥ ८८ ॥

ग्रामस्य दक्षिणे पार्श्वे स्थानं गणपतेर्भवेत् ।
मण्डपं वाथ कूटं वा प्रासादं वाथ शक्तितः ॥ ८९ ॥

उत्तराभिमुखद्वारं कारयेत् तन्त्रवित्तमः ।
[1]कारयेत् प्रतिमां पश्चात् पूर्वोक्तैर्द्रव्यविस्तरैः ॥ ९० ॥

सितवर्णं चतुर्बाहुं महाकुक्षिं महाभुजम् ।
शूर्पकर्णं महानासमेकदंष्ट्रं गजाननम् ॥ ९१ ॥

कुर्यादपरिवारं तु गणेशं चासनाश्रितम् ।
अष्टतालप्रमाणेन रक्तास्यं रक्तलोचनम् ॥ ९२ ॥

1 प्रतिमां कारयेत् D

वदन्ति सप्ततालेन षट्तालेनापि वा परे ।
मुण्डमालापरीतांसं चूडामकुटधारिणम् ॥ ९३ ॥

प्रतिष्ठां शान्तिहोमेन तद्गायत्र्या तु कारयेत् ।
ओं नमो गणाधिपतये । शूर्पकर्णाय विद्महे कोटिरक्षाय धीमहि ।
तन्नो गणपतिः प्रचोदयात् ॥ ९४ ॥

गायत्रीयं गणपतेः प्रतिष्ठाकर्मसु स्मृता ।
गकारस्तस्य बीजं स्यात् तेन न्यासोऽस्य मूर्धनि ॥ ९५ ॥

कृत्वा प्रतिष्ठामेवं तु पूजनं पुनरारभेत् ।
गायत्र्या विन्यसेत् पद्ममर्चनापीठमध्यमे ॥ ९६ ॥

मेघोल्कायेति मन्त्रेण स्वाहान्तेन यथाविधि ।
कर्मार्चामर्चनापीठे विन्यसेत कर्णिकोपरि ॥ ९७ ॥

तेनैवावाहयेद्देवं गणेशं विघ्ननायकम् ।
आवाह्य हस्तिमुद्रां च कूर्चमुद्रां च दर्शयेत् ॥ ९८ ॥

स्नानादिशेषकर्माणि मेघोल्कायेति कारयेत् ।
फलैश्च विविधैर्भक्ष्यैस्तद्गायत्र्या तु पूजयेत् ॥ ९९ ॥

एवं संपूजयेद् देवं चतुर्थ्यां समुपोष्य ह ।
तस्य विघ्ना विनश्यन्ति अचिराद्गणपूजया ॥ १०० ॥

गणेशयागः संप्रोक्तः श्रीयागं तु ब्रवीम्यतः ।
श्रियः स्थानं तु पूर्वस्यां पश्चिमायामथापि वा ॥ १०१ ॥

उत्तरस्यां तु वा कुर्यान्न चान्यत्र कथंचन ।
प्राच्यां तु पश्चिमद्वारं प्राग्द्वारं पश्चिमे तथा ॥ १०२ ॥

उत्तरे दक्षिणद्वारं श्रियः प्रासाद इष्यते ।
एवं च विधिना कार्यं पूर्वोक्तैर्द्रव्यविस्तरैः ॥ १०३ ॥

ततश्च प्रतिमां कुर्यादष्टतालप्रमाणतः ।
पूर्वोक्तैर्द्रव्यविस्तारैर्यथालाभं स्वशक्तितः ॥ १०४ ॥

पद्मकिंजल्कवर्णाभां द्विभुजां पद्मधारिणीम् ।
शुक्लमाल्याम्बरधरां चूडामकुटधारिणीम् ॥ १०५ ॥

मुण्डमालापरीतांसां पद्मकर्णावतंसिकाम् ।
आसीनां कारयेद् देवीमासने पद्मविष्टरे ॥ १०६ ॥

प्रतिष्ठां शान्तिहोमेन देवीमन्त्रेण कारयेत् ।
पद्माष्टशतहोमं च कुर्यात् तेनाविशेषतः ॥ १०७ ॥

एवं प्रतिष्ठां कृत्वा तु पूजां च[1] पुनरारभेत् ।
पूर्ववत् स्थण्डिलं पद्मं कर्मार्चास्थापनामपि ॥ १०८ ॥

देवीमन्त्रेण कृत्वा तु तथा चैव बलिं हरेत् ।
पञ्चगव्येन संप्रोक्ष्य पद्मं चावाहयेच्छ्रियम् ॥ १०९ ॥

देवीमन्त्रेण चावाह्य कुर्याच्छेषं तथैव च ।
शुक्लैः पुष्पैश्च गन्धैश्च चरुभिः पायसेन च ॥ ११० ॥

पद्मैश्च पूजयेद् देवीं विसर्गं तेन कारयेत् ।
तिथियागमथो वक्ष्ये शान्तिपुष्टिविवर्धनम् ॥ १११ ॥

[1] तु D

अथोपोष्य च पञ्चम्यां श्रीकामः पूजयेच्छ्रियम् ।
श्रीसूक्तेन श्रियं देवीं पूजयेच्चक्रमध्यमे ॥ ११२ ॥

ततः पञ्चदशर्चं तु श्रीसूक्तं नाम नामतः ।
तेनाराधनविस्तारं प्रवक्ष्यामि यथातथम् ॥ ११३ ॥

देवीमृचाद्ययावाह्य विष्टरं तु द्वितीयया ।
दद्यात् तृतीयया पाद्यं चतुर्थ्यार्घ्यमतः परम् ॥ ११४ ॥

पञ्चम्याचमनीयं च षष्ठ्या च स्नानविस्तरम् ।
वस्त्रयुग्मं च सप्तम्या अष्टम्या गन्धमेव च ॥ ११५ ॥

नवम्या माल्यपुष्पादीन् दशम्या दीपमेव च ।
एकादश्या तथा धूपं द्वादश्या चरुमेव च ॥ ११६ ॥

अञ्जलिं च त्रयोदश्या चतुर्दश्या नमस्कृतिम् ।
कृत्वैवं पञ्चदश्या च देवीमुद्वासयेत् ततः ॥ ११७ ॥

श्रीयागः कथितस्त्वद्य स्कन्दयागं ब्रवीमि वः ।
ग्रामस्योत्तरतः कुर्यात् स्कन्दस्यायतनं महत् ॥ ११८ ॥

प्राग्द्वारं ताम्रचूडाङ्कं हस्त्यङ्कं वा यथाविधि ।
असंभवे चोत्तरस्या दिक्षु सर्वासु कारयेत् ॥ ११९ ॥

निर्ऋतीशानकोणं तु वर्जयित्वा विचक्षणः ।
निर्ऋते ग्रामनाशः स्यादीशाने राष्ट्रनाशनम् ॥ १२० ॥

तस्मात् सर्वप्रयत्नेन कोणे तु परिवर्जयेत् ।
प्रासादस्यानुसारेण प्रतिमां कारयेत् ततः ॥ १२१ ॥

मृदा प्रशस्ता प्रतिमा तदलाभेऽन्यसंग्रहः ।
दाडिमीपुष्पसंकाशं दशसंवत्सराकृतिम् ॥ १२२ ॥

चतुर्भुजं शक्तिधरं चूडामकुटधारिणम् ।
मुण्डमालापरीतांसमुभयांसोपवीतिनम् ॥ १२३ ॥

वत्सकिङ्किणिपादं तु पीतमाल्याम्बरान्वितम् ।
शक्तिहस्तं तु रक्ताक्षं रक्ताङ्घ्रिकरपल्लवम् ॥ १२४ ॥

अष्टतालप्रमाणेन सप्ततालेन वा पुनः ।
षट्तालेनापि वा कुर्यादितो हीनं न कारयेत् ॥ १२५ ॥

स्कन्दमेवं प्रकुर्वीत स्थितमासीनमेव वा ।
पादपीठं भवेत् पद्मं[1] स्थानं मायूरवाहने ॥ १२६ ॥

चामरव्यग्रहस्ते तु विद्या प्रज्ञा च पृष्ठतः ।
दक्षिणे चोत्तरे कार्ये सिते रक्ताम्बरस्रजौ ॥ १२७ ॥

मुण्डमालापरीतांसे चूडामकुटशोभिते ।
प्रासादस्याग्रतः कुर्यान्मयूरस्थानमुत्तमम् ॥ १२८ ॥

शान्तिहोमविधानेन प्रतिष्ठा समुदाहृता ।
नमोऽस्तु षण्मुखायेति मूलमन्त्रेण कारयेत् ॥ १२९ ॥

एवं प्रतिष्ठां कृत्वा तु न्यासं चैव तु कारयेत् ।
विद्यायै चैव मेधायै प्रज्ञायै शक्तयेऽपि च ॥ १३० ॥

[1] पद्मैः E

स्वाहा चैव स्वधा चैव शान्तिहोमे यथाक्रमम् ।
दिशाहोमस्तु मूलेन समिधो वटवृक्षजाः ॥ १३१ ॥

पूजामस्य प्रवक्ष्यामि पुरा प्रोक्तां शिवेन तु ।
अष्टपत्रं ततः पद्मं मूलमन्त्रेण कल्पयेत ॥ १३२ ॥

कर्मार्चां तत्र विन्यस्य तेन मन्त्रेण साधकः ।
तेनैवावाहयेद् देवं दद्यात् तेनैव चासनम् ॥ १३३ ॥

ततश्च परिवाराणां स्थानानि परिकल्पयेत् ।
प्राच्यां तु देवसेनाया विद्याया दक्षिणे तथा ॥ १३४ ॥

मेधायाः पश्चिमे भागे प्रज्ञायाश्चोत्तरे तथा ।
आग्नेये च तथा शक्तेर्निर्ऋत्यां कुक्कुटस्य च ॥ १३५ ॥

मयूरस्य च वायव्ये द्विपस्येशानगोचरे ।
अर्चयेन्मूलमन्त्रेण गुहं शेषान् स्वनामभिः ॥ १३६ ॥

ततश्चन्दनकल्केन कर्पूरकुसुमैरपि ।
मुद्गान्नेन विशेषेण पूजयेत् पायसेन च ॥ १३७ ॥

अग्निकार्यं तथा कृत्वा शक्तिमुद्रां च दर्शयेत् ।
उद्वासयेत्तु देवेशं शेषं कृत्वा तु पूर्ववत् ॥ १३८ ॥

षष्ठ्यां च पूजयेद् देवमहोरात्रमुपोषितः ।
रक्तैः पुष्पैश्च विविधैर्गन्धैश्चरुभिरेव च ॥ १३९ ॥

ततः षाडविकापिण्डैर्मुद्गपिण्डैस्तु षण्मुखम् ।
मुद्गान्नैस्तु विचित्रान्नैरर्चयेत् पूर्ववत् क्रमात् ॥ १४० ॥

एवं च पूजयेद्भक्त्या विद्यां मेधां बलं धृतिम् ।
प्रज्ञां चैश्वर्यमेवाग्र्यं लभते नात्र संशयः ॥ १४१ ॥

स्कन्दयाग इति प्रोक्तः सूर्ययागं ब्रवीमि वः ।
ग्रामस्योत्तरपार्श्वे तु सूर्यस्यायतनं भवेत् ॥ १४२ ॥

चतुर्द्वारं विधातव्यं प्राग्द्वारं वा यथाविधि ।
मण्डपं वाथ कूटं वा प्रासादं चैकभूमिकम् ॥ १४३ ॥

वृत्तं वा चतुरश्रं वा कारयेत् तत्र चायतम् ।
प्रतिमामारभेत् तत्र नवतालप्रमाणतः ॥ १४४ ॥

अरुणं पीतवस्त्रं च दीप्तकुण्डलधारिणम् ।
रक्तहस्ताङ्घ्रिनेत्रं च कवचेनोपशोभिनम् ॥ १४५ ॥

नानारत्नाङ्कमकुटं रत्नमण्डलशोभितम् ।
रथासने समासीनं कुर्यात् सिंहासनेऽपि वा ॥ १४६ ॥

कुर्याच्चामरधारिण्यौ उपासंध्ये च पृष्ठतः ।
रक्ते शुक्लाम्बरे चैव चूडामकुटशोभिते ॥ १४७ ॥

यमः सुवर्चला चापि अर्चनापीठपार्श्वयोः ।
कृष्णो यमस्तु वर्णेन गौरी चैव सुवर्चला ॥ १४८ ॥

प्रतिष्ठा सूर्यमन्त्रैस्तु शान्तिहोमविधानतः ।
प्रागादि चोत्तरान्तं तु चतुर्भिः क्रमयोगतः ॥ १४९ ॥

दिशाहोमस्तु सावित्र्या समिधस्त्वर्कजाः स्मृताः ।
बीजेन मूर्ध्नि विन्यासः सूर्यस्यात्मन एव च ॥ १५० ॥

ब्रह्मरात्रे तथा मन्त्रा द्रष्टव्या मन्त्रकोशके ।
पूजामस्य प्रवक्ष्यामि यथावदनुपूर्वशः ॥ १५१ ॥

अष्टपत्रं ततः पद्मं सूर्यबीजेन योजयेत् ।
कर्माचाँ कर्णिकामध्ये सूर्यबीजेन विन्यसेत् ॥ १५२ ॥

[1]घषोल्कायेति मन्त्रेण देवमावाहयेत् ततः ।
ततस्तेनैव मन्त्रेण· तद्वदासनमादितः ॥ १५३ ॥

स्थानानि कल्पयेत् पश्चाद् ग्रहाणामनुपूर्वशः ।
बृहस्पतेश्च पूर्वस्यां शुक्रस्यैव तु दक्षिणे ॥ १५४ ॥

शनैश्चरस्य वारुण्यामुत्तरस्यां निशाकृतः ।
अङ्गारकस्य चाग्नेय्यां बुधस्यैव च नैर्ऋते ॥ १५५ ॥

राहोश्चैव च वायव्ये केतोरीशानगोचरे ।
आसनं देयमाद्येन सूर्यमन्त्रेण चादितः ॥ १५६ ॥

पाद्यं दत्त्वा द्वितीयेन तृतीयेनार्घ्यमेव च ।
चतुर्थेन ततो दद्यात् क्रमेणाचमनीयकम् ॥ १५७ ॥

तथाभिषेकमन्त्रेण देवं तमभिषेचयेत् ।
वस्त्रं सूत्रमलंकारं दद्यात् सावित्रिया ततः ॥ १५८ ॥

गन्धं तु आदिमन्त्रेण ततो दद्याद् विचक्षणः ।
द्वितीयेनापि पुष्पाणि तृतीयेन प्रदीपकम् ॥ १५९ ॥

[1] खषोल्काय E

चतुर्थेनाथ धूपं च पञ्चमेनैव तं यजेत् ।
एवं कृत्वा यथापूर्वं व्योममुद्रां च दर्शयेत् ॥ १६० ॥

अथोपस्थानमन्त्रेण कृत्वोपस्थानमन्ततः ।
उद्वासयेत् ततो देवं सूर्यबीजेन साधकः ॥ १६१ ॥

द्रष्टव्या ब्रह्मरात्रे तु मन्त्रा वै मन्त्रकोशके ।
वक्ष्यामि तिथियागं तु सर्वसंवत्सरावधि ॥ १६२ ॥

उपोष्य वाग्यतो भूत्वा सप्तम्यां संयतेन्द्रियः ।
रक्तचन्दनचूर्णेन चक्रं कृत्वा यथाविधि ॥ १६३ ॥

पूजयेद्भास्करं देवं विविधैर्द्रव्यविस्तरैः ।
कमलैः करवीरैश्च सुरक्तैः कुसुमैरपि ॥ १६४ ॥

रक्तचन्दनगन्धेन कृसरापूपपायसैः ।
पूजयित्वा यथाकाममिष्टान् कामानवाप्नुयात् ॥ १६५ ॥

कथितः सूर्ययागस्तु रुद्रयागं ब्रवीमि वः ।
ग्रामाद् धनुःशताद् दूरं बहिः कुर्याच्छिवालयम् ॥ १६६ ॥

ग्रामाद्धनुःशतादर्वाङ् नाशयेन्नात्र संशयः ।
वायव्याग्नेयकोणं च ग्राममध्यं च वर्जयेत् ॥ १६७ ॥

श्मशाने कुरुते ग्रामवायव्ये तु शिवालयम् ।
आग्नेये राष्ट्रनाशः स्याद् ग्रामनाशस्तु मध्यमे ॥ १६८ ॥

यस्मिन् शिवालयच्छाया ग्रामे नित्यं पतिष्यति ।
तदूष्मणा तु स ग्रामो विनश्यति शनैः शनैः ॥ १६९ ॥

तस्मात् सर्वप्रयत्नेन दूरं कुर्याच्छिवालयम् ।
श्रीधाम्ना विष्णुधाम्ना वा न नाशयति यन्त्रितः ॥ १७० ॥

शिवालयस्य ग्रामस्य मध्ये तस्मात् प्रयत्नतः ।
अन्तरा श्रीगृहं वापि कुर्याद्विष्णुगृहं तु वा ॥ १७१ ॥

प्राग्द्वारमुत्तरे कुर्यात् प्रत्यग्द्वारं तु दक्षिणे ।
प्रत्यग्द्वारं प्रतीच्यां च प्राच्यां प्राग्द्वारमेव वा ॥ १७२ ॥

प्रत्यग्द्वारं च नैर्ऋत्ये प्राग्द्वारं चेशगोचरे ।
शिवालयं प्रशंसन्ति प्रायो ग्रामपराङ्मुखम् ॥ १७३ ॥

ग्रामपार्श्वे न कुर्वन्ति ग्रामवृद्धिर्यदीप्यते ।
अरण्ये पर्वते चैव प्रशंसन्ति शिवालयम् ॥ १७४ ॥

प्रासादं पूर्ववत् कुर्यात् पूर्वोक्तैर्द्रव्यविस्तरैः ।
प्रासादस्यानुरूपेण प्रतिमां कारयेद् बुधः ॥ १७५ ॥

आसीनमेव कुर्वीत स्वैरं पूर्वे च पश्चिमे ।
स्थितमन्यत्र कुर्वीत शयितं न तु कारयेत् ॥ १७६ ॥

पीतमष्टभुजं कुर्याच्चर्माम्बरधरं हरम् ।
बद्धनागोत्तरासङ्गं जटामकुटधारिणम् ॥ १७७ ॥

नीलकण्ठं त्रिनेत्रं च कुर्याच्छशिकलाधरम् ।
हरं पिङ्गलपद्माक्षमङ्गारसमतारकम् ॥ १७८ ॥

त्रिशूलपट्टसधरमर्कमालाविभूषितम् ।
आसीनं वा स्थितं वापि हरमेवं तु कारयेत् ॥ १७९ ॥

पद्मपीठं भवेत् स्थाने सिंहासनमथासने ।
पश्चाच्चामरधारिण्यौ गङ्गा च यमुना तथा ॥ १८० ॥

दक्षिणे चैव वामे च स्थिते कार्ये सितासिते ।
उपमन्युरुमा चापि अर्चनापीठपार्श्वयोः ॥ १८१ ॥

दक्षिणे चोत्तरे कार्यौ रक्तश्यामौ कृताञ्जली ।
उपमन्युर्जटाधारी उमा वै मौलिधारिणी ॥ १८२ ॥

स्कन्दं सनत्कुमारं च तयोः कुर्वीत पृष्ठतः ।
दक्षिणे चोत्तरे चैव दशसंवत्सराकृती ॥ १८३ ॥

ब्रह्मा चाग्निश्च कर्तव्यौ देवस्योभयपार्श्वतः ।
दक्षिणं बाहुमाश्रित्य ब्रह्मा तिष्ठति यन्त्रितः ॥ १८४ ॥

वामबाहुं समाश्रित्य वह्निस्तिष्ठत्ययन्त्रितः ।
तयोस्तु पृष्ठतः कार्यौ चन्द्रादित्यौ यथाविधि ॥ १८५ ॥

उत्तमाः परिवारास्तु दशैते परिकीर्तिताः ।
कुमारद्वयहीनाः स्युः शेषास्त्वष्टौ च कीर्तिताः ॥ १८६ ॥

ब्रह्माग्निसोमसूर्यैश्च कुमारद्वितयेन च ।
विहीनास्त्वधमाः प्रोक्ताश्चत्वारः परिवारकाः ॥ १८७ ॥

पूर्ववल्लोकपालाश्च कर्तव्याः स्युर्यथादिशम् ।
प्रासादस्याग्रतः कुर्याद् वृषभस्थानमुत्तमम् ॥ १८८ ॥

चण्डस्थानमथेशाने तत्सूत्रं परिहृत्य च ।
प्रासादलक्षणं सर्वं ब्रह्मरात्रे प्रकीर्तितम् ॥ १८९ ॥

तस्मादत्र न संप्रोक्तः प्रासादस्य तु विस्तरः ।
लिङ्गत्रयस्य भेदश्च तत्रैव कथितो मया ॥ १९० ॥

प्रतिष्ठा च तथा कार्या विशेषं कथयामि वः ।
पञ्चभिर्ब्रह्मरात्रोक्ता प्रतिष्ठा शंकरस्य च ॥ १९१ ॥

[1]स्थापना स्यादघोरेण शान्तिहोमस्तथा परैः ।
रुद्रगायत्रिया कुर्याद् दिशाहोमं समन्ततः ॥ १९२ ॥

एवं प्रतिष्ठां कृत्वा तु कौतुकार्चामथार्चयेत् ।
तालमुद्रां ततः कृत्वा योगपीठं प्रकल्पयेत् ॥ १९३ ॥

कर्मार्चां रुद्रगायत्र्या स्थापयेत् परमेष्ठिना ।
एतयोरेव कुर्वीत प्रतिमायां तथात्मनि ॥ १९४ ॥

सद्योजातेन मन्त्रेण देवमावाहयेच्छिवम् ।
स्थापयेत् तमघोरेण प्रतिमायां यथाविधि ॥ १९५ ॥

वामदेवेन सांनिध्यं ततः कुर्याद्विचक्षणः ।
प्रणवेनासनं दत्त्वा ततः स्थानानि कल्पयेत् ॥ १९६ ॥

अनन्तस्य ततः प्राच्यां [2]सूक्ष्मस्यैव तु दक्षिणे ।
शिवोत्तमस्य [3]वारुण्यामेकनेत्रस्य चोत्तरे ॥ १९७ ॥

शिखण्डिनस्तथाग्नेय्यां श्रीकण्ठस्य च नैर्ऋते ।
त्रिमूर्तेश्चैव वायव्ये एकरुद्रस्य चैश्वरे ॥ १९८ ॥

[1] स्थापनं E [2] सूक्ष्मदेवस्य B [3] वारुण्यामेके B

द्वितीयावरणे पश्चान्मुद्रास्थानानि कल्पयेत् ।
मालिन्याः कल्पयेत् प्राच्यां निष्ठुरायाश्च दक्षिणे ॥ १९९ ॥

पद्मस्य [1]पश्चिमायां च कालकण्ठ्यास्तथोत्तरे ।
मुकुलाश्च तथाग्नेय्यां शशिकन्याश्च नैर्ऋते ॥ २०० ॥

वायव्ये [2]वज्रमुद्राया ऐशान्यामञ्जलेरपि ।
तृतीयावरणे पश्चाल्लोकपालांस्तु कल्पयेत् ॥ २०१ ॥

अर्घ्यं पाद्यं तथा स्नानं दद्यात् तत्पुरुषेण तु ।
तेनैवाचमनीयं च वस्त्रदानं तथैव च ॥ २०२ ॥

ब्रह्मसूत्रमलंकारमीशानेन नियोजयेत् ।
गन्धं पुष्पं च दीपं च धूपं च चरुमेव च ॥ २०३ ॥

ततश्चाञ्जलिपुष्पं च होममन्त्रेण योजयेत् ।
शेषान् सर्वान् स्वनाम्ना तु पूजयेच्च विचक्षणः ॥ २०४ ॥

उद्वासनं तु बीजेन रुद्रगायत्रियापि वा ।
एवमेव तमष्टम्यामहोरात्रमुपोषितः ॥ २०५ ॥

पूजयेद् देवदेवेशं सर्वकामसमृद्धये ।
शिवयाग इति प्रोक्तो देवीयागं ब्रवीमि वः ॥ २०६ ॥

चतसृष्वपि वै दिक्षु दुर्गास्थानं विधीयते ।
ग्राममध्ये च कोणे च प्रयत्नेन विवर्जयेत् ॥ २०७ ॥

[1] पश्चिमस्यां B

[2] मुद्रायां B.

प्रत्यग्द्वारं भवेत् प्राच्यां प्राग्द्वारमितरत्र तु ।
सिंहाङ्कं वापि कुर्वीत कृष्णसाराङ्कमेव वा ॥ २०८ ॥

प्रासादमेवं कुर्वीत तत्र स्थाने तु पूर्ववत् ।
प्रासादं तत्र कुर्वीत पूर्वोक्तद्रव्यविस्तरैः ॥ २०९ ॥

प्रासादस्यानुरूपेण प्रतिमां कारयेद् बुधः ।
नवतालेन वा कुर्यादष्टतालेन वा पुनः ॥ २१० ॥

श्यामा त्रिलोचनां कुर्याच्छङ्खचक्रधनुर्धराम् ।
[1]शूलोपपन्नांशुकधरां रक्ताम्बरविभूषणाम् ॥ २११ ॥

रक्तपादाननां सौम्यां हारनूपुरशोभिनीम् ।
रक्ताशोकस्रजोपेतां मौलिर्ना [2]सावतंसकाम् ॥ २१२ ॥

त्रयोदशाब्ददेशीयामुत्पलायतलोचनाम् ।
सकृष्णसारां तामार्यां कुर्यात् सर्पेन्द्रमेखलाम् ॥ २१३ ॥

योगनिद्रेति सा प्रोक्ता विष्णोर्देवेश्वरस्य ह ।
अतः परं ब्रवीम्यस्याः परिवारचतुष्टयम् ॥ २१४ ॥

पश्चाच्चामरधारिण्यौ जया च विजयापि च ।
चूडामकुटधारिण्यौ रक्तशुक्लाम्बरस्रजौ ॥ २१५ ॥

दक्षिणे चैव वामे च स्थिते कुर्याद्विचक्षणः ।
पुष्कला चैव पूर्णा च कार्ये चोभयपार्श्वयोः ॥ २१६ ॥

[1] शिलोपपन्नांशुक B

[2] वावतंसकाम् B

शुक्लनीलाम्बरधरे चूडामकुटशोभिते ।
दक्षिणे चैव वामे च स्थिते कुर्याद्विचक्षणः ॥ २१७ ॥

ताम्बूलपत्रहस्ता स्यात् पुष्कला रूपशालिनी ।
पूर्णा कन्दुकहस्ता स्यादुद्वहन्ती च दर्पणम् ॥ २१८ ॥

एवं कुर्यात् स्थितां देवीं नासीनां तु कदाचन ।
पादपीठं भवेत् पद्मं देव्या नान्यत् कदाचन ॥ २१९ ॥

प्रतिष्ठां शान्तिहोमेन कुर्याद्वै जातवेदसा ।
आर्यायै नम इत्यस्याः[1] स्थापनं पुनरारभेत् ॥ २२० ॥

कुर्यात् स्थानमनेनैव देव्याः पञ्चाक्षरेण च ।
एवं प्रतिष्ठां कृत्वा तु पूजनं पुनरारभेत् ॥ २२१ ॥

अष्टपत्रं ततः पद्मं योगपीठं प्रकल्पयेत् ।
पञ्चाक्षरेण कर्मार्चां विन्यसेत् कर्णिकोपरि ॥ २२२ ॥

आवाह्य तेन मन्त्रेण कर्मार्चायां नियोजयेत् ।
तेनैव विष्टरं दत्त्वा ततः स्थानानि कल्पयेत् ॥ २२३ ॥

पूर्वस्यां दिशि पुष्ट्याश्च तुष्ट्याश्चैव तु दक्षिणे ।
[2]सृष्ट्याश्च पश्चिमे भागे प्रीतेरुत्तरपार्श्वतः ॥ २२४ ॥

शङ्खस्य तु तथाग्नेय्यां तथा चक्रस्य नैर्ऋते ।
धनुषश्चैव वायव्ये त्रिशूलस्येशगोचरे ॥ २२५ ॥

[1] इत्यस्य B [2] पुष्ट्याश्च B

पाद्यं स्नानं तथा चार्घ्यं ततश्चाचमनीयकम् ।
दद्यात् पञ्चाक्षरेणैव तथा वस्त्रं च भूषणम् ॥ २२६ ॥

गन्धं पुष्पं च धूपं च दीपं च चरुमेव च ।
दद्यान्मांसोपहारैश्च सर्वं वै जातवेदसा ॥ २२७ ॥

शेयान् स्वनामभिः सर्वान् पूजयेच्च विचक्षणः ।
पञ्चाक्षरेण मन्त्रेण देवीमुद्वासयेत् ततः ॥ २२८ ॥

नवम्यामम्बिकामेवमहोरात्रमुपोषितः ।
पूजयेद् विविधैः पुष्पैश्चरुभिर्मांसशोणितैः ॥ २२९ ॥

सर्वान् कामानवाप्नोति इष्टान् देव्याः प्रसादतः ।
दुर्गायाग इति प्रोक्तो यमयागं ब्रवीमि वः ॥ २३० ॥

ग्रामस्य दक्षिणे पार्श्वे यमस्यायतनं भवेत् ।
तत् कुर्याद् दक्षिणद्वारं पूर्वोक्तैर्द्रव्यविस्तरैः ॥ २३१ ॥

न चान्यत्र प्रकुर्वीत यमायतनमण्डपम् ।
वृत्तं वा चतुरश्रं वा महर्षीणां तथा भवेत् ॥ २३२ ॥

प्रतिमां कारयेत् तत्र नवतालप्रमाणतः ।
मेघश्यामं तु रक्ताक्षं द्विभुजं दण्डधारिणम् ॥ २३३ ॥

पीतमाल्याम्बरधरमुभयांसोपवीतकम् ।
विचित्रमकुटं भीमं किङ्किणीबद्धपादकम् ॥ २३४ ॥

सिंहासने समासीनं न स्थितं शयितं न च ।
प्रबद्धवामपादाग्रं पीठस्थेतरपादकम् ॥ २३५ ॥

कुर्याद्वैवस्वतं देवं सौम्याग्नेयगुणान्वितम् ।
सुधर्मा च विधर्मा च वालव्यजनशोभिते ॥ २३६ ॥

चूडामकुटधारिण्यौ पीताम्बरविभूषणे ।
रक्तोत्पलनिभे ते तु नीलनीरजलोचने ॥ २३७ ॥

दक्षिणे चैव वामे च स्थिते कार्ये तु पृष्ठतः ।
चित्रगुप्तः [1]कलिश्चैव कर्तव्यौ यमपार्श्वयोः ॥ २३८ ॥

दक्षिणे चित्रगुप्तस्तु गौरवर्णः सिताम्बरः ।
नीलवर्णः कलिर्वामे पीताम्बरविभूषणः ॥ २३९ ॥

कृतान्तं चैव मन्युं च अर्चनापीठपार्श्वयोः ।
[2]आसीनौ श्यामलौ कार्यौ रक्ताम्बरविभूषणौ ॥ २४० ॥

प्रासादस्याग्रतः कुर्यान्महिषस्थानमुत्तमम् ।
प्रतिष्ठां शान्तिहोमेन यमगायत्रिया[3] भवेत् ॥ २४१ ॥

ओं वैवस्वताय विद्महे [4]प्रेतनाथाय धीमहि ।
तन्नो धर्मः प्रचोदयात् ॥ २४२ ॥

अनयैव दिशाहोमं प्रतिष्ठां चापि कारयेत् ।
यमाय नम इत्येव न्यासं पञ्चाक्षरेण तु ॥ २४३ ॥

एवं प्रतिष्ठां कृत्वा तु [5]पूजनं पुनरारभेत् ।
पद्मस्य यमगायत्र्या कर्मार्चां मध्यमे न्यसेत् ॥ २४४ ॥

1 कलिश्चैव omitted B
2 आसीनौ omitted B
3 गायत्र्या B
4 B omits this Pāda.
5 B omits this Pāda.

[1]तथैवावाहयेद्देवं [2]तथा दद्याच्च विष्टरम् ।
अथाष्टपरिवाराणां तत्र स्थानानि कल्पयेत् ॥ २४५ ॥

प्राच्यां च चित्रगुप्तस्य कलेश्चैव तु दक्षिणे ।
प्रतीच्यां च कृतान्तस्य मृत्योश्चैव तथोत्तरे ॥ २४६ ॥

आग्नेये [3]कालरात्र्यास्तु निद्रायाश्चैव नैर्ऋते ।
[4]तन्द्र्याश्चैव तु वायव्ये मन्योरीशानगोचरे ॥ २४७ ॥

पाद्यार्घ्याचमनीयानि दद्यात् पञ्चाक्षरेण तु ।
शेषं तु यमगायत्र्या कुर्यात् तत्र विचक्षणः ॥ २४८ ॥

परिवारान् स्वनाम्नैव पूजयेच्च यथाक्रमम् ।
उद्वासयेच्च गायत्र्या ततः पञ्चाक्षरेण वा ॥ २४९ ॥

दशम्यां पूजयेद् देवमहोरात्रमुपोषितः ।
मांसपुष्पोपहारैश्च तिलकल्कैर्गुडाप्लुतैः ॥ २५० ॥

तिलैर्वा पूजयेद् देवमिष्टान् कामानवाप्नुयात् ।
यमयाग इति प्रोक्तः शक्रयागं ब्रवीमि वः ॥ २५१ ॥

शक्रस्यायतनं कुर्यात् [5]प्राच्यां वा ग्राममध्यमे ।
प्राच्यां तु पश्चिमद्वारं प्राग्द्वारं ग्राममध्यमे ॥ २५२ ॥

माहेन्द्रं नाम नाम्ना तु चतुरश्रं त्रिभूमिकम् ।
ततश्च प्रतिमां कुर्यान्नवतालप्रमाणतः ॥ २५३ ॥

[1] तथैव B [2] तथा B [3] कालरात्र्याया: B
[4] तन्द्रियाश्चैव B [5] B omits this Pāda.

शिलामयीं मृन्मयीं वा ततो लोहमयीं तु वा ।
द्वितीयभूमौ कुर्वीत नानारत्नविभूषिते ॥ २५४ ॥

सिंहासने विचित्रे तु समासीनं शतक्रतुम् ।
किरीटहारकेयूरप्रलम्बकटकान्वितम् ॥ २५५ ॥

[1]दूर्वामरकतश्यामं पद्मायतविलोचनम् ।
पीतमाल्याम्बरधरं कल्पद्रुमसमाश्रितम् ॥ २५६ ॥

सर्वरत्नोपवीतं च सर्वाभरणभूषितम् ।
प्रबद्धवामपादान्तं पीठस्थेतरपादकम् ॥ २५७ ॥

एवं देवेश्वरं कुर्यात् सौम्यं कुलिशधारिणम् ।
कार्ये चामरधारिण्यावुर्वशी च तिलोत्तमा ॥ २५८ ॥

दक्षिणे चैव वामे च पीतवर्णे सिताम्बरे ।
बृहस्पतिश्च शुक्रश्च कर्तव्यौ शक्रपार्श्वयोः ॥ २५९ ॥

पीतमाल्याम्बरधरौ शुद्धस्फटिकसंनिभौ ।
दक्षिणे चैव वामे च स्थितौ मौलिजटाधरौ ॥ २६० ॥

अत्रिश्चापि शची चापि अर्चनापीठपार्श्वयोः ।
शुक्लरक्तौ सुखासीनौ शुक्लरक्ताम्बरस्रजौ ॥ २६१ ॥

अत्रिर्मुनिर्जटाधारी शची वै मौलिधारिणी ।
सर्व एव च कर्तव्याश्चाष्टतालप्रमाणतः ॥ २६२ ॥

[1] B omits this Pāda.

कुर्यादैरावतस्थानं प्रासादस्याग्रतस्ततः ।
प्रतिष्ठा शान्तिहोमेन [1]शक्रगायत्रिया भवेत् ॥ २६३ ॥

ओं सहस्राक्षाय विद्महे शतयज्ञाय धीमहि ।
तन्नः शक्रः प्रचोदयात् ॥ २६४ ॥

अनया शान्तिहोमः स्यादश्वत्थसमिधः स्मृताः ।
ततः पुरुषसूक्तेन दिशाहोमं तु कारयेत् ॥ २६५ ॥

षडक्षरेण मन्त्रेण स्थापयेत्तं सुरेश्वरम् ।
अयं नमो महेन्द्राय इति मन्त्रः षडक्षरः ॥ २६६ ॥

अनेनैव भवेन्न्यासो देवे चैव तथात्मनि ।
एवं प्रतिष्ठां कृत्वा तु पूजनं पुनरारभेत् ॥ २६७ ॥

स्थण्डिले शक्रगायत्र्या ततः पद्मं तु कल्पयेत् ।
षडक्षरेण मन्त्रेण कर्मार्चां तत्र विन्यसेत् ॥ २६८ ॥

तेनावाह्यासनान्तं च दत्त्वा स्थानानि कल्पयेत् ।
प्राच्यां बृहस्पतेः स्थानं शुक्रस्यैव तु दक्षिणे ॥ २६९ ॥

ऐरावतस्य वारुण्यामुच्चैःश्रवस उत्तरे ।
शच्याः स्थानमथाग्नेये नैर्ऋत्यां चाप्युपश्रुतेः ॥ २७० ॥

वायव्ये चाप्यलभाया[2] ऐशाने कुलिशस्य च ।
पाद्यादि दद्यात् सर्वं तु सदसस्पतिमित्यृचा ॥ २७१ ॥

[1] शक्रगायत्र्या B    [2] अतुल्यायाः B

षडक्षरेण वा दद्याद् [1]गायत्र्याथापि वा पुनः ।
शेषान् स्वनाममन्त्रेण सर्वान् संपूजयेत् पृथक् ॥ २७२ ॥

षडक्षरेण मन्त्रेण देवमुद्वासयेत् ततः ।
एवं संपूजयेद् विद्वानेकादश्यामुपोष्य च ॥ २७३ ॥

पायसं कृसरं गौडं हरिद्रान्नं चतुर्विधम् ।
चरुकर्मणि संप्रोक्तं पद्मं कुसुमकर्मणि ॥ २७४ ॥

शक्रयाग इति प्रोक्तो विष्णुयागं ब्रवीमि वः ।
प्रासादलक्षणं सर्वं प्रतिमालक्षणं तथा ॥ २७५ ॥

प्रतिष्ठालक्षणं चापि ब्रह्मरात्रे प्रकीर्तितम् ।
अत्र वर्णविशेषं तु प्रवक्ष्यामि यथाक्रमम् ॥ २७६ ॥

आसने रक्तवर्णो वा पीतो वा विष्णुरव्ययः ।
शयने श्यामलो वापि हरितो वा हरिः स्वयम् ॥ २७७ ॥

याने हरित एव स्यान्महाविष्णुः कृते युगे ।
पीतश्च हरितः श्यामः क्षत्रियस्य कृते युगे ॥ २७८ ॥

हरितः श्यामलश्चापि वैश्यस्य तु कृते युगे ।
श्याम एव तु शूद्राणां शेषाणां च कृते युगे ॥ २७९ ॥

विप्रक्षत्रिययोः पीतहरितश्यामलास्त्रयः ।
वर्णा विष्णोः समुद्दिष्टास्त्रेतायां वर्णकर्मणि ॥ २८० ॥

[1] गायत्र्या चापि B

वैश्यस्य हरितः श्यामो श्यामः [1]शूद्रस्य वै भवेत् ।
द्वापरे तु द्विजातीनां पीतश्यामौ प्रकीर्तितौ ॥ २८१ ॥

कलौ युगे तु सर्वेषां श्यामवर्णः प्रशस्यते ।
एष एव क्रमः प्रोक्तो विपरीतोऽन्य उच्यते ॥ २८२ ॥

वर्णस्य विपरीते तु भवेल्लोकविपर्ययः ।
कर्तुः कारयितुश्चापि नाशः स्यादचिरादिव ॥ २८३ ॥

तस्मात् सर्वप्रयत्नेन विपरीतं न कारयेत् ।
पूजा च अक्षराते तु कथिता सम्यगेव च ॥ २८४ ॥

विशेषमत्र[2] वक्ष्यामि द्वादश्यां यागकर्मणि ।
एकादश्यामुपोष्याथ द्वादश्यामर्चयेत् प्रभुम् ॥ २८५ ॥

यद्वा पुरुषसूक्तं तु षोडशर्चमुदाहृतम् ।
तेन संपूजयेद् देवं यथावत् क्रमयोगतः[3] ॥ २८६ ॥

आद्ययावाहयेद् देवमृचा तु पुरुषोत्तमम् ।
द्वितीययासनं दद्यात् पाद्यं चैव तृतीयया ॥ २८७ ॥

चतुर्थ्यार्घ्यं प्रदातव्यं पञ्चम्याचमनीयकम् ।
षष्ठ्या स्नानं प्रदातव्यं सप्तम्या वस्त्रमेव च ॥ २८८ ॥

[4]उपवीतं तथाष्टम्या नवम्या गन्ध एव च ।
पुष्पं दशम्या दातव्यमेकादश्या च दीपकम् ॥ २८९ ॥

[1] शूद्रस्य एव च B
[2] मन्त्रं B. E
[3] कर्मयोगतः B
[4] उपवीतः B

द्वादश्या च तथा धूपं त्रयोदश्या चरुं ततः ।
चतुर्दश्याञ्जलिं दद्यात् पञ्चदश्या प्रदक्षिणम् ॥ २९० ॥

षोडश्योद्वासनं कुर्याच्छेषान् संपूज्य नामभिः ।
सूक्तेन चरुहोमं च कुर्याच्छेषं तु पूर्ववत् ॥ २९१ ॥

एवं संपूजयेद् विद्वान् देवदेवं जनार्दनम् ।
षण्मासात् सिद्धिमाप्नोति तिथियागपरो नरः ॥ २९२ ॥

विष्णुयाग इति प्रोक्तः कामयागं ब्रवीमि वः ।
ग्राममध्ये च कोणे वा कंदर्पस्थानमाचरेत् ॥ २९३ ॥

प्रत्यग्द्वारं क्रमात् कृत्वा पूर्वोक्तैर्द्रव्यविस्तरैः ।
हस्तिपृष्ठं तु वा कुर्यात् परिवृत्तमथापि वा ॥ २९४ ॥

हस्तिपृष्ठमशोकाङ्कं[1] मकराङ्कमथोत्तरम् ।
अशोकं[2] प्रतिमाशूलं कंदर्पस्य विशिष्यते ॥ २९५ ॥

नवतालप्रमाणेन प्रतिमां कारयेत् ततः ।
पीतवर्णं सितापाङ्गं रक्ताम्बरविभूषणम् ॥ २९६ ॥

रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पोपशोभितम् ।
रक्ताशोकस्रजा युक्तं रक्ताङ्घ्रिकरपल्लवम् ॥ २९७ ॥

विचित्ररत्नमकुटमुभयांसोपवीतकम् ।
विस्तीर्णोरःस्थलोपेतं तनुमध्यं कृशोदरम् ॥ २९८ ॥

1 अशोकं च A

2 अशोपं B

तं षोडशाब्ददेशीयं सुकुमारं मनोहरम् ।
पुष्पचापशरोपेतं तप्तकाञ्चनसंनिभम् ॥ २९९ ॥

सिंहासने समासीनं कारयेत् स्यन्दनेऽपि वा ।
बद्धदक्षिणपादं तु पीठस्थेतरपादकम् ॥ ३०० ॥

पश्चाच्चामरहस्ते तु हली चापि च वारुणी ।
वसन्तश्चापि सोमश्च कर्तव्यौ तस्य पार्श्वतः ॥ ३०१ ॥

रागश्चापि मदश्चापि रक्तशुक्लाम्बरस्रजौ ।
पृष्ठतो भित्तिभागेऽस्य[1] कुर्यात् पञ्चायुधानि तु ॥ ३०२ ॥

तापनीं मोहिनी चापि मर्दनी च प्रमाथिनी ।
हरिणी चेति पञ्चैता इषवः स्युर्मनोभुवः ॥ ३०३ ॥

स्त्रीरूपधारिणीः[2] कुर्यात् पुष्पाङ्कशिरसः पृथक् ।
तापनी रक्तवर्णा तु रक्ताशोकाङ्कमूर्धजा ॥ ३०४ ॥

[3]मोहिनी पीतवर्णा स्यात् संरक्तोत्पलमूर्धजा ।
मर्दनी हरिवर्णा तु संरक्तोत्पलमूर्धजा ॥ ३०५ ॥

प्रमाथिनी ततो गौरी कुमुदाङ्कितमूर्धजा ।
हरिणी धूम्रवर्णा स्यादुत्पलाङ्कितमूर्धजा ॥ ३०६ ॥

दक्षिणां दिशमारभ्य वामान्तं तु समापयेत् ।
प्रासादस्याग्रतः कुर्यान्मकरस्थानमुत्तमम् ॥ ३०७ ॥

[1] स्यात् B E
[2] धारिणीं A
[3] B omits this line.

प्रतिष्ठा शान्तिहोमेन [1]कामगायत्रिया भवेत् ।
मनोभवाय विद्महे पञ्चबाणाय धीमहि ॥ ३०८ ॥

तन्नः कामः प्रचोदयात् ।
इत्यनेनैव मन्त्रेण प्रतिष्ठामारभेत् ततः ॥ ३०९ ॥

अर्चनं पुनरस्यैव प्रवक्ष्यामि यथातथम् ।
स्थण्डिले पद्मकं कृत्वा तद्गायत्र्या समाहितः ॥ ३१० ॥

अशोकशाखां तन्मध्ये स्थापयेदोमिति ब्रुवन् ।
अलाभे चूतशाखां वा माधवीलतिकां तु वा ॥ ३११ ॥

तद्गायत्र्या तमावाह्य तया दद्याच्च विष्टरम् ।
नमः पुष्पशरायेति न्यासं सप्ताक्षरेण तु ॥ ३१२ ॥

कृत्वा निरुध्य तेनैव ततः स्थानानि कल्पयेत् ।
वसन्तस्यैव पूर्वस्यां दक्षिणस्यां मदस्य च ॥ ३१३ ॥

रागस्य [2]पश्चिमायां च सोमस्यैव तथोत्तरे ।
आग्नेये च रतेः स्थानं वारुण्या निर्ऋतावपि ॥ ३१४ ॥

उषायाश्चापि वायव्ये मकरस्यैशगोचरे ।
पाद्यादीनि च कर्माणि दद्यात् सप्ताक्षरेण तु ॥ ३१५ ॥

[3]समुद्गकर्पूरैश्चैव तण्डुलैश्च गुडाप्लुतैः ।
पूजयेत् तस्य गायत्र्या [4]रक्तपुष्पानुलेपनैः ॥ ३१६ ॥

[1] कामगायत्र्या B
[2] पश्चिमस्यां B D
[3] समुक्त B D
[4] गन्ध B D

एवमेव त्रयोदश्यामहोरात्रमुपोषितः ।
पूजयेद्य इमं भक्त्या वश्याः स्युस्तस्य योषितः ॥ ३१७ ॥

कामयाग इति प्रोक्तश्चाश्वियागं ब्रवीमि वः ।
ग्राममध्ये महादिक्षु स्थानं स्यादश्विनोः शुभम् ॥ ३१८ ॥

प्राग्द्वारं ग्राममध्ये स्याद् ग्रामाभिमुखमन्यतः ।
आयतं चतुरश्रं वा आयतं वृत्तमेव वा ॥ ३१९ ॥

[1]प्रासादमश्विनोः कुर्यादश्वाङ्कं चैकभूमिकम् ।
नवनालप्रमाणेन प्रतिमां कारयेत् ततः ॥ ३२० ॥

अष्टनालेन वा कुर्यात् सप्तनालेन वा पुनः ।
दाडिमीपुष्पसंकाशौ दशसंवत्सराकृती ॥ ३२१ ॥

मुण्डमालापरीतांसौ चूडामकुटधारिणौ ।
पीताम्बरस्रजौ नित्यमुभयांसोपवीतिनौ ॥ ३२२ ॥

फुल्लरक्तोत्पलाक्षौ तु किङ्किणीबद्धपादकौ ।
सिंहासने समासीनौ सहितौ ब्रह्मचारिणौ ॥ ३२३ ॥

अश्विनौ तत्र कुर्वीत पूर्वोक्तैर्द्रव्यविस्तरैः ।
नासत्यश्चापि दस्रश्च तावुभौ नामतः स्मृतौ ॥ ३२४ ॥

नासत्यो दक्षिणे स्थाप्यो वामे दस्रस्तथैव च ।
बद्धदक्षिणपादस्तु नासत्यः परिकीर्तितः ॥ ३२५ ॥

[1] प्रासादमण्डपे B D

प्रबद्धवामपादस्तु दस्रश्चापि तथा भवेत् ।
वामदक्षिणपादौ तु स्यातां पीठस्थितौ तयोः ॥ ३२६ ॥

पश्चाच्चामरधारिण्यौ चिकित्सा चापि रोपिणी ।
रक्तशुक्लाम्बरे चैव चूडामकुटधारिके[1] ॥ ३२७ ॥

दक्षिणे चैव वामे च कर्तव्ये पृष्ठतस्तयोः ।
आयुर्वेदधनुर्वेदौ कर्तव्यौ पार्श्वतस्तयोः ॥ ३२८ ॥

शुक्लरक्तौ तु वर्णेन शुक्लाम्बरधरावुभौ ।
धन्वन्तरिस्तथात्रेयश्चार्चनापीठपार्श्वयोः ॥ ३२९ ॥

आसीनौ दक्षिणे वामे शुक्लरक्तौ कृताञ्जली ।
पीतवल्कलसंवीतौ कृष्णाजिनधरावुभौ ॥ ३३० ॥

[2]जटामौलिधरौ कार्यावष्टतालप्रमाणतः ।
मृतसंजीवनीं चापि विशल्यकरणीं तथा ॥ ३३१ ॥

तयोस्तु पृष्ठतः कुर्याद्रक्तपीताम्बरस्रजौ ।
प्रासादस्याग्रतः कुर्यादश्वस्थानं विचक्षणः ॥ ३३२ ॥

प्रतिष्ठां शान्तिहोमेन कुर्यात्तु चतुरक्षरैः ।
नमोऽश्विभ्यामिति प्रोक्तो मन्त्रो यश्चतुरक्षरः ॥ ३३३ ॥

व्यस्तैस्तैः शान्तिहोमः स्यात् सहितैः स्थापना भवेत् ।
एवं प्रतिष्ठां कृत्वा तु पूजनं[3] पुनरारभेत् ॥ ३३४ ॥

1 धारिणे B    2 जटामण्डल B D    3 पूजनां B E

चतुरश्रायते पीठे पद्मं तत्र प्रकल्पयेत् ।
पद्मस्य कर्णिकायां च कर्मार्चाद्वितयं न्यसेत् ॥ ३३५ ॥

चतुरक्षरमन्त्रेण तौ समावाहयेदुभौ ।
तेनैव विष्टरं दत्त्वा ततः स्थानानि कल्पयेत् ॥ ३३६ ॥

आयुर्वेदस्य च प्राच्यां धनुर्वेदस्य दक्षिणे ।
धन्वन्तरेः प्रतीच्यां च तथात्रेयस्य चोत्तरे ॥ ३३७ ॥

आग्नेय्यां च चिकित्साया रोपिण्या निर्ऋतावपि ।
वायव्ये चैव जीवन्या विशल्यायास्तथैश्वरे ॥ ३३८ ॥

पाद्यार्घ्याचमनीयानि आसनं स्नानमेव च ।
वस्त्रं च ब्रह्मसूत्रं च दीपं धूपमलंकृतम् ॥ ३३९ ॥

गन्धं पुष्पं चरुं चापि तेन मन्त्रेण कारयेत् ।
शेषान् स्वनाममन्त्रेण पूजयेच्च विचक्षणः ॥ ३४० ॥

एवमेव चतुर्दश्यामहोरात्रमुपोषितः ।
दाडिमीपुष्पदूर्वाभिर्हरिद्रावारिणापि च ॥ ३४१ ॥

मुद्रान्नेन च तौ देवौ पूजयेत् पूर्ववत् क्रमात् ।
एवं पूजयतो भक्त्या न तु स्याद्रोगवेदना ॥ ३४२ ॥

अश्वियाग इति प्रोक्तः सोमयागं ब्रवीमि वः ।
ग्रामस्योत्तरतः पार्श्वे सोमस्यायतनं भवेत् ॥ ३४३ ॥

चतुरश्रं तु वृत्तं वा हस्तिपृष्ठमथापि वा ।
प्राग्द्वारं वापि कुर्वीत प्रत्यग्द्वारमथापि वा ॥ ३४४ ॥

श्वेताश्वाङ्कं मृगाङ्कं वा शशाङ्कं वापि कारयेत् ।
नवतालप्रमाणेन प्रतिमां कारयेत् ततः ॥ ३४५ ॥

शुक्लं रक्ताम्बरधरं शुक्लमण्डलशोभितम् ।
सिंहासने समासीनं कुर्यात् कुमुदमालिनम् ॥ ३४६ ॥

बद्धपादद्वयं सोमं द्विभुजं रक्तलोचनम् ।
पश्चाच्चामरधारिण्यौ रेवती चैव रोहिणी ॥ ३४७ ॥

शुक्लकृष्णाम्बरधरे पीतमाल्यविभूषणे ।
श्यामपीते तु वर्णेन चूडामकुटशोभिते ॥ ३४८ ॥

ज्योत्स्ना चापि निशा चापि अर्चनापीठपार्श्वयोः ।
शुक्लकृष्णे च कर्तव्ये पीताम्बरविभूषणे ॥ ३४९ ॥

प्रासादस्याग्रतः कुर्याच्छ्वेताश्वस्थानमुत्तमम् ।
मृगस्थानं तु वा कुर्याद् यथाश्रद्धं विचक्षणः ॥ ३५० ॥

प्रतिष्ठा शान्तिहोमेन [1]सोमगायत्रिया भवेत् ।
विप्रराजाय विद्महे निशानाथाय धीमहि ॥ ३५१ ॥

तन्नः सोमः प्रचोदयात् ।
अनया शान्तिहोमः स्यात् प्रतिष्ठा च तया भवेत् ॥ ३५२ ॥

न्यासं चापि तया कुर्यात् पूजनं[2] पुनरारभेत् ।
स्थण्डिले कल्पयेत् पद्मं तद्गायत्र्या समाहितः ॥ ३५३ ॥

[1] सोमगायत्र्या B D [2] पूजनां B E

कर्मार्चां कर्णिकामध्ये तथैव च निवेशयेत् ।
आवाहयेत् तया चैव तया दद्याच्च विष्टरम् ॥ ३५४ ॥

कृत्वा चाञ्जलिमुद्रां च ततः स्थानानि कल्पयेत् ।
रोहिण्यास्तु ततः प्राच्यां रेवत्याश्चापि दक्षिणे ॥ ३५५ ॥

[1]पश्चिमायां ततो राध्या ज्योत्स्नाया उत्तरे ततः ।
कृत्तिकायास्तथाग्नेये भरण्या निर्ऋतावपि ॥ ३५६ ॥

वायव्ये च तथार्द्रायाः कला ईशानगोचरे ।
सोमं राजानमित्येवं पाद्यादीनि प्रयोजयेत ॥ ३५७ ॥

स्वनाम्ना पूजयेच्छेपान् गायत्र्योद्वासनं भवेत् ।
एवं च पौर्णमास्यां तु पूजयेत् नमुपोषितः ॥ ३५८ ॥

चन्दनैः कुमुदैश्चापि पायसैर्यावकेन च ।
एवं पूजयतः कामाः [2]सिध्यन्त्येव न संशयः ।
एतेनैवाभिचारार्थी कृष्णपक्षे समर्चयेत् ॥ ३५९ ॥

इति श्रीपाञ्चरात्रे महासंहितायां[3] सनत्कुमारप्रोक्तायां शिवरात्रे
तिथियागो नाम प्रथमोऽध्यायः

[1] पश्चिमस्यां B
[2] सिध्यन्ते न च B D
[3] दशसाहस्रिकायां संहितायां added A

# शिवरात्रे द्वितीयोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि मन्त्रलक्षणमुत्तमम् ।
सौम्याश्चापि तथाग्नेयाः सौम्याग्नेयास्तथैव च ॥ १ ॥

मन्त्रास्तु त्रिविधाः प्रोक्तास्तन्त्रेऽस्मिन् सर्वसाधकाः ।
सौम्या स्याद्विष्णुगायत्री मूलमन्त्रद्वयं तथा ॥ २ ॥

नारसिंहाश्च ये मन्त्राश्चक्रमन्त्रास्तथैव च ।
हेतिमन्त्राश्च सौराश्च आग्नेयास्त्वग्निमन्त्रकाः ॥ ३ ॥

मुद्रामन्त्राश्च ये सर्वे तथा चैवापराजिता ।
पञ्चोपनिषदश्चापि मूर्तिमन्त्रास्तथैव च ॥ ४ ॥

वाराहाश्च तथा मन्त्राः सौम्याग्नेयाः प्रकीर्तिताः ।
सौम्यभावविधानं च आग्नेयीकरणं तथा ॥ ५ ॥

मन्त्राणामपि सर्वेषां कथयिष्यामि वः क्रमात् ।
आग्नेया अपि सौम्याः स्युर्नमस्कारान्तसंयुताः ॥ ६ ॥

सौम्याश्चापि तथाग्नेयाः फट्कारान्तसमन्विताः ।
तथा हुंकारयुक्ताश्च स्वाहान्ताश्चोभयात्मकाः ॥ ७ ॥

बीजानामपि सर्वेषां विधिं वक्ष्यामि वः क्रमात् ।
समुद्राद्वाङ्मयाद् देवैर्मन्त्रा निर्मथ्य चोद्धृताः ॥ ८ ॥

तेभ्यस्तथैव बीजानि प्रोद्धृतानि पृथक् पृथक् ।
प्राणिनां च यथा जीव इन्द्रियाणां यथा मनः ॥ ९ ॥

तथा बीजानि मन्त्राणां जीवभूतानि सर्वशः ।
बीजहीनाश्च ये मन्त्रा निर्जीवास्ते न संशयः ॥ १० ॥

पञ्चाङ्गानां विधानं च शृणुध्वं मुनिपुंगवाः ।
देहिनां तु यथा देहे जायन्तेऽङ्गानि गर्भके ॥ ११ ॥

तथैव गर्भादङ्गानामुत्पत्तौ पञ्च जज्ञिरे ।
अङ्गहीना यथा लोका[1] यान्ति कर्मण्ययोग्यताम् ॥ १२ ॥

तथैवायोग्यतां मन्त्रा यान्ति कर्मण्यसंशयः ।
गायत्रीणां तु वक्ष्यामि लक्षणं विधिनैव तु ॥ १३ ॥

दद्याच्च विष्णुगायत्र्या [2]सर्वमेव न संशयः ।
अष्टाक्षराश्च पादाः स्युः सर्वासां हि न संशयः ॥ १४ ॥

यत् कृतं च हुतं चापि यदिष्टं जप्तमेव[3] च ।
जप्तायामथ गायत्र्यां संपूर्णं स्यान्न संशयः ॥ १५ ॥

विघ्नाश्चापि न जायन्ते कर्म चैव प्रसिध्यति ।
स्वराणां व्यञ्जनानां तु भेदमद्य वदामि वः ॥ १६ ॥

चतुर्दश स्वराः प्रोक्ता अकाराद्या यथाक्रमम् ।
सप्त ह्रस्वास्तु विज्ञेयाः सप्त दीर्घास्तथैव च ॥ १७ ॥

[1] मन्त्राः B [2] सर्वत्रैव B [3] दत्तमेव B

पञ्चत्रिंशत्प्रकाराणि व्यञ्जनानि समासतः ।
ककारादीनि चैतानि क्षान्तानि तु न संशयः ॥ १८ ॥

विसर्जनीयो बिन्दुश्च स्वराणामन्तगोचरौ ।
स्वरादौ व्यञ्जनानि स्युः प्रायशः केवलानि तु ॥ १९ ॥

बिन्दुं तथा विसर्गं च न कदापि प्रयोजयेत् ।
अकारः केवलस्त्वेको मन्त्रान्ते तु प्रयुज्यते ॥ २० ॥

अस्वरं व्यञ्जनं त्वेकं न द्वितीयं कथंचन ।
मन्त्रान्ते योजनीयं हि न मन्त्रादौ कथंचन ॥ २१ ॥

सर्वेषामपि चैतेषां देवताः कथयामि वः ।
अकारस्तु स्वयं देवः सदाविष्णुर्न संशयः ॥ २२ ॥

इकारस्तु भवेद्रुद्रः सदाशिव इति स्मृतः ।
उकारस्तु भवेद् ब्रह्मा अज इत्युच्यते च यः ॥ २३ ॥

ऋकारश्चन्द्रमा ज्ञेयः ऌकारः सूर्य उच्यते ।
[1]ॡकारस्तु भवेदग्निरैकारः सूर्य उच्यते ॥ २४ ॥

औकारश्च भवेद्विष्णुः शुद्धो व्यापी च यो भवेत् ।
प्रजापतिर्विसर्गः स्यात् शुद्धाख्योऽक्षरतः परः ॥ २५ ॥

कवर्गः पञ्च भूतानि चवर्गश्चेन्द्रियाणि च ।
टवर्गो विषयास्तस्य यथासंख्यक्रमेण तु ॥ २६ ॥

कर्मेन्द्रियास्तवर्गस्तु पवर्गो विषयो भवेत् ।
यादिशान्तस्तु यो वर्गः स धातूनि न संशयः ॥ २७ ॥

[1] Gap of a few lines before this line in all MSS.

षादिळान्तस्तु वेदाः स्युः क्षकारोऽङ्गानि तस्य ह ।
अतः परं न वर्णोऽस्ति मन्त्रवादे कदाचन ॥ २८ ॥

माहेन्द्रसंहितायां तु द्रष्टव्यो वर्णविस्तरः ।
सर्वेषामपि मन्त्राणां दीपनं संप्रवक्ष्यते ॥ २९ ॥

प्रतिस्वरं यमाभ्यां च प्रतिव्यञ्जनमेव च ।
वेष्टनं दीपनं ज्ञेयं विधिर्हानं विनाशनम् ॥ ३० ॥

मन्त्रस्य वेष्टनं चाभ्यां मर्माकरणमुच्यते ।
ममामांकृत्य चोद्धारं सकलीकरणं भवेत् ॥ ३१ ॥

उद्धार वा समासस्तु विकलीकरणं भवेत् ।
मूलमन्त्रद्वयस्योक्तं समासव्यासलक्षणम् ॥ ३२ ॥

प्रत्यक्षरं तु यत् कर्म तद्व्यस्तमिति कीर्तिनम् ।
समस्तेनैव मन्त्रेण यत् कृतं तत् समस्तकम् ॥ ३३ ॥

सर्वासामपि विद्यानां मूलविद्या प्रशस्यते ।
व्यस्ते प्रत्यक्षरं देवाः समस्ते त्वेक एव ह ॥ ३४ ॥

तस्माद् व्यस्तसमस्तेन मन्त्रलक्षणमुच्यते ।
उद्धारे व्यस्तभेदः स्यात् समासे तु समस्तकम् ॥ ३५ ॥

न व्यञ्जनं तु व्यस्तं स्यात् स्वरहीनं कथंचन ।
केवलं तु स्वरे व्यस्ते व्यस्त एव न संशयः ॥ ३६ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे मन्त्रलक्षणं नाम द्वितीयोऽध्यायः

# शिवरात्रे तृतीयोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि मन्त्रवादविधिं परम् ।
देवानां तु प्रवक्ष्यामि पूर्वं मन्त्रान् यथाविधि ॥ १ ॥

पूर्वमष्टाक्षरो मन्त्रो द्वितीयो द्वादशाक्षरः ।
तृतीयो विष्णुगायत्री मन्त्रत्रयमुदाहृतम् ॥ २ ॥

एतेन देवा वश्याः स्युर्भीतास्त्रस्तास्तथैव च[1] ।
स्वाहान्तं च नमोऽन्तं च त्रयमेतद्वशीकरम् ॥ ३ ॥

फडन्तं भयकृच्चैव हुंकारान्तं तु मारणम् ।
उच्चाटनं विसर्गान्तं वौषडन्तं रुजावहम् ॥ ४ ॥

बिन्द्वन्तं प्रीतिकृच्चैव केवलं पूजनं परम् ।
एतेन त्रितयेनैव जिता देवा न संशयः ॥ ५ ॥

अथासुराणां मन्त्राश्च प्रवक्ष्यन्ते यथाविधि ।
नारसिंहाश्च ये मन्त्रास्ते सर्वे ह्यसुरान्तकाः ॥ ६ ॥

चतुःशताक्षरी चेति महाविद्येति च द्वयम् ।
चतुःशताक्षरी सर्वान् पातालान् साधयेत् सदा ॥ ७ ॥

[1] त्रस्ता भीतास्तथैव च C

पातालनिरतांश्चापि महाविद्यापि साधयेत् ।
[1]उद्धारश्च समासश्च नानयोस्तु विधीयते ॥ ८ ॥

पाठ एव प्रशस्तः स्यात् कल्पोक्तविधिनैव तु ।
अत्रापि चैव पञ्चाङ्गं गायत्री बीजमेव तु ॥ ९ ॥

उद्धृते तु न गृह्णीयाद् दीपनं तेन जायते ।
चतुःशताक्षरी विद्या प्रोक्ता पद्मोद्भवे तु सा ॥ १० ॥

महानिर्वृतिः या प्रोक्ता ब्रह्मरात्रे स्थिता तु सा ।
सुदर्शनद्वयं मन्त्रो यक्षाणां रक्षसामपि ॥ ११ ॥

महासुदर्शनं चापि तथा चैव षडक्षरी ।
महासुदर्शनं प्रोक्तं ब्रह्मरात्रे यथाक्रमम् ॥ १२ ॥

न तस्य दीपनं चापि [2]सकलीकरणं तथा ।
उद्धारश्च न कर्तव्यः पाठ एव विशिष्यते ॥ १३ ॥

या च पद्मोद्भवे प्रोक्ता सा ज्ञेया तु षडक्षरी ।
स पञ्चाङ्गयुतो मन्त्रः सर्वकर्मसु पूजितः ॥ १४ ॥

तथा कृष्णचतुर्दश्यामहोरात्रमुपोषितः ।
दक्षिणाभिमुखो भूत्वा श्मशाने वा चतुष्पथे ॥ १५ ॥

महासुदर्शनं मन्त्रं मध्यरात्रे जपेत् स्वयम् ।
प्रयच्छन्तीप्सितान् कामान् राक्षसा नात्र संशयः ॥ १६ ॥

[1] उद्धाराश्च समासाश्च B D    [2] शकलीकरणं D

निग्रहं कर्तुकामश्चेत् कुर्याद्वै सर्षपाहुतीः ।
यावदष्टशतं तावत् त्रस्यन्त्येव च राक्षसाः ॥ १७ ॥

भवन्ति किंकराश्चास्य साधयन्त्यर्थमीप्सितम् ।
यक्षान् षडक्षरेणैव साधयेत् साधकः स्वयम् ॥ १८ ॥

न्यग्रोधस्यैव चाधस्तात् पूजयित्वा सुदर्शनम् ।
न्यग्रोधसमिधः पश्चाज्जुहुयादयुतं क्रमात् ॥ १९ ॥

भवन्ति तावता वश्या यक्षाः सर्वे न संशयः ।
अतीतानागतं सर्वं कर्णेऽस्य कथयन्त्यमी[1] ॥ २० ॥

कर्तुं चेन्निग्रहं तेषां य इच्छेदचिरादिव ।
शालिपिष्टेन वै सम्यक् कृत्वा वैश्रवणाकृतिम् ॥ २१ ॥

अशोकशङ्कुना चास्य हृदये च निखानयेत् ।
षडक्षरेणाभिमन्त्र्य क्रमेणाष्टसहस्रकम् ॥ २२ ॥

तावता तस्य रोगः स्याद्यक्षास्त्रस्यन्ति तावता ।
भवन्ति किंकराश्चास्य पालयन्तोऽस्य शासनम् ॥ २३ ॥

कर्तुमिच्छति चेच्छान्तिं कीलमुत्पाट्य तत् पुनः ।
जपेत् सहस्रं प्रयतस्तद्व्रतं परिपूर्य च ॥ २४ ॥

तावता रोगशान्तिः स्यात् तेन मुक्तो धनेश्वरः ।
गन्धर्वाणां तु सर्वेषां तथा विद्याभृतामपि ॥ २५ ॥

[1] कथयिष्यति A B

विद्यापराजिता ज्ञेया सर्वकर्मप्रसाधनी ।
निग्रहेऽनुग्रहे चैव द्वे विद्ये चापराजिते ॥ २६ ॥

एतयोर्दीपनं चैव [1]सकलीकरणं तदा ।
उद्धारश्च न कर्तव्यः पाठ एव विशिष्यते ॥ २७ ॥

[2]समीकरणमत्रापि सम्यगेव विशिष्यते ।
[3]पञ्चाङ्गानि च देवानामुद्धारं दीपनं तथा ॥ २८ ॥

सकलीकरणं चापि समीकरणमेव च ।
कर्तव्यं विधिना सर्वमन्यथा विफलं भवेत् ॥ २९ ॥

वैष्णवी चैव दुर्गा च द्वे चोक्ते चापराजिते ।
पूर्वया तु वशीकारश्चान्यया निग्रहो भवेत् ॥ ३० ॥

या च पद्मोद्भवे प्रोक्ता सा विद्या वैष्णवी मता ।
ब्रह्मरात्रे तु या प्रोक्ता सा दुर्गेति प्रकीर्तिता ॥ ३१ ॥

गन्धर्वाणां वशीकारे वैष्णवी तु प्रशस्यते ।
विद्याधराणां सर्वेषां निग्रहेऽनुग्रहेऽपि च ॥ ३२ ॥

वशीकारे च संप्रोक्ता दुर्गा चैवापराजिता ।
वैष्णवी च निगृह्णीयाद् गन्धर्वान् नैव संशयः ॥ ३३ ॥

किंनराणां च सर्वेषां वाराहो मन्त्र उत्तमः ।
निग्रहेऽनुग्रहे चैव वशीकरणकर्मणि ॥ ३४ ॥

[1] शकलीकरणं D [2] समीकरणमन्त्रा अपि B
[3] End of the chapter with this line E

शङ्कुना निग्रहं कुर्यात् सर्वेषां प्रतियातने ।
अनुग्रहो हुतेनैव[1] वशीकारो जपेन तु ॥ ३५ ॥

सर्पाणां पक्षिणां चापि गारुडो मन्त्र उत्तमः ।
सर्पास्तु द्विविधा ज्ञेया नागाः सर्पा इति क्रमात्[2] ॥ ३६ ॥

सर्पाः सरीसृपा ज्ञेया नागाः स्युः कामरूपिणः ।
निग्रहानुग्रहे तेषां गारुडो मन्त्र उत्तमः ॥ ३७ ॥

सर्वे एते महामन्त्रा ब्रह्मरात्रे समीरिताः[3] ।
विशेषमत्र वक्ष्यामि विषवादे यथाविधि ॥ ३८ ॥

यकारश्चापि रेफश्च लकारश्च यथाक्रमम् ।
वकारश्चेति चत्वारो विज्ञेया चतुरक्षरी ॥ ३९ ॥

व्यस्तैरेतैश्चतुर्भिस्तु सर्वकर्माणि कारयेत् ।
वायव्यस्तु यकारः स्यादाग्नेयो रेफ उच्यते ॥ ४० ॥

लकारश्चैव माहेन्द्रो वकारो वारुणो भवेत् ।
वायव्येन भवेत् स्तोभो धूम्रवर्णः स उच्यते ॥ ४१ ॥

आग्नेयेनैव चावेशो रक्तवर्णः स उच्यते ।
माहेन्द्रेणैव संहारः स भवेत् पीतवर्णकः ४२ ॥

वारुणेनैव शुक्लेन निर्विषीकरणं भवेत् ।
[4]मण्डलीकृतितः स्वे स्वे स्तोभावेशादि कारयेत् ॥ ४३ ॥

[1] अद्भुतेनैव B
[2] द्विधा B
[3] समर्पिताः B D
[4] मण्डलेकृत्तत B

वायव्यं वेदिकाकारं मध्ये बिन्दुसमन्वितम् ।
त्रिकोणं च तथाग्नेयं कोटिसूर्यसमप्रभम् ॥ ४४ ॥

चतुरश्रं तु माहेन्द्रं मध्ये वज्रसमन्वितम् ।
वारुणं तु भवेद् वृत्तं मध्ये पद्मसमन्वितम् ॥ ४५ ॥

अनन्तं गुलिकं चैव [1]यकारेण तु कारयेत् ।
वासुकिं शङ्खपालं च रेफेणैव तु योजयेत् ॥ ४६ ॥

तक्षकं च महापद्मं लकारेणैव योजयेत् ।
कार्कोटकं च पद्मं च वकारेणैव योजयेत् ॥ ४७ ॥

अनन्तो गुलिकश्चैव वायव्यपरिवेष्टितौ ।
वासुकिः शङ्खपालश्च आग्नेयपरिवेष्टितौ ॥ ४८ ॥

तक्षकश्च महापद्मो माहेन्द्रपरिवेष्टितौ ।
कार्कोटकश्च पद्मश्च वारुणेनैव वेष्टितौ ॥ ४९ ॥

उक्तो व्यस्तक्रमश्चात्र समस्तक्रम उच्यते
आत्मानं गरुडं ध्यात्वा वहन्तं विष्णुमव्ययम् ॥ ५० ॥

[2]वायव्यमण्डले मध्ये शनैरुत्कुटिकासनः ।
जपेच्च मनसा चैव शनकैश्चतुरक्षरीम् ॥ ५१ ॥

आवेशस्तु भवेत् तेन मुद्रां तामेव दर्शयेत् ।
अवगुण्ठ्यैव गात्राणि माहेन्द्रे मण्डले स्थितः ॥ ५२ ॥

[1] वकारेण B [2] वायव्य B; वायव्ये D

दर्शयित्वा तु तां मुद्रां संहारं मनसा जपेत् ।
निर्विषीकरणं कुर्याद्वारुणे मण्डले स्थितः ॥ ५३ ॥

दर्शयेद्वा महामुद्रां स्तोभावेशादिकर्मणि ।
प्रसृतां तर्जनीं कृत्वा स्तोभनं च समारभेत् ॥ ५४ ॥

तया कम्पितया वाथ आवेशं चापि कारयेत् ।
आकुञ्चिताग्रयाकर्षं क्षिप्तवाचोपसर्पणम् ॥ ५५ ॥

घनां कनिष्ठिकां कृत्वा स्तम्भनं तु समारभेत् ।
कोशे प्रविष्टाङ्गुष्ठाभ्यां संहारं तु समारभेत् ॥ ५६ ॥

विक्षिप्ताभ्यामुभाभ्यां तु निर्विषीकरणं भवेत् ।
मुद्रामन्त्रं प्रवक्ष्यामि महामुद्रेति या स्मृता ॥ ५७ ॥

या वै गरुडमुद्रा च विधिदृष्टेन कर्मणा ।
[1]गुर्गुरु भक्षि ठठ-ओं कपिलशिखे महामुद्रे ठठ ॥ ५८ ॥

मुद्रामन्त्रस्ततः प्रोक्तस्तेन मुद्रा [2]प्रदीप्यते ।
अनन्तो वासुकिश्चैव तक्षकश्च महाबलः ॥ ५९ ॥

कार्कोटकश्च पद्मश्च महापद्मस्तथैव च ।
शङ्खपालश्च गुलिको जयो विजय एव च ॥ ६० ॥

एवमाद्या महानागाः पन्नगाश्च महाविषाः ।
निग्रहानुग्रहे योज्या वशीकारे तथैव च ॥ ६१ ॥

[1] गरुभक्षि B; गुरुभक्षि D

[2] प्रपद्यते D

यत्राभिलक्ष्यते[1] मन्त्री तत्रायान्ति न संशयः ।
कथयामि यथाशास्त्रं त्र्यक्षरं समुदाहृतम् ॥ ६२ ॥

ओं प्रों नृं ठ इति प्रोक्तो मन्त्रो यस्तु त्रियक्षरः ।
न्यासं कृत्वा त्वनेनैव शूलमुद्रां च दर्शयेत् ॥ ६३ ॥

उरः कण्ठः शिरश्चैव न्यासदेशोऽस्य कीर्तितः ।
संहारे संहृतिन्यासः कर्तव्यस्तन्त्रवित्तमैः ॥ ६४ ॥

स्तोभावेशे स्थितिन्यासः कर्तव्यः क्रमयोगतः ।
[2]निर्विषीकरणे चैव सृष्टिन्यास उदाहृतः ॥ ६५ ॥

शिरोऽन्तः संहृतिन्यासः [3]कर्णान्तः स्थितिसंज्ञितः ।
सृष्टिन्यास उरोऽन्तस्तु एतन्न्यासत्रयं क्रमात् ॥ ६६ ॥

एवं कृत्वा क्रमान्न्यासं चिन्तयेद् गरुडं ततः ।
वक्रतुण्डं महाकायं वज्राशनिसमद्युतिम् ॥ ६७ ॥

अनन्तकण्ठाभरणमुरोवासुकिभूषणम् ।
उदरे पद्मभूषं तु पद्मवेष्टितमस्तकम् ॥ ६८ ॥

बद्धकार्कोटकं नाभौ [4]कटिबद्धं तु तक्षकम् ।
कर्णस्थितं महापद्मं [5]शङ्खपालोपवीतकम् ॥ ६९ ॥

गुलिकाबद्धमूर्धानं रौन्द्रसदृशेक्षणम् ।
वहन्तं विष्णुमेवैनं चिन्तयेत् सुसमाहितः ॥ ७० ॥

[1] यत्राभिलष्यते D
[2] निर्विषीकरणं B D
[3] कण्ठान्तः B D
[4] कटीबद्धस्तु B
[5] शङ्खयज्ञोपवीतिनम् D

आत्मानं च तथा ध्यात्वा शूलमुद्रां च दर्शयेत् ।
पूरणं तु भवेद्वाचा मुष्टिना संक्रमो भवेत् ॥ ७१ ॥

स्तोभ एकजपेन स्यादावेशो द्विजपेन तु ।
संहारो निर्विषं स्याच्च ततः शूलेन तज्जपन् ॥ ७२ ॥

जप्त्वाथ पञ्चकृत्वस्तु अनन्तं चिन्तयेत् ततः ।
निर्विषीकरणं त्वेतन्मन्त्रमुच्चारयेत् ततः ॥ ७३ ॥

अतः परं क्रमाज्जप्त्वा विषादीन्यपि भक्षयेत् ।
न विषेण भवेत तस्य मरणं तु कदाचन ॥ ७४ ॥

सूर्यमण्डलगं ध्यात्वा आत्मानं ध्यानयोगतः ।
शतकृत्वो जपित्वाथ आदित्यमवलोकयेत् ॥ ७५ ॥

तेनागच्छन्ति नागाश्च सर्पाश्चापि सरीसृपाः ।
दशन्ति चैव निर्दिष्टं सर्वे कुर्वन्ति वाञ्छितम् ॥ ७६ ॥

विषाण्युपविषाण्येव नश्यन्त्यत्र न संशयः ।
संक्षेपाद् विषवादस्तु कथंचित् कथितो मया ॥ ७७ ॥

प्रेतानां च ग्रहाणां च [1]मन्त्रवादं ब्रवीमि वः ।
तेषां विधानसमयो मुद्रामण्डलमेव च ॥ ७८ ॥

आनुपूर्व्येण कर्तव्यं भूतानां च चिकित्सितम् ।
तेषां मन्त्रान् प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ७९ ॥

1 तन्त्रवादं D

ओं नमो भगवते महाविष्णवे चुलु कुण्डे चुलु चण्डे स्वाहा ।
शिखाबन्धस्त्वनेन स्यादात्मरक्षा भविष्यति ॥ ८० ॥

सप्ताभिमन्त्रित कृत्वा बध्नीयात् भस्मना शिखाम्[1] ।
पश्चाद् बलिविधानं तु कुर्यान्मन्त्रविचक्षणः ॥ ८१ ॥

ओं नमो भगवते विष्णवे [2]टिलि मिलि
भूतपतिराज्ञापयति स्वाहा ।
बलिं दद्यादनेनैव भूतानां भूतमन्त्रवित् ॥ ८२ ॥

गन्धं चापि ततो दद्याद् गन्धमन्त्रेण साधकः ।
ओं नमो भगवते विष्णवे लिप लप
प्रलानय गृह्ण नाम शिखरः ठठ ॥ ८३ ॥

अनेन गन्धमन्त्रेण गन्धं चैव निवेदयेत् ।
सर्वभूतविमोक्षः स्यादनेनैव न संशयः ॥ ८४ ॥

अनुप्रवेशमन्त्रेण ततः संक्रामयेद् बुधः ।
ओं नमो भगवते वासुदेवाय धरणी लिह
[3]मत्तवालिके स्वाहा ॥ ८५ ॥

अनुप्रवेशमन्त्रोऽयमनेन स्यात् प्रवेशनम् ।
सप्ताभिमन्त्रितं कृत्वा निक्षिपेदुदकं बुधः ॥ ८६ ॥

स्तम्भे वाप्यथवा वृक्षे प्रविशेद् भूतमत्र हि ।
अतीतानागतं सर्वमत्र स्थित्वा ब्रवीति ॥ ८७ ॥

[1] शिरः D [2] दुलि B D [3] मन्त्र B

करोति वाञ्छितं सर्वं यत्कृत्यं मन्त्रवादिनः ।
ग्रथित्वानेन रज्जुं च कृत्वा सप्ताभिमन्त्रितम् ॥ ८८ ॥

तया तु वेष्टयेत् पश्चात् वृक्षं वा स्तम्भमेव वा ।
तत्र बद्धं भवेद्भूतं निगृहीतं भविष्यति ॥ ८९ ॥

तद्विंशतिजपेनैव यदुक्तं तत् करिष्यति ।
मुक्ते मुक्तं [1]भवत्येव निग्रहानुग्रहं तथा ॥ ९० ॥

ततो निग्रहमन्त्रेण निगृह्णीयान् महाग्रहान् ।
ओं नमो [2]भगवते नारायणाय हर हरिहर स्फुट स्फोटरे
हरिराज्ञापयति चण्डिरे मण्डिरे ठठ ॥ ९१ ॥

एष निग्रहमन्त्रः स्यान्निगृह्णीयादनेन हि ।
शालिपिष्टमयीं कृत्वा भूतप्रतिकृतिं ततः ॥ ९२ ॥

व्यात्तास्यां वृत्तपिङ्गाक्षीमग्रग्रीवां महोदरीम् ।
छेदयेत् तीक्ष्णशस्त्रेण भूतच्छेदो भवेत् ततः ॥ ९३ ॥

मा मां छिन्द्र महासत्त्व मा मां भिन्देति चैव हि ।
तत्राविष्टं [3]वदेद्भूतं कर्णे वाप्यस्य शंसति ॥ ९४ ॥

साधयेत् तस्य कर्माणि मनसा चिन्तितानि वै ।
न चेदेतावता वश्यं पुनर्निग्रहमारभेत् ॥ ९५ ॥

ततो निम्बमयं कीलं कृत्वा सप्ताभिमन्त्रितम् ।
उरस्यनेन मन्त्रेण खानयेन्निग्रहस्तथा ॥ ९६ ॥

[1] भवेदेव B D [2] B omits भगवते. [3] भवेत् B

शान्तिमिच्छति चेत् कर्तुं निगृहीतस्य साधकः ।
महामन्त्रेण यष्टिं वा शस्त्रं वा प्रेषयेत् ततः ॥ ९७ ॥

ओं नमो भगवते कृष्णपिङ्गलाय
सर्वभूतपते कुप्य मुह्य हन ठठ ।
महामन्त्रस्तु संप्रोक्तः सर्वकर्मप्रसाधकः ॥ ९८ ॥

सप्ताभिमन्त्रितं कृत्वा यष्टिं वा शस्त्रमेव वा ।
प्रेषयेच्च ग्रहाविष्टे ततः शान्तिर्भविष्यति ॥ ९९ ॥

निग्रहं पूर्ववत् कुर्यादनेनैव न संशयः ।
ततश्चावेशमन्त्रेण सर्वानावेशयेद् ग्रहान् ॥ १०० ॥

ओं नमो भगवते विष्णवे सालिवह ग्वट्टा ल्ल हुं
विष्णुराज्ञापयति ठठ ।
आवेशमन्त्र उक्तोऽयं सर्वानावेशयिष्यति ॥ १०१ ॥

सप्ताभिमन्त्रितं कृत्वा सर्षपं यस्य मूर्धनि ।
निक्षिपेत् स ग्रहाविष्टो भवत्येव न संशयः ॥ १०२ ॥

नान्येन ग्रहमोक्षः स्यात् [1]कर्त्रा चैवापनीयते ।
मुष्टिना कर्षयेच्चापि मन्त्रेणानेन मन्त्रवित् ॥ १०३ ॥

वशीकरणमन्त्रेण वशीकारं प्रयोजयेत् ।
ओं नमो भगवते विष्णवे सलो तम
चुलु [2]कुलु मिल ठठ व ठठ ॥ १०४ ॥

[1] कर्ता B D

[2] कूलु मिलि B D

वशीकरणमन्त्रोऽयं प्रयोज्यो वश्यकर्मणि ।
शताभिमन्त्रितं कृत्वा करवीरं यथाविधि ॥ १०५ ॥

यस्य मूर्धनि वै दद्यात् तं प्रविश्य ग्रहः सदा ।
वशमानयति क्षिप्रं ततः कर्माणि साधयेत् ॥ १०६ ॥

सर्वं संक्रममन्त्रेण ततः कुर्याद्विचक्षणः ।
ओं नमो भगवते सर्वेश्वराय हल्माज्ञापयति स्वाहा ॥ १०७ ॥

अनेनैव तु मन्त्रेण [1]संक्रामन्ति ततो ग्रहाः ।
प्रतिमासु च सर्वासु तथैव पुरुषान्तरे ॥ १०८ ॥

ग्रहावाहनमन्त्रं तु ततः कुर्याद्विचक्षणः ।
ओं नमो भगवते विष्णवे महादेवाय मिलि मुञ्च ठठ ॥ १०९ ॥

मन्त्रेणानेन कृत्वा तु ततः प्रतिकृतिं क्रमात् ।
प्रेषयित्वानयेत् सर्वान् ग्रहान् दुष्टग्रहानपि ॥ ११० ॥

ततो नर्तनमन्त्रेण नर्तयेच्च ग्रहानपि ।
ओं नमो भगवते विष्णवे नमश्चण्डचक्राय निदर्शय मुखं जहि मा
भिन्द चक्रानललोचनजिह्व भूत तापय पिशाचान् ठठ ॥ १११ ॥

अनेनैव तु मन्त्रेण ततः सप्ताभिमन्त्रितम् ।
कृत्वा ग्रहगृहीताय दातव्यं नृत्यति क्रमात् ॥ ११२ ॥

अथोत्सारणमन्त्रेण ग्रहानुत्सारयेद् बहिः ।
ओं नमो भगवते चण्डचक्रधराय जिलि हिलि विष्णुः स्तम्भयति
स्तम्भधारि वृद्धिकारिणि तन्न हत्रा [2]उत्वाम्भः शूलिनी
पिशाच ठठ ॥ ११३ ॥

[1] संक्रामति B

[2] उवत्वाम्भः B

सप्ताभिमन्त्रितं कृत्वा लोष्टानेकादश क्रमात् ।
अष्टदिक्षु [1]क्षिपेदूर्ध्वमधश्चापि यथाक्रमम् ॥ ११४ ॥

हस्ते चैकं तु गृह्णीयाच्चक्रकवचक्रमुद्रया ।
ग्रहा निर्यान्ति सर्वेऽपि योजनानां शतात् परम् ॥ ११५ ॥

[2]नातिक्रामन्ति मर्यादां तच्छासनपरायणाः ।
मण्डलस्य विधानं तु कथयामि यथातथम् ॥ ११६ ॥

पञ्चैव मण्डलानि [3]स्युर्यथावर्णानुपूर्वशः ।
भूतचक्रं च नाम्ना तु ततो भूतार्गलं तथा ॥ ११७ ॥

शूलार्गलं चासिधारं तथा मूढार्गलं क्रमात् ।
ग्रहाणां ब्राह्मणानां तु भूतचक्रं तु मण्डलम् ॥ ११८ ॥

भूतार्गलं नृपाणां तु तथा शूलार्गलं विशाम् ।
असिधारं तु शूद्राणां मण्डलं समुदाहृतम् ॥ ११९ ॥

अन्त्यचण्डालजातीनां मूढार्गलमुदाहृतम् ।
तच्च दुष्टग्रहाणां च मण्डलं समुदाहृतम् ॥ १२० ॥

केचिद् दुष्टग्रहाणां तु वातचक्रं प्रचक्षते ।
षष्ठं तु मण्डलं ह्येतद्वातचक्रमिति श्रुतम् ॥ १२१ ॥

मण्डलं भूतचक्राख्यं ब्राह्मणानां ब्रवीमि वः ।
चतुरश्रं ततः कुर्याच्चतुर्हस्तं समन्ततः ॥ १२२ ॥

[1] भवेत् B [2] नातिक्रमन्ति B [3] स्यात् B

बहिरर्गलरेखैका चतुर्दिक्षु समन्ततः ।
पूर्वापरायता वीथी मध्ये वै हस्तविस्तरा ॥ १२३ ॥

तथा तिर्यग्भवेद्वीथी मध्ये वै दक्षिणोत्तरा ।
द्वे द्वे च वीथी रेखा तु अनतिक्रान्तमण्डला[1] ॥ १२४ ॥

ततश्च वीथिकासंधौ शङ्कुं कृत्वा तु मध्यमे ।
वलयं [2]वर्तयेत् तेन संधिमानप्रमाणतः ॥ १२५ ॥

तावतैव प्रमाणेन द्वितीयं वर्तयेत् ततः ।
लिखेद्भूतपतिं मध्ये मध्येवीथि सरित्पतेः ॥ १२६ ॥

कमण्डलुं दण्डकाष्ठमक्षसूत्रं च वै क्रमात् ।
आग्नेये नैर्ऋते चैव वायव्ये च समालिखेत् ॥ १२७ ॥

तत्तदीशानकोणे तु ब्रह्मविष्टस्य चासनम् ।
बहिरर्गलरेखा तु ततः क्षत्रियमण्डले ॥ १२८ ॥

चतुरश्रं ततः कृत्वा अन्तर्मण्डलमालिखेत् ।
तथैव चार्गलं चापि चतुरश्रं तदर्धकम् ॥ १२९ ॥

कोणे कोणे बहिःशूलं मध्येवीथि चतुर्दिशम् ।
चतुष्पथप्रमाणेन मध्ये वै वीथिपीठिका ॥ १३० ॥

चतस्रः क्रमशः कृत्वा वीथ्यन्ते च चतुर्दिशम् ।
चतुष्पथस्य कोणे तु तदर्धा पीठिका बहिः ॥ १३१ ॥

1 मण्डले B D

2 वर्तते B

अन्तर्मण्डल एवैताश्चतस्रस्तु समालिखेत् ।
अन्तर्मण्डलशूलाग्रानर्वाक् च बहिरर्गला ॥ १३२ ॥

धनुरश्वं तथा नागं तत्कोणेषु[1] समालिखेत् ।
नैर्ऋते चैव वायव्य ईशाने च यथाक्रमम् ॥ १३३ ॥

पूर्वदक्षिणकोणे तु महाविघ्नस्य चासनम् ।
वैश्यस्यापि तथा कुर्यात् सपूर्वबहिरर्गलाः ॥ १३४ ॥

तथान्तर्मण्डलं कुर्यात् तदर्धं चतुरश्रकम् ।
तदर्धं चतुरश्रं स्यात् तस्याप्यन्तरमण्डलम् ॥ १३५ ॥

तदन्तश्च प्रकुर्वीत तदर्धं वृत्तमण्डलम् ।
पीठिकायां चतुर्दिक्षु चतस्रो बहिरर्गलाः ॥ १३६ ॥

बहिरेव क्रमात् कुर्यादिन्द्रादिक्रमयोगतः ।
अन्तर्यच्चतुरश्रं तु बहिर्मण्डलमुच्यते ॥ १३७ ॥

कोणे कोणे बहिर्मूलादन्तर्मुखबहिर्मुखाः ।
बहिर्मुखास्तु शूलाग्रास्त्वन्तः स्युर्बहिरर्गलाः ॥ १३८ ॥

अन्तर्मुखास्तु शूलाग्रा बहिर्मध्यममण्डलाः[2] ।
कलशं पादुकां चैव कोष्ठाकारे समालिखेत् ॥ १३९ ॥

वायव्येशानवह्नीनां प्रदेशेषु यथाक्रमम् ।
दक्षिणे चापकोणे च महाविघ्नस्य चासनम् ॥ १४० ॥

[1] कोणे तु B    [2] बहिर्मण्डलमध्यगा B

शूद्रस्य मण्डले प्रोक्तं बहिरेवार्गलद्वयम् ।
वीथयश्च तथा कार्या वहिरर्गलसंगताः ॥ १४१ ॥

चतुष्पथं बहिश्चापि चतुरश्रं तु मण्डलम् ।
तस्माच्चापि बहिश्चापि चतुरश्रं तु मण्डलम् ॥ १४२ ॥

चतुष्पथाद् बहिष्कोणे वृत्ताकारं तु मण्डलम् ।
ईशानान्तमथाग्न्यादि कारयेत् तन्त्रवित्तमः ॥ १४३ ॥

कोणेषु च लिखेत् पश्चादन्तश्च बहिरर्गलान् ।
लाङ्गलं चापि यष्टिं च कोष्ठं चापि यथाक्रमम् ॥ १४४ ॥

ईशाने च तथाग्नेये नैर्ऋते च यथाक्रमम् ।
पश्चिमोत्तरभागे तु ग्रहाविष्टस्य चासनम् ॥ १४५ ॥

चण्डालानां तथान्त्यानां दुष्टानां च न चार्गलम् ।
चतस्रो वीथयः कार्याश्चतुष्पथयुतास्तथा ॥ १४६ ॥

न चैषां लेखनीयाश्च न चैषामासनं तथा ।
दर्शनेनैव नश्यन्ति दुष्टा एव तु मानवाः ॥ १४७ ॥

तेषां तु वातचक्राख्यं किंचिन्मण्डलमुच्यते ।
अर्धचन्द्रसमं कार्यमेकरेखाविधानतः ॥ १४८ ॥

चतुर्वर्णाश्रितानां तु मण्डलानां समासतः ।
लोकपालायुधान्यत्र चतुर्दिक्षु समालिखेत् ॥ १४९ ॥

कुलिशं यमदण्डं च पाशं च धनुरेव च ।
तथैवान्नशरावांश्च चतुर्दिक्षु निखानयेत ॥ १५० ॥

दध्योदनशरावं च पूर्वद्वारे निखानयेत् ।
कृसरं दक्षिणद्वारे पायसं पश्चिमे तथा ॥ १५१ ॥

गुडान्नमुत्तरद्वारे चादृश्यान्येव कारयेत् ।
गोष्ठे पर्वतपार्श्वे वा श्मशाने वा चतुष्पथे ॥ १५२ ॥

अरण्ये निर्जने वापि देवतायतनेषु च ।
भूतकूरबलिं दत्त्वा ब्रह्मचर्यव्रते स्थितः ॥ १५३ ॥

चतुर्विधैस्तथा चूर्णैर्लिखेन्मण्डलमादितः ।
ततः कृष्णचतुर्दश्यामाचार्यः समुपोषितः ॥ १५४ ॥

कृतरक्षो यथान्यायं लिखेन्मण्डलमादितः ।
शुक्लै रक्तैश्च पीतैश्च कृष्णैश्चूर्णैर्यथाविधि ॥ १५५ ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च तथाविधम् ।
अङ्गारचूर्णैः [1]शेषाणां कर्तव्यं चैव मण्डलम् ॥ १५६ ॥

एतैरेव तु कुर्वीत इतरैस्तु विवर्जयेत् ।
लिखित्वा मण्डलान्येवं पञ्च षड् वा क्रमेण तु ॥ १५७ ॥

आचार्यः प्रयतो भूत्वा शुद्धवासा जितेन्द्रियः ।
मण्डलाभिमुखः स्थित्वा दक्षिणे मण्डलस्य तु ॥ १५८ ॥

[2]विष्टरं वाथ कूर्चं वा कृत्वा चाग्रकरेण च ।
कृतरक्षः शुचिर्भूत्वा शिखां बद्ध्वा यथाविधि ॥ १५९ ॥

1 ज्येष्ठानां B

2 विंशतिं B

पुत्रजीवमयं सूत्रं तथा पद्माक्षमेव वा ।
धारयेत् करशाखाभिः कुशबन्धमथापि वा ॥ १६० ॥

वामे च कटकं हस्ते धारयेद् भूतरक्षणम् ।
पूर्वोक्तेनैव मन्त्रेण तां मुद्रां दर्शयेत् ततः ॥ १६१ ॥

तावता स्तोभमायान्ति ब्राह्मणाद्या यथाक्रमम् ।
तेषां ग्रहाणां चिह्नानि कथयामि यथातथम् ॥ १६२ ॥

ध्यायन् जपन् स्तुवंश्चैव विनीतश्च शुचिव्रतः ।
देवताराधने सक्तः संध्योपासनतत्परः ॥ १६३ ॥

कीर्तयेन्मुनिदेवांश्च स ब्राह्मण इति स्मृतः ।
लिखति हसति क्षिप्रमास्फोटयति नृत्यति ॥ १६४ ॥

हस्त्यश्वरथयोधांश्च संग्रामं चानुकीर्तयेत् ।
गन्धमाल्यप्रियो नित्यं शुक्लाम्बरधरः सदा ॥ १६५ ॥

क्षत्रानुभावयुक्तो यस्तं विद्यात् क्षत्रियग्रहम् ।
[1]आहूतोऽधो निरीक्षेत जृम्भते कम्पते मुहुः ॥ १६६ ॥

गायन् नृत्यंस्तथा क्रोशन् क्रन्दते च पुनः पुनः ।
नागांश्चापि तथा [2]धुर्यान् वीक्षते वाहयेत् सदा ॥ १६७ ॥

पण्यैर्व्यवहृतिं[3] कुर्यात् सदा क्षेत्रेषु रज्यते ।
एवंविधैस्तथा लिङ्गैस्तं वैश्यग्रहमादिशेत् ॥ १६८ ॥

[1] समाताधो B [2] युध्यान् B [3] व्यवहृतं B C

यस्तु मूत्रपुरीषाद्यैर्व्याहर्तिं कुरुते सदा ।
शौचभ्रष्टो दुराचारो दृष्ट्वा विप्रं तु कुप्यति ॥ १६९ ॥

हस्तेन मेढ्रं स्पृशति मर्दयत्यशुभानि च ।
शृणोति यस्य [1]सद्वाक्यं तत्र क्रोशति भूयसा ॥ १७० ॥

नाभिजानाति चात्मानं तं शूद्रग्रहमादिशेत् ।
यस्तु सर्वाणि संमिश्रं कुर्यात् कर्माणि सर्वशः ॥ १७१ ॥

भीतित्राससमायुक्तस्तं नीचग्रहमादिशेत् ।
आत्मानं गूहते यस्तु भीषयेद्वापि रोदिति ॥ १७२ ॥

आत्मानमन्यथा वक्ति तं दुष्टग्रहमादिशेत् ।
एवं लिङ्गैर्ग्रहान् ज्ञात्वा स्वस्थाने विनिवेश्य च ॥ १७३ ॥

पूर्वं संबोधयेदेनं साम्नाचार्यः प्रयत्नतः ।
भो गृहीति प्रियं पूर्वं ब्राह्मणग्रहमादिनः ॥ १७४ ॥

महासत्त्वेति च ब्रूयात् भोपूर्वं क्षत्रियग्रहम् ।
भो नन्देति वदेद्वैश्यं भो साधो इति शूद्रकम् ॥ १७५ ॥

ये तु दुष्टग्रहास्तेषु न ब्रूयात् सामभिः क्वचित् ।
शनैरावेशमन्त्रं तु ततस्तु समुदीरयेत् ॥ १७६ ॥

ओं नमो भगवते [2]विष्णवे भूताधिपतये वासुदेवाय अल
खड्गरावण संक्रन्त दानवशोणितदिग्ध... वज्रनरसिंह विलि

[1] यद्वाक्यं B

[2] महाविष्णवे B

नृत्यखड्ग अनिवर्तिकोपालि हन भूतं त्रासय मण्डले
कड्ढ अङ्कुशेन समयं प्रवेशय आह्वय चण्डासिधारावति
विष्णुराज्ञापयति स्वाहा ।
एष आवेशमन्त्रस्तु अनेनावेशयेद् ग्रहान् ॥ १७७ ॥

शिखाबन्धं ततः कुर्यात् शिखामन्त्रेण साधकः ।
कुण्डलं मण्डलं भूतं समये तिष्ठ स्वाहा ॥ १७८ ॥

शिखाबन्धस्य मन्त्रोऽयं ग्रहाविष्टस्य कीर्तितः ।
ततो भक्षणमन्त्रेण दद्यादन्नं मुखे पुनः ॥ १७९ ॥

वल्मीकमृत्तिकायां तु दद्यादन्नं विचक्षणः ।
ओं नमश्चक्रक्रोधाय नरसिंहाय हिलि पुल [1]कूलिभून अण्डे
ये गृह्ण इध्मं ग्रहं पुरोमुख महाकुक्कुरग्रहं महाविष्णुराज्ञा-
पयति ठठ ॥ १८० ॥

एष भक्षणमन्त्रस्तु मन्त्रेणानेन भोजयेत् ।
ग्रहाविष्टं ग्रहो मुञ्चेत् तावता नात्र संशयः ॥ १८१ ॥

सर्वभक्षणमन्त्रेण ततः सर्वं तु कारयेत् ।
कृष्णमृत्तिकया सर्वं कारयित्वा विचक्षणः ॥ १८२ ॥

ओं नमश्चक्रक्रोधाय [2]चण्डलोडदमजिह्व पन्नगत्वर
निग्रह[3] भक्षय महाभोगगतिराज्ञापयति ठठ ॥ १८३ ॥

निग्रहं च ततः कुर्याद्यदि तं न विमुञ्चति ।
कृत्वा प्रतिकृतिं पश्चाद् गोमयेन विचक्षणः ॥ १८४ ॥

[1] भूकुलि B C [2] चललोडदमर्जि B D [3] नुग्रहं A

लोहकीलेन वेद्धव्यं वेधमन्त्रेण साधकैः[1] ।
ओं नमश्चण्डासिधराय[2] चक्रिणे बन्धय मम ग्रहचण्डालं समयातिक्रान्तमर्यादं ज्वालय चक्रपाणिराज्ञापयति ठठ ॥ १८५ ॥

एष वेधनमन्त्रस्तु भवेद्वेध्यमनेन च ।
ततः क्षुरिकया चापि वेद्धव्यं नात्र संशयः ॥ १८६ ॥

हा हेति हाकृतिं कुर्याद्विधा चेति चाग्रतः ।
अब्रह्मण्यं ततः कुर्याद्विधेन विधुरीकृतः ॥ १८७ ॥

अपि दुष्टग्रहाः सर्वे वशे तिष्ठन्त्यसंशयः ।
ताडयेत् तैलमन्त्रेण तावना चेन्न मुञ्चति ॥ १८८ ॥

ओं नमश्चण्डासिधराय[2] विष्णवे मुसलिकाहन नट च निकृन्त मुसल मार प्रविश्य दारय [3]ताडय भगवन् दुष्टग्रहान् स्वाहा ।
तैलप्रहारमन्त्रोऽयं दुष्टानां शमनं परम् ॥ १८९ ॥

समाभिमन्त्रितं कृत्वा मन्त्रेणानेन तैलकम् ।
मुसलं ताडयेत् तेन ततो दिष्टो विमुञ्चति ॥ १९० ॥

पुनश्च निग्रहं कुर्यात् तावना चेन्न मुञ्चति ।
ओं नमश्चण्डक्रोधाय नरसिंहाय चिलि योगयोगिनि [4]व्यात्त-कराले मेषाभचर्ममुद्रावृत्तिशरीरे शङ्खिनि चक्रहस्ते दुर्गे ज्वलितपिङ्गलकेशि कृतपिञ्छशेखरे[5] जहि कृष्णभुजगे

[1] साधकः B [2] चण्डाधिधाराय B D [3] तोऽस्य B
[4] व्यन्तकराले B [5] केशीकृतपिञ्छशेखरे B

नेतुं ग्रहमार्तय भ्रामय मूर्छय संमोहनं कुरु आवेशय ग्रहमजहत्सौष्ठवकर्ण विकलाङ्ग[1] प्रमिङ्गं हृदयं क्लिष्टं विक्रोशन्तं सकलमानय । खनि भूतानि भूपतिराज्ञापयति । संप्रविश चण्डि गच्छसि हो ग्रह स्वनी को ल ठठ ॥ १९१ ॥

अनेन [2]नीलनिर्गुण्डि सुरसां च विमृज्य तु ।
नासापुटे प्रयोक्तव्यं निग्रहस्तेन जायते ॥ १९२ ॥

मोक्षमन्त्रेण मोक्षं तु ततः कुर्याद्विचक्षणः ।
ओं नमश्चण्डासिधराय[3] विमिला चञ्चलि गच्छ समयं भो ग्रह [4]स्वामिन् कोल ठ ठ ठ ॥ १९३ ॥

एष मोक्षणमन्त्रस्तु मन्त्रेणानेन मोक्षयेत् ।
अपस्मारग्रहस्यान्यो मन्त्र एष विनिग्रहे ॥ १९४ ॥

ओं नमश्चण्डक्रोधाय[5] नरसिंहाय [6]आनले कुनले चल अल मे अवदारमनेन वचनेन हन हन तन्मे भूतपतिराज्ञापयति ठठ ।
सप्ताभिमन्त्रितं कृत्वा मन्त्रेणानेन तैलकम् ॥ १९५ ॥

प्रताप्य सेचयेत् कर्णे[7] नासिकायां तथैव च ।
अपस्मारस्ततस्तूर्णमपयाति न संशयः ॥ १९६ ॥

देवा यक्षाश्च गन्धर्वा भूता नागाश्च राक्षसाः ।
पिशाचाः प्रेतसंघाश्च अष्टौ ग्रहगणाः स्मृताः ॥ १९७ ॥

1 सकलाङ्ग B  2 नीलनिर्गुण्डि B  3 धाराय B
4 स्वानिल B  5 क्रोध B  6 अनेले B  7 कण्ठे B

मुद्राश्चापि तथा चाष्टौ तेषां तु क्रमयोगतः ।
अङ्गुष्ठं तर्जनी चापि मध्यमा चाप्यनामिका ॥ १९८ ॥

कनिष्ठिका . . . . . . . . [1]मुद्राभिरेव च ।
अष्टावष्टग्रहाणां तु मुद्राः प्रोक्ता यथाक्रमम् ॥ १९९ ॥

स्वां स्वां च दर्शयेन्मुद्रां ग्रहाणामेव सर्वशः ।
[2]भूतमन्त्रमिति प्रोक्तं पशूनां मन्त्रमुच्यते ॥ २०० ॥

ओं नमो भगवते विष्णवे पशूनां पतये नमः ठठ ।
मन्त्रेणानेन संगृह्य पशून् नासापुटे भृशम् ॥ २०१ ॥

अङ्गुष्ठतर्जनीभ्यां तु नामयेत् तत्त्वमुद्रया ।
तावनैव वशं यान्ति पशवोऽश्वादयस्तथा ॥ २०२ ॥

हस्तिनां कथयाम्यद्य मन्त्रवादमनुत्तमम् ।
ओं नमो गणपतये शूर्पकर्णाय ठठ ॥ २०३ ॥

पादाङ्गुष्ठद्वयेनैव कर्णमूले तु हस्तिनाम् ।
जपन्नेव तु संमर्देद्वश्याः स्युः सर्वदन्तिनः ॥ २०४ ॥

सरीसृपाणां सर्वेषां मन्त्रं तु कथयामि वः ।
ओं नमो भगवते विष्णवे सर हल हुं फट् ठठ ॥ २०५ ॥

सरीसृपाणां सर्वेषां विषसंहार एव च ।
उदकस्तम्भमन्त्रं तु कथयामि यथातथम् ॥ २०६ ॥

1 मुद्रा प्रच्छमुद्राभिरेव च B

2 भूततन्त्र B

ओं नमो भगवते वायवे मर्दय [1]विमर्दय स्तम्भय जिलि[2] संहर ठठ ।
मन्त्रेणानेन कुर्वीत जलस्तम्भं विचक्षणः ॥ २०७ ॥

ततोऽग्निस्तम्भमन्त्रेण स्तम्भयेत् साधकोऽनलम् ।
ओं नमो भगवते वरुणाय कुरु[3] स्तम्भय ठठ ॥ २०८ ॥

अग्निस्तम्भनमन्त्रोऽयमनेन स्तभ्यतेऽनलः ।
वायव्यां धारणा कृत्वा स्तोभयेत् स्तोभकर्मणि ॥ २०९ ॥

आग्नेय्या धारणां कृत्वा कुर्यादावेशनक्रियाम् ।
[4]माहेन्द्रीं धारणां कृत्वा संहारं तु समाचरेत् ॥ २१० ॥

कृत्वा तु निर्विषं कुर्याद्वारुणीं धारणां पुनः ।
क्रमेण बीजमेतेषां विषवादे प्रकीर्तितम् ॥ २११ ॥

धारणायाः क्रमश्चापि प्रोक्तः पद्मोद्भवे किल ।
संयोगपटले सम्यग् द्रष्टव्यो धारणाक्रमः ॥ २१२ ॥

तस्मादत्र न सम्प्रोक्तो धारणायाः क्रमो मया ।
मन्त्रवाद इति प्रोक्तः कथंचित् पृच्छतां तु वः ॥ २१३ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे
मन्त्रवादः तृतीयोऽध्यायः

1 प्रमर्दय B
2 हिलि A
3 रुरु B
4 माहेन्द्रं A

# शिवरात्रे चतुर्थोऽध्यायः

[1]सनत्कुमारः—

अथातः संप्रवक्ष्यामि क्रमात् पारिषदेश्वरान् ।
अष्टोत्तरसहस्रं तु क्रमात् पारिषदेश्वराः[2] ॥ १ ॥

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ २ ॥

चण्डश्चापि प्रचण्डश्च विश्वकर्मा वृषाकपिः ।
उपेन्द्रः प्राकृतः पुण्यः पुष्करो विश्वभावनः ॥ ३ ॥

वासुभद्रः सुभद्रश्च विश्वनेत्रः प्रतापनः ।
विश्वभुग्विश्वभृद्विश्वः सर्वनेत्रः सहस्रदृक्[3] ॥ ४ ॥

सहस्रमूर्धा सर्वात्मा एकशृङ्गो विचक्षणः ।
असुरारिः कृतान्तश्च कृतो विश्वसहस्रभूः ॥ ५ ॥

रथाङ्गी शार्ङ्गभृद्धन्वी वैनतेयो विहंगमः ।
वायुरुज्ज्वलगो रेणुर्महासत्त्वः संमोहनः ॥ ६ ॥

सर्वकृत् सत्यवान् सत्यः सत्त्ववान् सर्वनाशनः ।
संभवः प्रभविष्णुश्च समस्तो व्यस्त एव च ॥ ७ ॥

[1] E omits from here up to the end of verse 8.

[2] पारिषदेश्वरान् B D

[3] दिक् B

समाधानो महाभागो भागधेयी भगः शुचिः ।
सुभगः सूक्ष्मकेशश्च गुडाकेशः प्रकाशनः ॥ ८ ॥

वर्तुलाक्षो विशालाक्षो [1]वक्राक्षः कृष्णलोचनः ।
[2]वीरसेनाधनो विष्णुरक्षयः क्षयकृत् क्षयी ॥ ९ ॥

पावनो वामदेवश्च महादेवो हलायुधः ।
भूनाथोऽथ जगन्नाथो भूतेशो भूतनाशनः ॥ १० ॥

अक्षुद्रः पक्वसत्त्वश्च निराशीर्निष्परिग्रहः ।
विभागो भावनश्चापि [3]चक्रपाणिर्गदायुधः ॥ ११ ॥

भीषणो मोहनश्चापि विमानः समयी कृशः ।
कुबेराक्षो महाक्षश्च पद्माक्षः कृष्णलोहितः ॥ १२ ॥

विश्वरूपो विरूपश्च [4]कामः कामनिबर्हणः ।
विघ्नेशो गणनाथश्च देवलः कर्कटी जटी ॥ १३ ॥

रक्ताक्षो लोहिताक्षश्च वसुर्वसुपतिस्तथा ।
समयी साधकश्चापि प्रथमः प्रथमेश्वरः ॥ १४ ॥

अनिरुद्धः प्रजानाथः सर्वगः सर्वतोमुखः ।
वज्रपाणिर्गदापाणिः शार्ङ्गपाणिः शतक्रतुः ॥ १५ ॥

अङ्कुशो वामभागश्च वीर्यवान् वीर्यवत्तरः ।
. . . . . . केचित् प्लवगास्यास्तथापरे ॥ १६ ॥

[1] वक्त्राक्षः B
[2] वीरसेनोधनो B D
[3] चक्रपाण्डुः B
[4] चकमः कामिबृंहणः B E

पिङ्गलास्यास्तथा केचिच्चटकास्यास्तथा परे।
दात्यूहवदनाः केचित् कुक्कुरास्यास्तथापरे ॥ १७ ॥

केचिदश्वमुखाश्चापि हस्तिवक्त्रास्तथापरे।
एते चान्ये च बहवो विष्णोः पारिषदाः स्मृताः ॥ १८ ॥

अन्येषामपि चैतेषां भृत्या भूतगणाः स्मृताः।
सहस्रं तु गणाः प्रोक्ताः प्रत्येकं विष्णुसंज्ञया।
गणाख्याः कोटिसंख्याता अस्मिंस्तन्त्रे प्रकीर्तिताः ॥ १९ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे
भूतविस्तारः चतुर्थोऽध्यायः

# शिवरात्रे पञ्चमोऽध्यायः

[1]सनत्कुमारः—

चरुपाकविधानं तु कथयामि यथातथम् ।
चरुपात्रद्वयं प्रोक्तं ताम्रं मृन्मयमेव वा ॥ १ ॥

ताम्रं तु सर्वदा शस्तं तदलाभे तु मृन्मयम् ।
पात्रं प्रक्षालयेत् पूर्वं विष्णुगायत्रिया[2] बुधः ॥ २ ॥

अष्टाक्षरेण मन्त्रेण स्पृशेत् [3]प्रसृतिमुद्रया ।
स्पृशेच्च तण्डुलान् पश्चाद् द्वादशाक्षरविद्यया ॥ ३ ॥

क्षिपेद् द्वादशमुष्टींस्तु क्रमाद् द्वादशनामभिः ।
नमस्कारान्तसंयुक्तैर्ध्यात्वा नारायणं प्रभुम् ॥ ४ ॥

ततश्च चतुरो मुष्टीन् प्रक्षिपेन्मूर्तिनामभिः ।
तण्डुलान् क्षालयेत् पश्चाद् बीजेन परमेष्ठिना ॥ ५ ॥

चुल्लीमारोपयेत पश्चाद् बीजेन पुरुषात्मना ।
अग्निं समेधयेत पश्चाद् विश्वबीजेन साधकः ॥ ६ ॥

[1] D omits from here up to the end of verse 8 of this chapter.

[2] गायत्र्या B

[3] प्रसृत B

निवृत्त्या चाभिघार्याथ सर्वेणैवावतारयेत् ।
मूलमन्त्रेण वा सर्वं कुर्यात् तन्त्रविचक्षणः ॥ ७ ॥

विलीनं वर्जयेद्धल्यमतिपक्कं तथैव च ।
तथा व्यापकसंपूर्णं ततस्तण्डुलमेव च ॥ ८ ॥

वर्णान्तरगतं चैव गन्धदुष्टं च धूमितम् ।
विपक्कं स्रावितं चैव आघ्रातं निर्विशानतः ॥ ९ ॥

अवक्षुतं श्वासहतं मुखवायुहतं तथा ।
[1]परस्पृष्टं पशुना स्पृष्टमदीक्षितनिरीक्षितम् ॥ १० ॥

लङ्घितं शीतमत्युष्णं भिन्नभाण्डगतं तथा ।
क्रिमिकेशादिसंयुक्तं स्वेदबिन्दुहतं तथा ॥ ११ ॥

मन्त्रहीनं क्रियाहीनमगुप्तमभिभाषितम् ।
अर्कपत्रयुतं चापि वर्जयेदन्नमश्वरम् ॥ १२ ॥

फलानि यत्नपक्कानि वर्जनीयानि सर्वशः ।
कदलीफलमेकं तु यत्नपक्केषु गृह्यते ॥ १३ ॥

अपक्कमग्निना दग्धं फलं च न निवेदयेत् ।
अपक्कानां विधिं चात्र तण्डुलानां ब्रवीमि वः ॥ १४ ॥

अभिन्नास्तण्डुला ग्राह्या अस्विन्नाश्च तथैव च ।
अतुषा अत्वचश्चापि पाषाणक्रिमिवर्जिताः ॥ १५ ॥

[1] परस्पृष्टं B

अकणाश्च रजोहीना अवाक्स्पर्शविवर्जिताः ।
अपकास्तण्डुलाद्यास्तु न निवेद्याः कथंचन ॥ १६ ॥

पक्वमेव चरुं दद्याद् वर्जितं तु विवर्जयेत् ।
वर्जितं च चरुं मोहान्निवेदयति यो गुरुः ॥ १७ ॥

राक्षसाश्च पिशाचाश्च हृष्टा गृह्णन्ति तं चरुम्[1] ।
कुप्यत्येव हरिश्चात्र नात्र कार्या विचारणा ॥ १८ ॥

तस्मात् सर्वप्रयत्नेन वर्जितं तु विवर्जयेत् ।
पक्वापक्वविधिः प्रोक्तः फलानि कथयामि वः ॥ १९ ॥

आम्रं च पनसं चैव कदलीफलमेव च ।
नालिकेरं च खर्जूरं द्राक्षा जम्बूफलं तथा ॥ २० ॥

करविन्दं करीरं च बिल्वं राजादनं तथा ।
कपित्थं [2]कर्करी चापि कर्कन्धूदुम्बराणि च ॥ २१ ॥

पारावतं च हृव्यं च मातुलुङ्गं च दाडिमम् ।
तथा चामलकं गोपं ग्राह्यं तु मधुराणि च ॥ २२ ॥

मधुरेषु च सर्वेषु तालमेकं तु वर्जयेत् ।
वर्जयेच्चैव तिक्तानि कटुकानि च सर्वशः ॥ २३ ॥

क्रिमिदुष्टानि सर्वाणि पक्षिदष्टानि चैव हि ।
तथा क्षतानि सर्वाणि पातितानि[3] स्वयं तथा ॥ २४ ॥

1 तच्चरुम् B 2 तर्करी B 3 पतितानि B

पतितान्यशुचिस्थाने आघ्रातानि च सर्वशः ।
व्रणितं व्याधितं चैव अग्निदग्धं च वर्जयेत् ॥ २५ ॥

फलानि कथितान्यत्र मूलानि कथयामि वः ।
वल्ली चैव महावल्ली नागवल्ली तथैव च ॥ २६ ॥

मधुवल्ली च पिण्डा च क्षुद्रपिण्डा तथैव च ।
गङ्गा चैव महागङ्गा एतासां मूलमुत्तमम् ॥ २७ ॥

अलाभे शेषमूलानि वर्जयित्वा तु सूरणम् ।
कथितानि निवेद्यानां नामानि च कथंचन ॥ २८ ॥

नाग्निदग्धानि वा तत्र सिद्धान्येव निवेदयेत् ।
अग्निकार्ये फलादीनि मूलानां तु विवर्जयेत् ॥ २९ ॥

निवेदने [1]प्रशस्तानि अपूपादीनि सर्वशः ।
न वा लवणमिश्राणि योग्यानि तु कथंचन ॥ ३० ॥

ओषधीनां क्रमं वक्ष्ये ग्राह्याणां चरुकर्मणि ।
सर्वे तु व्रीहयः शस्ताः सर्वे चैव प्रियङ्गवः ॥ ३१ ॥

यवा वेणुयवाश्चैव श्यामाकाः श्यामिकास्तथा ।
नीवाराश्च तथा ग्राह्याः कोशीधान्यं तु वर्जयेत् ॥ ३२ ॥

कोशीधान्येषु [2]ग्राह्याणि मुद्गाश्चैव तिलास्तथा ।
व्रीहीणां शालयः शस्तास्तदलाभे तु षाष्टिकाः[3] ॥ ३३ ॥

[1] प्रागुक्तानि B [2] गृह्याणि B [3] षाष्टिकम् B

श्रेष्ठाः कङ्गुप्रियङ्ग्वाद्यास्तदलाभे तु रज्जुकाः ।
यवाद् वेणुयवः श्रेष्ठस्तदलाभे च यः पुनः ॥ ३४ ॥

श्यामाकः श्यामिका श्रेष्ठा श्यामाकात् तदलाभतः ।
[1]सर्वेषामपि चैतेषां नीवारस्तु प्रशस्यते ॥ ३५ ॥

एतेषामप्यलाभे तु सर्वसस्यानि योजयेत् ।
कोद्रवं कुरुविन्दं च वर्जयित्वा विचक्षणः ॥ ३६ ॥

फलभेदं प्रवक्ष्यामि निवेदनविधौ तथा ।
कानिचित्त्वन्तरस्थीनि बहिरस्थीनि कानिचित् ॥ ३७ ॥

नालिकेरं कपित्थं च बिल्वं च बहिरस्थिकम् ।
अन्तरस्थीनि सर्वाणि शेषाण्येव न संशयः ॥ ३८ ॥

क्षालयेदन्तरस्थीनि बहिरस्थीनि चैव हि ।
मधुरं सात्त्विकं ज्ञेयं तथा चाम्लं तु राजसम् ॥ ३९ ॥

तामसं तु कषायाढ्यमतिपक्वं तथैव च ।
उत्तमं सात्त्विके प्रोक्तं मध्यमं राजसे फलम् ॥ ४० ॥

अधमं तामसे चैव फलभेद इति स्मृतः ।
मिश्रामिश्रं तु वक्ष्यामि हविषां संकरे यथा ॥ ४१ ॥

अपूपसक्तु मुद्गैश्च तिलैश्चापि विमिश्रितम् ।
तन्मिश्रमिति संप्रोक्तं तन्निवेद्यं विचक्षणैः ॥ ४२ ॥

[1] B: The portion from here up to the end of verse 46 of this chapter is found after the 3rd verse of the 6th chapter.

अमिश्रं च निवेद्यं स्यात् तदिदं कथयामि वः ।
पायसं कृसरं गौडं हरिद्रान्नं चतुर्विधम् ॥ ४३ ॥

विचित्रमिति संप्रोक्तं मुद्गान्नं च तथापरम् ।
निवेदयेदपूपं वा षाडबादिकमेव[1] वा ॥ ४४ ॥

अपूपेषु च सर्वेषु ऊष्मपक्कं विवर्जयेत् ।
सम्यक् सिद्धं तु मुद्गं वा केवलं तु निवेदयेत् ॥ ४५ ॥

अग्निकार्ये नियोज्यानि सर्वाण्येनानि वै क्रमात् ।
निवेदने च होमे च शुद्धान्नं तु विधीयते ॥ ४६ ॥

दधिसक्तुसमायुक्तं [2]लाजधानासमायुतम् ।
बहिरावरणे चैव बलिकर्मणि योजयेत् ॥ ४७ ॥

आचार्यभक्षणे चैव सर्वाण्येतानि योजयेत् ।
निवेदितं च यद्द्रव्यं पुष्पं फलमथापि वा ॥ ४८ ॥

तन्निर्माल्यमिति प्रोक्तं तत् प्रयत्नेन वर्जयेत् ।
निवेद्यशेषं यत् सर्वं तद्भक्ष्यं दीक्षितैः सदा[3] ॥ ४९ ॥

अदीक्षिताय नो देयं हविःशेषं कथंचन ।
दद्याद्वा यदि संमोहात् क्रिया भवति निष्फला ॥ ५० ॥

तस्मात् सर्वप्रयत्नेन हविःशेषं न दापयेत् ।
सच्छिष्याय च वा देयं यतये वा महात्मने ॥ ५१ ॥

[1] सोदुम्बिकमथापि B [2] लाजधान्य B [3] सह B

हविःसंख्यां प्रवक्ष्यामि यथाशास्त्रविनिश्चयम् ।
शुद्धान्नं च विचित्रं च मिश्रं चामिश्रमेव च ॥ ५२ ॥

चतुर्विधं तु पक्वान्नमपक्वं फलमुच्यते ।
पक्वेषु मूलमेकं तु षड्विधं हविरुच्यते ॥ ५३ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे
हविर्निवेदनाध्यायः पञ्चमः

# शिवरात्रे षष्ठोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि पुष्पाध्यायं यथाविधि ।
स्वारामोत्पादितं ग्राह्यमारामात् क्रीतमेव वा ॥ १ ॥

ग्राह्यं प्रतिग्रहाल्लब्धं तथा चैवाप्ययाचितम् ।
सर्वं तु जलजं ग्राह्यं यत्तु स्यान्निष्परिग्रहम् ॥ २ ॥

परारामजमग्राह्यमन्त्यजस्पृष्टमेव च ।
तथा रजस्वलास्पृष्टं निष्कलास्पृष्टमेव च ॥ ३ ॥

तथैव पापिना स्पृष्टं हस्तानीतं तथैव च ।
वस्त्रानीतं तथाग्राह्यं पादस्पृष्टं तथैव च ॥ ४ ॥

आघ्रातं च तथा मृद्धं भिन्नपत्रं तथैव च ।
मुकुलं क्रिमिदुष्टं च [1]लतासूत्रयुतं तथा ॥ ५ ॥

तथा पर्युषितं चापि वर्णान्तरगतं तथा ।
स्थितं तु पक्षिणीं रात्रिं जलजं ग्राह्यमेव तु ॥ ६ ॥

अतः परं तु न ग्राह्यं जीर्णकेसरमेव च ।
ग्राह्याग्राह्यमिति प्रोक्तं वर्ज्यावर्ज्यं ब्रवीमि व. ॥ ७ ॥

[1] लता B

उन्मत्तं पाटलं चार्कममोकं चाप्यगस्तिकम् ।
कोविदारं [1]तथाङ्कोलं तथैव गिरिकर्णिकाम् ॥ ८ ॥

जपां च लाङ्गलीं चापि कुटजं च कुरण्डकम् ।
आकुलं क्षीरिकां चापि किङ्किणीं बीजपूरकम् ॥ ९ ॥

हासकं चापि वैकुण्ठं रक्तं कुमुदमेव च ।
तपस्विनीं सुभद्रां च व्याघातं राजवृक्षकम् ॥ १० ॥

मृतपं च महाकुण्डं सालकं च महाकलिम् ।
प्रियालं पालिकापुष्पं कुन्दवीरतरुं तथा ॥ ११ ॥

किंशुकं [2]पारिभद्रं च अर्जुनं ककुभं तथा ।
कदम्बं वज्रवृक्षं च नीपं च घनमेव च ॥ १२ ॥

सिलिन्ध्रं गोक्षुरं चैव निर्गुण्डीं चैव वर्जयेत् ।
वर्ज्यान्येतानि सर्वाणि पुष्पयागस्य मण्डपे ॥ १३ ॥

तत्रापि वर्जयेदर्कमुन्मत्तं च विशेषतः ।
वक्ष्याम्यवर्जनीयानि पुष्पाण्याराधनाविधौ ॥ १४ ॥

कमलं करवीरं च तुलसी कुमुदं तथा ।
उत्पलं मिश्रकं चैव सौगन्धिकमथापि च ॥ १५ ॥

रक्तोत्पलं च कल्हारं शाबजं श्वेतलोहितम् ।
माधवी कर्णिकारं च किङ्किरातं तथैव च ॥ १६ ॥

[1] तथा कोलं B    [2] वारिभद्रं B

केतकी नागदन्ती च मल्लिका नवमालिका ।
कुर्वकं नवमाला च मालती राजमालती ॥ १७ ॥

नन्द्यावर्तं च नन्दीकं तथैव नवमल्लिका ।
आर्जकं च वणिज्यं च गुण्डी दमनकं तथा ॥ १८ ॥

असनं च शिरीषं च पलाशं खदिरं तथा ।
जाती च नवजाती च सिन्दुवारस्तथैव च ॥ १९ ॥

कन्दली स्थलपद्म च सारी शेफालिका तथा ।
वकुलं करवीरं च कुङ्कुमं चन्दनं तथा ॥ २० ॥

नमेरुर्बकपुष्पं च पुंनागं नागमेव च ।
सुरभिः सुरवीरं च कुरुविन्दं हसन्तिका ॥ २१ ॥

चणकं शिबिकं चैव तथैव कलिपद्मकम् ।
सदाभद्रा च ह्रीबेरं सहदेवी च नीलिका ॥ २२ ॥

सुवर्चला करञ्जी च देवदारुर्बृहन्नला ।
काशं चैव कुशं चैव तिमिस्तिमिस एव च ॥ २३ ॥

लवङ्गं भूरिकं चैव श्यामाकं च शमी तथा ।
वासुभद्रा च कदली कमली क्रमुकं तथा ॥ २४ ॥

फलिनी गोलिका चैव सिंहिका [1]सिंहकेसरी ।
तमालमालिका चैव शल्मली बाणमेव च ॥ २५ ॥

[1] सिंहि B

योग्यान्येतानि पुष्पाणि नित्यमेवार्चनाविधौ ।
कालयोगं प्रवक्ष्यामि यदा येनार्च्यते हरिः ॥ २६ ॥

[1]नन्दिकेनार्चयेत् प्रातर्मध्याह्ने केसरैरपि ।
सायाह्ने जातिपुष्पैश्च प्रदोषे वकुलैरपि ॥ २७ ॥

मध्यरात्रे महाविष्णुं मल्लिकाभिरथार्चयेत् ।
प्रत्यूषे नन्दिकावर्तैस्तुलसीभिस्तु सर्वदा ॥ २८ ॥

न रात्रौ करवीरैश्च न चाह्नि कुमुदैरपि ।
न मालती स्यात् पूर्वाह्णे नापराह्णे तु माधवी ॥ २९ ॥

न प्रदोषे तु पद्मानि नोषस्युत्पलसंज्ञितम् ।
न किङ्किरातं मध्याह्ने प्रातरेव च नान्यदा ॥ ३० ॥

न मध्यरात्रे सुरभिः प्रदोषे त्वेव वार्चयेत् ।
शेषैः सर्वैस्तथा स्रग्भिः[2] पूजयेद्विधिपूर्वकम् ॥ ३१ ॥

अङ्कुराणामथो वक्ष्ये क्रमयोगं विधानतः ।
कुशदर्भाङ्कुराः श्रेष्ठास्तथा दर्भाङ्कुरा अपि ॥ ३२ ॥

इन्द्रवल्ली सदाभद्रा सर्षपाश्च शमी तथा ।
चणकश्चेति चात्राष्टौ कथितास्त्वङ्कुरोत्तमाः ॥ ३३ ॥

बीजाङ्कुरमथो वक्ष्ये यैस्तु बीजैः प्रपूज्यते ।
प्रियङ्गुयवनिष्पावशालिसर्षपषाष्टिकाः ॥ ३४ ॥

[1] नन्दिकानर्चयेत् B

[2] त्वग्भिः B

[1]कुलुत्थशिम्बमाषाश्च . . . . . . . ते दश ।
दशैतानि तु बीजानि मुद्गमेकादशं भवेत् ॥ ३५ ॥

पालिकायां प्रयोक्तव्यं मङ्गलाङ्कुररोपणम् ।
कालयोगा न चाप्येषामङ्कुराणां कथंचन ॥ ३६ ॥

तत्र तत्र मुनिश्रेष्ठाः शृणुध्वं मुनिपुंगवाः ।
वायव्याग्नेयमाहेन्द्रवारुणाख्यं तथैव च ॥ ३७ ॥

श्यामानि सर्वपुष्पाणि वायव्यानि न संशयः ।
आग्नेयान्येव रक्तानि वर्जयित्वा तु पङ्कजम् ॥ ३८ ॥

माहेन्द्राणि च पीतानि वर्जयित्वा तु शल्मलीम् ।
वारुणानि च शुक्लानि सर्वाण्येव न संशयः ॥ ३९ ॥

मिश्रकाणि च सर्वाणि वैष्णवानि न संशयः ।
अङ्कुराणि च सर्वाणि तथैव जलजानि च ॥ ४० ॥

आग्नेर्या शल्मली प्रोक्ता वारुणं पङ्कजं भवेत् ।
फलं शतगुणं ज्ञेयं वायव्यादुत्तरोत्तरम् ॥ ४१ ॥

कालमत्र प्रवक्ष्यामि यदा विष्णुरिहार्च्यते ।
दशनाडीपरिच्छिन्नः काल इत्यभिधीयते ॥ ४२ ॥

पूर्वाह्णश्चापि मध्याह्नश्चापराह्णस्तथैव च ।
प्रदोषो [2]मध्यरात्रश्च प्रत्यूषश्चेति षड्विधः ॥ ४३ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे पुष्पयागविधिः षष्ठोऽध्यायः

[1] कुलस्थ B

[2] मध्यरात्रं च E

# शिवरात्रे सप्तमोऽध्यायः

सनत्कुमारः—

पत्रच्छेदविधानं तु वक्ष्ये चार्चनिकं स्वयम् ।
सूचीमुखं व्रीहिमुखं [1]नालिका च कुमारकम् ॥ १ ॥

एकपत्रं च नाराचं द्विशिखं त्रिशिखं तथा ।
द्विपत्रं छेदनी चैव वृत्तवाहि तथैव च ॥ २ ॥

क्षुरं चार्धक्षुरं चैव शलाका च चतुर्दश ।
सूचीमुखं बिन्दुपाते वेधे व्रीहिमुखं तथा ॥ ३ ॥

नालिका च तथापीडे भेदने तु कुमारकम् ।
छेदने चैकपत्रं च नाराचं चापि वर्तते ॥ ४ ॥

प्रथमे द्विशिखं चैव त्रिशिखं विषमे तथा ।
द्विपत्रं रूपकरणे छेदनी भिन्नपातने ॥ ५ ॥

[2]वृत्तवाहि समस्तस्य छेदभेदविपाटने ।
क्षुरं तु पाटने योज्यं पुष्पादिषु न संशयः ॥ ६ ॥

अर्धक्षुरं कृत्तिकाख्यं तेन सर्वं तु पूर्यते ।
मानं शलाकया कुर्याच्छस्त्रव्यापार एव हि ॥ ७ ॥

[1] नालिकं A B

[2] वृत्तं वापि B.

मुख्यं तु कदलीपत्रं [1]वालुकं तदनन्तरम् ।
गङ्गापत्रं विशिष्टं स्याद्रजनीपत्रमेव च ॥ ८ ॥

पद्मं च कुमुदं चैव उत्पलं च सुगन्धिकम् ।
कल्हारं किंशुकं चैव पत्राण्यर्चनिकाविधौ ॥ ९ ॥

पल्लवं पेनकं चैव तथा चैव प्रकीर्णकम् ।
नन्दी च [2]रज्जुबद्धं च रूपकं चेति षड्विधम् ॥ १० ॥

[3]षष्टित्रिंशतिका भेदा एतेषां च पृथक् पृथक् ।
एवं षष्टिद्विसाहस्रमस्मिंस्तन्त्रे प्रकीर्तितम् ॥ ११ ॥

एतन्नामानि सर्वेषां प्रयोगाश्च विशेषतः ।
नारदार्चनिकायां तु दर्शितानि यथाविधि ॥ १२ ॥

पत्रच्छेदोऽपरः प्रोक्तः चतुःषष्टिप्रभेदतः ।
पद्मोद्भवे पुराणे तु गरुडस्यार्चनाविधौ ॥ १३ ॥

तेषां च षष्टित्रिंशतं प्रभेदाश्च पृथक् पृथक् ।
गरुडार्चनिकायां तु सविस्तरमुदाहृतम् ॥ १४ ॥

ते त्रिविंशतिसाहस्रं चत्वारिंशत् प्रकीर्तिताः ।
अन्याश्चार्चनिकाः केचिदसंख्येयाः प्रचक्षते ॥ १५ ॥

[4]पत्रस्यात्र क्रमं वक्ष्ये येनार्चार्चनिका भवेत् ।
प्रदीपस्य शिखायां तु सम्यक् पत्रं प्रतापयेत ॥ १६ ॥

[1] वालुका E
[2] रज्जुबन्धं B
[3] षष्टिंत्रिंशतिका B
[4] पत्रपात्र A

अतितप्तं न कर्तव्यं तापहीनं तथैव च ।
क्लिद्यते चातितापेन कर्कशः स्यादतापतः[1] ॥ १७ ॥

तस्मात् तन्मध्यमं तापं कुर्याच्चैव शनैः शनैः ।
मषीं यथैव गृह्णाति नीलाञ्जनचयप्रभाम् ॥ १८ ॥

तथा संतापयेत् पत्रं सततं निस्तलेन तु ।
उत्क्रमं वर्जयेत् तत्र धारापातं तथैव च ॥ १९ ॥

अङ्गुलीभ्यां तु विमृजेदेवं तन्न सर्वतः क्रमात् ।
समत्वं विषमत्वं च परीक्षेत प्रयत्नतः ॥ २० ॥

द्विगुणीकृतपत्रं तु पुनश्च द्विगुणीकृतम् ।
पुनश्च द्विगुणीकृत्य च्छेदनं पुनरारभेत् ॥ २१ ॥

शलाकां यामितां कृत्वा तत्र बिन्दुं निपातयेत् ।
शाल्मलीफलके श्लक्ष्णे समाधाय विचक्षणः ॥ २२ ॥

[2]समा वा विषमा वापि बिन्दवः स्युर्यथाविधि ।
रेखास्तत्र प्रयोक्तव्याः पत्रच्छेदानुरूपतः ॥ २३ ॥

भेदयेदनुरूपं तु बुद्बुदानि च कारयेत् ।
तथा परतलं वापि बुद्बुदं चापि भेदयेत् ॥ २४ ॥

वेधयेन्मार्गदेशेषु लिखेदृजुषु चैव हि ।
उत्थापयेच्च मार्गांस्तु विच्छिन्नं तु विवर्जयेत् ॥ २५ ॥

1 अपक्वतः A

2 समान् वा विषमान् वापि B

विस्तरेत् [1]तदविच्छिन्नं प्रतिपत्रस्य चोपरि ।
चतुर्वर्णैस्ततः पुष्पैः पत्रैरपि विचित्रयेत् ॥ २६ ॥

वितानं [2]तत्र विन्यस्य तत् पुनः परिवर्तयेत् ।
प्रतिपत्रं ततः पश्चादपनीय शनैः शनैः ॥ २७ ॥

वर्णावलोकनं कृत्वा तत्र न्यूनं प्रपूरयेत् ।
अद्भिः संप्रोक्ष्य च शनैश्छेदशेषं निकृत्य च ॥ २८ ॥

बुद्बुदं पूरयित्वा तु तथा परतलानि च ।
कुर्यादर्चानिकापत्रं क्रियायोग्यं विचक्षणः ॥ २९ ॥

बन्धने सर्वपुष्पाणां भक्तिभेदान् ब्रवीमि वः ।
ग्रन्थने कदलीत्वक् स्यात् सूत्रं वा तदलाभतः ॥ ३० ॥

उपघ्नपत्रं कुसुमं कदलीत्वगथापि वा ।
नालिकेरस्य पत्रं वा केतकीपत्रमेव वा ॥ ३१ ॥

तालीपत्रं तु वा प्रोक्तं तालपत्रमथापि वा ।
यथायोगं तु संगृह्य ग्रन्थयेत् कुसुमान्यपि ॥ ३२ ॥

वर्णानुक्रमशः कुर्यात् स्वस्तिकाद्या विचक्षणः ।
एवं च[3] बन्धनं प्रोक्तं श्लेषणं कथयामि वः ॥ ३३ ॥

फलके तु मृदं न्यस्य बिन्दुरेखाश्च योजयेत् ।
तत्र पुष्पाणि पत्राणि श्लेषयेच्च विचक्षणः ॥ ३४ ॥

[1] तदसिच्छिन्नं B    [2] पत्र A B    [3] न A B

यथावर्णानुपूर्व्येण भक्तिपुष्पाणि योजयेत् ।
पत्रच्छेदनकालश्च पक्षिणी रात्रिरेव च ॥ ३५ ॥

श्लेषणे स्यादहोरात्रं बन्धने दश नाडिकाः ।
एतावताप्यनिर्माल्यं निर्माल्यं स्यादतः परम् ॥ ३६ ॥

फलकेषु नियुज्यैवमर्चनापीठपार्श्वयोः ।
परितो विन्यसेत् तिर्यगुत्सवे चोत्सवे बुधः ॥ ३७ ॥

भूमौ वा भक्तिविन्यासं सुमनोभिस्तु कारयेत् ।
पल्लवीं पूर्वतः कुर्यात फेनकं दक्षिणे तथा ॥ ३८ ॥

प्रकीर्णं पश्चिमे भागे उत्तरे नन्दिकं तथा ।
रूपकं नन्दिकं चैव पार्श्वयोरुभयोरपि ॥ ३९ ॥

उत्सवे विष्णुपञ्चम्यां सोमसूर्यग्रहे तथा ।
प्रयत्नेन विधातव्यः पत्रच्छेदो विशेषतः ॥ ४० ॥

प्रतिभक्तिक्रियं चैव कर्तुः क्रतुफलं भवेत् ।
तस्मात् सर्वप्रयत्नेन पत्रच्छेदं तु कारयेत् ॥ ४१ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे
पत्रच्छेदः सप्तमोऽध्यायः

# शिवरात्रे अष्टमोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि स्नपनस्य विधिं परम् ।
प्रासादस्याग्रतः कुर्यान्मण्डपं च यथाविधि ॥ १ ॥

दशहस्तपरीमाणं विस्तारं तु प्रचक्षते ।
तद्वध्यर्धायतं चैव चतुर्द्वारसमन्वितम् ॥ २ ॥

चतुस्तोरणसंयुक्तं प्रागायतमिति क्रमात् ।
[1]पश्चिमायां तृतीये च भागे तु स्नानवेदिका ॥ ३ ॥

मध्यमं सूत्रमाश्रित्य चतुर्हस्तं समन्ततः ।
उत्तरे वेदिकायास्तु स्नानश्वभ्रं तु कारयेत् ॥ ४ ॥

धाराकुल्या च कर्तव्या आश्वभ्रं वेदिकोपरि ।
भवेत् प्रादेशविस्तारमष्टाङ्गुलमथापि वा ॥ ५ ॥

षडङ्गुलं वा कुर्वीत चतुरङ्गुलमेव वा ।
पीठिकावलयं कुर्यात् पादपीठस्य बाह्यतः[2] ॥ ६ ॥

वितस्तिमात्रमभितो वृत्तं वा चतुरश्रकम् ।
चतुरङ्गुलमुत्सेधस्तावद्विस्तारसंयुतम् ॥ ७ ॥

[1] पश्चिमस्यां A B E

[2] बहितः A B

कुल्या तदनुवृत्ता स्यादुदरश्चअगोचरा ।
शेषे तु दशहस्ते तु कलशस्थानमुच्यते ॥ ८ ॥

दशहस्तपरीमाणं सूत्रमानप्रमाणतः ।
मध्ये तु कलशस्थानं चतुरश्रं तु कारयेत् ॥ ९ ॥

भूमिभाग इति प्रोक्तः कलशान् कथयामि वः ।
सौवर्णा राजता वापि ताम्रा वा मृन्मयास्तथा ॥ १० ॥

कलशाः क्रमशः प्रोक्ता यथावित्तानुसारतः ।
[1]अभिन्नासुषिराः श्लक्ष्णाः सर्वे चाढकपूरकाः ॥ ११ ॥

कलशा लोहजाः प्रोक्ता मृन्मयान् कथयामि वः ।
पक्वबिम्बफलाकाराः कालमण्डलवर्जिताः ॥ १२ ॥

अवक्राः स्वनवन्तश्च भेदच्छिद्रविवर्जिताः ।
सुस्निग्धाश्च सुतप्ताश्च अवर्णान्तरसंयुताः ॥ १३ ॥

कलशा मृन्मयाः प्रोक्ताः पाषाणस्फोटवर्जिताः ।
एते तु कलशाः प्रोक्ता [2]रत्नसंग्रह उच्यते ॥ १४ ॥

पद्मरागं तु वैडूर्यमिन्द्रनीलं च गारुडम् ।
[3]पुष्पकं ब्रह्मरागं च वज्रं मौक्तिकमेव च ॥ १५ ॥

सूर्यकान्तेन्दुकान्तौ च वज्रकान्तं तथैव च ।
प्रवालं स्फटिकं चैव सर्वलोहानि चैव हि ॥ १६ ॥

[1] अभिन्नाः सुषिराः A B
[2] रत्नं संगृह्य A; रत्नसंग्राह्य E
[3] पुष्यगं B E

ग्राह्याणि सर्ववस्तूनि बीजानि कथयामि वः ।
व्रीहिप्रियङ्गुनिष्पावनीवारयववैणवाः ॥ १७ ॥

गोधूमतिलमुद्गानि गृह्णीयाच्छ्यामकानि च ।
बीजसंग्रह एवोक्तो [1]वितानं चोच्यतेऽधुना ॥ १८ ॥

विचित्रैर्विविधैर्वस्त्रैः क्षौमैः कार्पासिकैस्तथा ।
महाराजनकौशेयैर्मेचकैः पीतकैरपि ॥ १९ ॥

विचित्रैर्विविधैर्वर्णैर्वितानं[2] कारयेद् बुधः ।
यावन्मण्डपविस्तारं वितानं तावदुच्यते ॥ २० ॥

नवानि चैव वस्त्राणि तानि कार्पासिकानि वै ।
स्तम्भानां वेष्टने चैव कलशानां च वेष्टने ॥ २१ ॥

वेदिकास्तरणे चैव तथा तोरणवेष्टने ।
आचार्यपरिधाने च तथा चोष्णीषबन्धने ॥ २२ ॥

उदकोत्पवने चैव ग्राह्याणि तु विशेषतः ।
इति प्रोक्तो वितानादिराचार्यक्रम उच्यते ॥ २३ ॥

पद्मोद्भवे पुराणे तु प्रोक्तमाचार्यलक्षणम् ।
लक्षणैस्तैः समायुक्त एको द्वौ बहवोऽपि वा ॥ २४ ॥

आचार्यास्त्वत्र संप्रोक्ताः सर्वथा कर्तुरिच्छया ।
आलेपमत्र वक्ष्यामि यथालिप्येत मण्डपः ॥ २५ ॥

[1] विधानं A B E

[2] विधानं A B C

सशलाकैस्ततो दर्भैः सहदेवीविमिश्रितैः ।
मार्जनं सर्वतः कुर्यात् प्राङ्मुखो वाप्युदङ्मुखः ॥ २६ ॥

वस्त्रपूतेन तोयेन गोमयालेपनं भवेत् ।
इन्द्रादीशानपर्यन्तमालेपं तु समापयेत् ॥ २७ ॥

पञ्चगव्येन संप्रोक्ष्य द्वादशाक्षरविद्यया ।
मण्डपेशानकोणे तु स्थापयेज्जलभाजनम् ॥ २८ ॥

ततः कलशभूमिं तु शालिपिष्टैर्विचित्रयेत् ।
पश्चिमे कलशक्षेत्रात् सादयेत् कलशांस्ततः ॥ २९ ॥

प्रागग्रानुदगग्रान् वा दर्भानास्तीर्य भूतले ।
अधोमुखांस्तु कलशान् विन्यसेदोमिति ब्रुवन् ॥ ३० ॥

[1]यावदीशानपर्यन्तं दर्भाणामुपरि क्रमात् ।
पङ्क्तीकृत्य यथायोगं यथाकलशसंख्यया ॥ ३१ ॥

प्रतिपङ्क्ति ततो दद्यान प्रागग्रान् परमेष्ठिना ।
दर्भांस्तु [2]संस्तरेत्तत्र दर्भमुद्रां च दर्शयेत् ॥ ३२ ॥

प्रोक्षयेद्गन्धतोयेन प्राङ्मुखः पुरुषात्मना ।
ततो विश्वात्मबीजेन विकिरेदक्षतानि च ॥ ३३ ॥

ततो निवृत्तिबीजेन घटानुत्तानयेत् पृथक् ।
ततः सर्वात्मबीजेन कलशानुद्धरेत् पृथक् ॥ ३४ ॥

[1] क्रमात् B

[2] विस्तरेत् B

एकाशीतिपदे यत्तदधमं स्नपनं स्मृतम् ।
तत्र सप्तदश प्रोक्ता द्रव्ययोगक्रमेण हि ॥ ३५ ॥

मध्यमे नवके मध्ये घृतं तत्र तु विन्यसेत् ।
तत्र चैन्द्रपदे कुर्यात् क्रमेणोष्णोदकं पुनः ॥ ३६ ॥

रत्नोदकं तथाग्नेय्यां याम्ये चैव फलोदकम् ।
नैर्ऋते लोहतोयं तु मार्जनं वारुणे तथा ॥ ३७ ॥

वायव्ये गन्धतोयं तु सौम्ये चैवाक्षतोदकम् ।
यवोदकमथैशाने यथावद्विनिवेशयेत् ॥ ३८ ॥

पूर्वे तु नवके मध्ये पाद्यं तु विनिवेशयेत् ।
याम्ये तु नवके मध्ये विन्यसेदर्घ्यमेव च ॥ ३९ ॥

वारुणे नवके मध्ये न्यसेदाचमनीयकम् ।
सौम्ये तु नवके मध्ये पञ्चगव्यं तु विन्यसेत् ॥ ४० ॥

आग्नेये नवके मध्ये दधि [1]तत्र तु विन्यसेत् ।
नैर्ऋते नवके मध्ये क्षीरं [1]तत्र तु विन्यसेत् ॥ ४१ ॥

वायव्ये नवके मध्ये मधु तत्र च विन्यसेत् ।
ऐशाने नवके मध्ये कषायं विनिवेशयेत् ॥ ४२ ॥

शेषास्तु कलशाः सर्वे शुद्धोदकसमन्विताः ।
अत्र सप्तदश प्रोक्ताः प्रधानकलशास्तु ये ॥ ४३ ॥

[1] तक्रं B

तान् सर्वान् विष्णुगायत्र्या स्थापयेच्च पृथक् पृथक् ।
शेषानन्यांश्चतुःषष्टिं द्वादशाक्षरविद्यया ॥ ४४ ॥

स्थापयेत् कलशानेवं प्राङ्मुखो वाप्युदङ्मुखः ।
सेचयेद् घृतमन्त्रेण घृतं पूर्वं तु साधकः ॥ ४५ ॥

तथोष्णोदकमन्त्रेण क्षिपेदुष्णोदकं बुधः ।
रत्नोदकस्य मन्त्रेण ततो रत्नोदकं न्यसेत् ॥ ४६ ॥

सेचयेत् फलमन्त्रेण कलशे तु फलोदकम् ।
लोहमन्त्रेण लोहाम्भः स्वमन्त्रेण तु मार्जनम् ॥ ४७ ॥

गन्धोदकस्य मन्त्रेण स्वमन्त्रेणाक्षतोदकम् ।
यवोदकं स्वमन्त्रेण तथा कुर्याद्विचक्षणः ॥ ४८ ॥

पाद्यं तु पाद्यमन्त्रेण स्वमन्त्रेणार्घ्यमेव तु ।
तथाचमनमन्त्रेण न्यसेदाचमनीयकम् ॥ ४९ ॥

पञ्चगव्यस्य मन्त्रेण पञ्चगव्यं तु विन्यसेत् ।
तथैव दधिमन्त्रेग कलशे दधि विन्यसेत् ॥ ५० ॥

क्षीरं च क्षीरमन्त्रेण मधु चैव स्वविद्यया ।
स्वमन्त्रेण कषायाम्भः शुद्धाम्भश्च स्वविद्यया ॥ ५१ ॥

चक्रिकाः स्थापयेत् पश्चाच्चक्रमन्त्रेण साधकः ।
वासोऽभिवेष्टयेत् पश्चात् कलशान् मूलविद्यया ॥ ५२ ॥

ओं विष्णवे नमः—घृतमन्त्रः । ओं सहस्रकिरणाय नमः—उष्णोदकमन्त्रः । ओं ब्रह्मणे नमः—रत्नमन्त्रः । ओं

कुबेराय नमः—फलमन्त्रः। ओं वसुभ्यो नमः—लोहमन्त्रः। ओं विश्वेभ्यो देवेभ्यो नमः—मार्जनमन्त्रः। ओं गन्धर्वेभ्यो नमः—गन्धमन्त्रः। ओं निर्ऋत्यै नमः—अक्षतमन्त्रः। ओं आर्यायै नमः—यवोदकमन्त्रः। ओं पितृभ्यो नमः—पाद्यमन्त्रः। ओं श्रियै नमः—अर्घ्य-मन्त्रः। ओं सरस्वत्यै नमः—आचमनमन्त्रः। ओं प्रजापतये नमः—पञ्चगव्यमन्त्रः। ओं शुक्राय नमः—दधिमन्त्रः। ओं सोमाय नमः—क्षीरमन्त्रः। ओं इन्द्राय नमः—मधुमन्त्रः। ओं यमाय नमः—कषायमन्त्रः।

कलशानां यथान्यासं [1]तथोद्धरणमिष्यते।
यवोदकान्तं पाद्यादिस्थानमत्र विधीयते॥ ५३॥

पाद्यं तु प्रथमं दद्याद् द्वितीयं चार्घ्यमेव तु।
ततश्चाचमनीयं च पञ्चगव्यं चतुर्थकम्॥ ५४॥

घृतं च पञ्चमं दद्यात् दधि षष्ठं तथैव च।
सप्तमं तु ततः क्षीरं मधु चैव तथाष्टमम्॥ ५५॥

कषायं नवमं ज्ञेयमुष्णाम्भो दशमं स्मृतम्।
एकादशं फलाम्भस्तु द्वादशं मार्जनोदकम्॥ ५६॥

त्रयोदशं चाक्षताम्भो रत्नतोयं चतुर्दशम्।
लोहं पञ्चदशं ज्ञेयं षोडशं गन्धवारि च॥ ५७॥

[1] न चोद्धारणम् B

यवोदकं सप्तदशं [1]तत उद्धारणक्रमः ।
स्वे स्वे च नवके चाष्टौ सह तेन समुद्धरेत् ॥ ५८ ॥

मध्यमं नवकं मुक्त्वा ऐन्द्रादिक्रमयोगतः ।
मध्यमान् कलशान् सर्वान् विष्णुगायत्रियोद्धरेत् ॥ ५९ ॥

शेषानष्टाक्षरेणैव वासस्तेनैव मोचयेत् ।
ततः पुरुषसूक्तेन दद्यात् पाद्यादिकं क्रमात् ॥ ६० ॥

दद्यादृचाद्यया पाद्यं तच्छुद्धाम्भस्तयैव च ।
अर्घ्यं द्वितीयया दद्यात् तया तच्छुद्धवारि च ॥ ६१ ॥

तृतीयया ततो दद्यात् क्रमेणाचमनीयकम् ।
पञ्चगव्यं चतुर्थ्या तु पञ्चम्या घृतमेव च ॥ ६२ ॥

षष्ठ्या तु दधि वै दद्यात् [2]सप्तम्या क्षीरमेव च ।
अष्टम्या मधु वै दद्यात् नवम्या तु कषायकम् ॥ ६३ ॥

उष्णोदकं दशम्या तु एकादश्या फलोदकम् ।
द्वादश्या मार्जनं चैव त्रयोदश्याक्षतोदकम् ॥ ६४ ॥

रत्नतोयं चतुर्दश्या पञ्चदश्या तु लोहकम् ।
षोडश्या गन्धतोयं च तथा दद्याद्यथाक्रमम् ॥ ६५ ॥

यवोदकं ततो दद्यादिदं विष्णुरिति ब्रुवन् ।
अधमोत्तममेतत्तु स्नपनं परिकीर्तितम् ॥ ६६ ॥

[1] एष B

[2] B; Corrupt reading from here up to the end of verse 68 of this chapter.

कोणेषु कलशा ये च द्वात्रिंशच्छुद्धवारयः ।
तैर्विहीनं च यत् स्नानं तत् स्यादधममध्यमम् ॥ ६७ ॥

यच्छुद्धवारिकलशैर्हीनं सर्वैर्यथादिशम् ।
केवलैः सप्तदशभिः कृतं तदधमाधमम् ॥ ६८ ॥

चतुरङ्गं भवेत् पाद्यमष्टाङ्गं चार्घ्यमुच्यते ।
अङ्गत्रयसमायुक्तं विद्यादाचमनीयकम् ॥ ६९ ॥

षडङ्गं मार्जनं ज्ञेयमष्टाङ्गं गन्धमुच्यते ।
कषायं च तथाष्टाङ्गं पञ्चाङ्गं रत्नवारि च ॥ ७० ॥

फलाम्भश्च तथाष्टाङ्गं पञ्चाङ्गं लोहवारि च ।
दूर्वा च विष्णुपर्णी च श्यामाकं पद्ममेव च ॥ ७१ ॥

पाद्याङ्गानीह चत्वारि कथितानि समासतः ।
सिद्धार्थमक्षतं[1] चैव कुशाग्रं तिलमेव च ॥ ७२ ॥

[2]यवो गन्धः फलं पुष्पमर्घ्यमष्टाङ्गमुच्यते ।
लवङ्गजातितक्कोलद्रव्याण्याचमनीयके ॥ ७३ ॥

रजनी सहदेवी च शिरीषं सूर्यवल्लरी ।
सदाभद्रा कुशाग्राणि मार्जनद्रव्यविस्तरः ॥ ७४ ॥

उशीरं कुङ्कुमं चैव मांसी मलयजं तथा ।
मुरा तथा च ह्रीबेरं[3] कुष्ठं चागरुरेव च ॥ ७५ ॥

[1] मकुटं B [2] यवं B C [3] हि श्रीबेरं B

अष्टाङ्गान्यत्र चैतानि गन्धस्य तु विशेषतः ।
शमीपलाशखदिरबिल्वाश्वत्थविकङ्कताः ॥ ७६ ॥

उदुम्बरश्च न्यग्रोधः कषायाङ्गानि चैव हि ।
मणिमुक्ताप्रवालानि वज्रं वैदूर्यमेव च ॥ ७७ ॥

रत्नोदकस्य चाङ्गानि पञ्चैतानि समासतः ।
द्रव्याणामप्यलाभे तु पाद्ये दूर्वा प्रशस्यते ॥ ७८ ॥

शेषाणामप्यलाभे तु अर्घ्ये सिद्धार्थकं परम् ।
शेषालाभे तु तक्कोलं शस्तमाचमनीयके ॥ ७९ ॥

मार्जने सहदेवी तु शेषालाभे प्रशस्यते ।
तथा प्रशस्यतेऽश्वत्थः शेषालाभे कषायके ॥ ८० ॥

रत्नानामप्यलाभे तु वज्रमेकं प्रशस्यते ।
फलानामप्यलाभे तु कदलीफलमुत्तमम् ॥ ८१ ॥

लोहानामप्यलाभे तु सुवर्णं शस्यते परम् ।
पत्राणामप्यलाभे तु पालाशं पर्णमुत्तमम् ॥ ८२ ॥

मध्यमं स्नपनं वक्ष्ये [1]यथावित्तानुसारतः ।
चतुर्भिः कलशैर्हीनं कलशानां शतद्वयम् ॥ ८३ ॥

क्रमादेकोनपञ्चाशत् प्रतिदिक्षु चतुर्दिशम् ।
ऐन्द्रे तु ब्रह्मकलशं ब्रह्मबीजेन विन्यसेत् ॥ ८४ ॥

1. यथा कर्ता B

तेनैव दक्षिणे चैव पश्चिमे चोत्तरे न्यसेत् ।
चत्वारिंशत् प्रतिदिशं शेषाश्चाष्टोत्तरास्तु ये ॥ ८५ ॥

तान् सर्वान् मूलमन्त्रेण विन्यसेत् कलशान् पृथक् ।
गुडोदकं चेक्षुरसं नालिकेररसं तथा ॥ ८६ ॥

ततः शान्त्युदकं चैव चतुर्दिक्षु यथाक्रमम् ।
चतुर्षु ब्रह्मकुम्भेषु ब्रह्मबीजेन सेचयेत् ॥ ८७ ॥

ततः शेषेषु शुद्धाम्भः प्रणवेनैव सेचयेत् ।
यवोदकान्तं पाद्यादि [1]स्थापयित्वा च पूर्ववत् ॥ ८८ ॥

पश्चाद् गुडोदकाद्यैस्तु [2]स्थापयेत् तन्त्रवित्तमः ।
उद्धरेद् ब्रह्मबीजेन ब्रह्मकुम्भांश्चतुर्दिशम् ॥ ८९ ॥

वासस्तेनैव निर्मोच्य ध्यात्वा विष्णुं समाहितः ।
त्वं विष्णुरिति मन्त्रेण स्नापयेत् क्रमयोगतः ॥ ९० ॥

मूलमन्त्रेण शेषास्तु कलशाः शुद्धवारयः ।
मध्यमोत्तममेतत्तु स्नपनं परिकीर्तितम् ॥ ९१ ॥

अत्र शुद्धोदकैर्हीनं भवेन्मध्यममध्यमम् ।
[3]सर्वैः शुद्धोदकैर्हीनं तद्भवेन्मध्यमाधमम् ॥ ९२ ॥

यवैर्वेणुयवैश्चैव नीवारैर्गौरसर्षपैः ।
तिलैश्च तुलसीपत्रैर्भवेच्छान्त्युदकं युतम् ॥ ९३ ॥

[1] स्नापयित्वा B [2] स्नापयेत् B [3] पूर्वं B E

एतेषामप्यलाभे तु तुलसीपत्रमुत्तमम् ।
स्नपनं चोत्तमं वक्ष्ये यथावित्तानुसारतः ॥ ९४ ॥

पूर्ववत् कोणदेशेषु कलशाः संप्रकीर्तिताः ।
तत्र च ब्रह्मकुम्भांस्तु मूर्तिमन्त्रेण विन्यसेत ॥ ९५ ॥

आग्नेयादिषु कोणेषु वासुदेवादिविद्यया ।
देवीमन्त्रैस्तु शेषांस्तु ततः शान्त्यादिभिर्न्यसेत् ॥ ९६ ॥

तत्र च ब्रह्मकुम्भेषु सेचयेन्मङ्गलोदकम् ।
स्वमन्त्रेण यथा दिक्षु आग्नेयादिक्रमेण तु ॥ ९७ ॥

शुद्धाम्भसा तु शेषांस्तु स्वमन्त्रेणैव पूरयेत् ।
उद्धरेच्च स्वमन्त्रेण तेन वासो विमोचयेत् ॥ ९८ ॥

विष्णोर्नु कमिति प्राज्ञः स्नापयेन्मङ्गलाम्भसा ।
शेषैस्तु मूलमन्त्रेण स्नापयेच्छुद्धवारिभिः ॥ ९९ ॥

इन्द्रवल्ल्यङ्कुरं चैव अश्वत्थाङ्कुरमेव च ।
एकपद्मं च पद्मं च विन्यसेन्मङ्गलोदके ॥ १०० ॥

उत्तमोत्तममेतत्तु स्नपनं परिकीर्तितम् ।
[1]अर्धशुद्धोदकैर्हीनं भवेदुत्तममध्यमम् ॥ १०१ ॥

सर्वैः शुद्धोदकैर्हीनमुत्तमाधममुच्यते ।
समासादत्र संप्रोक्ताः कलशाः पञ्चविंशतिः ॥ १०२ ॥

[1] अत्र B

शुद्धोदकविहीनास्तु स्नपने चोत्तमाधमे।
शुद्धोदकविहीनाश्च कलशास्त्वेकविंशतिः ॥ १०३ ॥

समासादत्र संप्रोक्ताः स्नपने मध्यमाधमे।
ततः सप्तदश प्रोक्ताः स्नपने चाधमाधमे ॥ १०४ ॥

अतो न्यूनं न कर्तव्यं स्नपनं भूतिमिच्छता।
द्रव्याणामपि सर्वेषां कथयाम्यधिदैवतम् ॥ १०५ ॥

घृतस्य दैवतं विष्णुरुष्णोदस्य दिवाकरः।
रत्नानां दैवतं ब्रह्मा कुबेरश्च फलाम्भसः ॥ १०६ ॥

लोहानां वसवो देवा विश्वेदेवास्तु मार्जने।
गन्धर्वा गन्धतोयस्य निर्ऋतिश्चाक्षनस्य तु ॥ १०७ ॥

आर्या यवोदकस्यापि पाद्यस्य पितरस्तथा।
श्रीरर्घ्यस्य भवेद् देवी वाग्देव्याचमनोदके ॥ १०८ ॥

पञ्चगव्यस्य दक्षस्तु दध्नः शुक्रस्तु दैवतम्।
पयसो दैवतं सोमो महेन्द्रो मधुनस्तथा ॥ १०९ ॥

कषायस्य यमो देवो वराहश्च गुडाम्भसः।
तथा चेक्षुरसस्यापि नारसिंहोऽधिदैवतम् ॥ ११० ॥

श्रीधरो नालिकेरस्य हयास्यः शान्तिवारिणः।
मूर्तयो वासुदेवाद्याश्चतस्रो मङ्गलाम्भसः ॥ १११ ॥

शुद्धोदकानां सर्वेषां देव्यः शान्त्यादयः क्रमात्।
कलशानां तु सर्वेषामश्विनौ दैवतं परम् ॥ ११२ ॥

चक्रिकाणां तु सर्वासां दैवतं सप्त मातरः ।
वाससां दैवतं विष्णुः सर्वेषां विष्णुरेव वा ॥ ११३ ॥

मूलमन्त्रेण वा सर्वं कुर्यात् तत्र विचक्षणः ।
अपरे स्नपनं प्राहुरुत्तमाधममध्यमम् ॥ ११४ ॥

कलशानां च विन्यासमशक्तानामनुग्रहात् ।
कलशा ये तु संप्रोक्ताश्चत्वारिंशन्नवोत्तराः ॥ ११५ ॥

तेषां तु क्रमयोगं च प्रवक्ष्यामि यथातथम् ।
द्रव्यसंयोगभेदं च मन्त्रभेदं तथैव च ॥ ११६ ॥

भूमिभागस्य भेदं च शृणुध्वं मुनिपुंगवाः ।
मण्डपे भूमिभागं तु सप्तधा परिकल्पयेत् ॥ ११७ ॥

पदान्येकोनपञ्चाशद्भितस्तिस्तु प्रमाणतः ।
मध्यमं तु पदं ब्राह्मं तस्याष्टौ परितः क्रमात् ॥ ११८ ॥

दैविकानि पदान्याहुः प्रथमावरणे क्रमात् ।
दैविकानां तु परितो मानुषाणि ततः क्रमात् ॥ ११९ ॥

पदानि षोडशोक्तानि द्वितीयावरणे तथा ।
मानुषाणां तु परितः पैतृकानि पदानि च ॥ १२० ॥

तृतीयावरणे चैव चतुर्विंशतिसंख्यया ।
पूर्ववद् भूमिसंस्कारं कृत्वा चोदङ्मुखः स्थितः ॥ १२१ ॥

दर्शयेद् ब्रह्ममुद्रां च ब्रह्मबीजं शनैर्गृणन् ।
जितं त इति मन्त्रेण ब्रह्मकुम्भं तु विन्यसेत् ॥ १२२ ॥

व्यस्तैरष्टाक्षरैः पश्चादैन्द्रादिक्रमयोगतः ।
दैविकान् कलशानष्टौ विन्यसेत् प्राङ्मुखः स्थितः ॥ १२३ ॥

द्वादशाक्षरमन्त्रेण ततः षोडश मानुषान् ।
कलशान् विन्यसेन्मन्त्री प्रणम्य प्रागुदङ्मुखः ॥ १२४ ॥

फट्कारैः पैतृकांश्चापि ततः प्रत्यङ्मुखः स्थितः ।
कृत्वैवं कलशन्यासं तन्मुद्रां दर्शयेत् ततः ॥ १२५ ॥

सेचयेत् प्रथमं ब्राह्मे पाद्यं तु परमेष्ठिना ।
[1]द्रवं भागे तथैन्द्रे तु पुंसा चार्घ्यं तु विन्यसेत् ॥ १२६ ॥

विश्वेन याम्यभागे तु न्यसेदाचमनीयकम् ।
पञ्चगव्यं तु वारुण्यां निवृत्त्या सेचयेद् दिशि ॥ १२७ ॥

सर्वेण तु तथा सौम्ये कलशे सेचयेद् घृतम् ।
आग्नेये मूर्तिमन्त्रेण दध्याद्येन तु सेचयेत् ॥ १२८ ॥

नैर्ऋते तु द्वितीयेन कलशे सेचयेत् पयः ।
वायव्ये तु तृतीयेन कलशे सेचयेन्मधु ॥ १२९ ॥

ऐशाने तु चतुर्थेन क्षिपेदुष्णोदकं बुधः ।
कषायं मानुषे प्राच्यां प्रणवेन विनिक्षिपेत् ॥ १३० ॥

मार्जनं दक्षिणस्यां तु नकारेण विनिक्षिपेत् ।
फलोदकं तु वारुण्यां मो इत्येतेन सेचयेत् ॥ १३१ ॥

[1] देवभागे B C

ना इत्येव तथा सौम्ये निक्षिपेत् परिमार्जनम् ।
रत्नोदकं तथाग्नेये रा इत्येव निवेशयेत् ॥ १३२ ॥

सप्तलोहोदकं पश्चाद्यकारेण तु नैर्ऋते ।
कुशोदकं तु वायव्ये णा इत्येव विनिक्षिपेत् ॥ १३३ ॥

सक्तूदकमथेशाने यकारेण तु निक्षिपेत् ।
मध्ये मध्ये तथैतेषां शुद्धाम्भः प्रणवेन च ॥ १३४ ॥

इन्द्राग्न्योर्मध्यमारभ्य यावदीशानशक्रयोः ।
ततस्तृतीयावरणे प्राच्यां गन्धोदकं न्यसेत् ॥ १३५ ॥

दक्षिणस्यां तु पुष्पाम्भः पश्चिमे चौपमानिकम् ।
सौम्ये चामलकाम्भस्तु आग्नेये चाक्षतोदकम् ॥ १३६ ॥

तिलोदकं तु नैर्ऋत्यां वायव्ये च यवोदकम् ।
तण्डुलोदकमीशाने द्वादशाक्षरविद्यया ॥ १३७ ॥

घटाञ्छुद्धोदकैः शेषान् पूरयेत् षोडश क्रमात् ।
मध्ये घटौ द्वौ द्वौ द्वौ च विष्णुगायत्रिया ततः ॥ १३८ ॥

एवं तु पूरयित्वाम्भः प्रणम्याञ्जलिमुद्रया ।
पूर्वं पाद्यं तु वै दद्यादिदं विष्णुरिति त्वृचा[1] ॥ १३९ ॥

आ त्वा वहन्त्वित्यर्घ्यं तु ततो दद्याद्विचक्षणः ।
ततश्चाचमनीयं तु दद्यादापः पुनन्त्विति ॥ १४० ॥

[1] तृचा B

गायत्र्या पञ्चगव्यं तु घृतं शुक्रमसीति च ।
दधिक्राव्णेति मन्त्रेण दधि दद्याद्विचक्षणः ॥ १४१ ॥

आप्यायस्वेति च क्षीरं मधु वातेति वै[1] मधु ।
आदित्यः शुक्र इत्येवं दद्यादुष्णोदकं ततः ॥ १४२ ॥

दद्यात् कषायतोयं च सदसस्पतिमित्यृचा ।
मार्जनं तु ततो दद्यात् शं नो देवीरिति ब्रुवन् ॥ १४३ ॥

गणानां त्वेति मन्त्रेण दद्याच्चैव फलोदकम् ।
त्वं विष्णुरिति मन्त्रेण दद्याच्च परिमार्जनम् ॥ १४४ ॥

अग्न आ याहि वीतयेति दद्याद्गलोदकं ततः ।
इषे त्वेति च लोहाश्मश्चाग्निर्माले कुशोदकम् ॥ १४५ ॥

सक्तूदकं ततो दद्यात् किमित्त इति चैव हि ।
शुद्धोदकं ततो दद्यादापो अस्मानिति त्वृचा[2] ॥ १४६ ॥

ततो गन्धोदकादीनि [3]मानस्तोकैर्निवेदयेत् ।
शेषान् पुरुषसूक्तेन षोडश प्रत्यृचं क्रमात् ॥ १४७ ॥

मूलमन्त्रेण वा कुर्यात् सर्वमेव विचक्षणः ।
उत्तमस्नपनं ह्येतत् केचिदिच्छन्ति साधकाः ॥ १४८ ॥

शुद्धोदकैर्विहीनं तु [4]जगुरुत्तममध्यमम् ।
शुद्धोदैर्मानुषे भागे विहीनं चोत्तमाधमम् ॥ १४९ ॥

[1] ते B  [2] तृचा A  [3] मानस्तोकं B C  [4] बहु B

अन्तः शुद्धोदकस्थाने स्थितगन्धोदकाष्टकम् ।
बहिरावरणे प्राच्यां स्नपनं मध्यमोत्तमम् ॥ १५० ॥

गन्धाष्टकविहीनं तु भवेन्मध्यममध्यमम् ।
शून्यमानुषजातीकं भवेत् तन्मध्यमाधमम् ॥ १५१ ॥

दैवाष्टकसमायुक्तमधमोत्तममुच्यते ।
चतुर्भिस्तत्र वै न्यूनं भवेदधममध्यमम् ॥ १५२ ॥

यद्ब्रह्मकलशेनैव तद्भवेदधमाधमम् ।
परिमार्जनवस्तूनि औपमानिकमेव च ॥ १५३ ॥

विशेषमत्र वक्ष्यामि पूर्वोक्तानीतराणि तु ।
[1]नद्यां तटाके वल्मीके पर्वते चैव मृत्तिका ॥ १५४ ॥

परिमार्जनवस्तूनि कथितानि समासतः ।
शङ्खं चक्रं च कूर्मं च वैनतेयं तथैव च ॥ १५५ ॥

कृत्वा प्रतिकृतिं लोहैरौपमानिकमुच्यते ।
अपरे स्नपनं चान्यत् कथयन्ति च नद्यथा ॥ १५६ ॥

पञ्चधा तु कृते स्थाने कलशाः पञ्चविंशतिः ।
ब्राह्मं तु मध्यमं भागं दैवतं तदनन्तरम् ॥ १५७ ॥

तृतीयं मानुषं प्रोक्तं द्रव्यन्यासस्तथोच्यते ।
मूलमन्त्रेण कलशान् ब्राह्मादीन् विन्यसेत् क्रमात् ॥ १५८ ॥

[1] नदीतटाके B

तेनैव प्रोक्षणं कुर्यात् तेन द्रव्याणि निक्षिपेत् ।
प्रयतः प्राङ्मुखं पूर्वं ब्राह्मे स्नानोदकं न्यसेत् ॥ १५९ ॥

ततश्च मानुषे भागे प्राच्यां पाद्यं तु विन्यसेत् ।
याम्यामर्घ्यं तु वारुण्यां न्यसेदाचमनीयकम् ॥ १६० ॥

पञ्चगव्यं तथा सौम्ये घृतमाग्नेयगोचरे ।
निर्ऋत्यां दधि वै दद्यात् वायव्ये क्षीरमेव तु ॥ १६१ ॥

ईशाने मधुविन्यासः कर्तव्यः क्रमयोगतः ।
इन्द्राग्न्योर्मध्यभागे तु कुर्यादुष्णोदकं ततः ॥ १६२ ॥

क्षिपेन्मध्ये यमाग्न्योस्तु कषायमपि साधकः ।
मध्ये यमनिर्ऋत्योस्तु स्थापयेन्मार्जनं ततः ॥ १६३ ॥

निर्ऋतेर्वरुणस्यापि मध्ये कुर्यात् तिलोदकम् ।
वायोश्च वरुणस्यापि मध्ये कुर्याद्यवोदकम् ॥ १६४ ॥

रत्नोदकं ततः कुर्यान्मध्ये वै वायुसोमयोः ।
ईशानसोमयोर्मध्ये लोहतोयं तु विन्यसेत् ॥ १६५ ॥

ईशानशक्रयोर्मध्ये विन्यसेच्च कुशोदकम् ।
ततस्तु दैविके भागे प्राच्यां गन्धोदकं न्यसेत् ॥ १६६ ॥

पुष्पाम्भो दक्षिणस्यां तु पश्चिमे चौपमानिकम् ।
सौम्ये चामलकाम्भस्तु आग्नेये चाक्षतोदकम ॥ १६७ ॥

निर्ऋत्यां नालिकेराम्भो वायौ चेक्षुरसं तथा ।
ईशानगोचरे कुर्यात् क्रमाद्वै तण्डुलोदकम् ॥ १६८ ॥

अन्यथा द्रव्यविन्यासं कथयन्तीह केचन ।
पाद्यं तु मध्यमे भागे प्राच्यामर्घ्यं तथैव च ॥ १६९ ॥

अग्नावाचमनीयं तु पञ्चगव्यं तु दक्षिणे ।
घृतं तु नैर्ऋते भागे वारुणे तु तथा दधि ॥ १७० ॥

तथा क्षीरं च वायव्ये सौम्ये चैव तथा मधु ।
उष्णोदकमथेशाने यथावद्विनिवेशयेत् ॥ १७१ ॥

इन्द्राग्न्योर्मध्यभागे तु कषायं विनिवेशयेत् ।
यमाग्न्योर्मार्जनं मध्ये यमस्य निर्ऋतेः फलम् ॥ १७२ ॥

निर्ऋतेर्वरुणस्यापि मध्ये तु परिमार्जनम् ।
रत्नं वाय्वम्बुपत्योस्तु लोहाम्भो वायुसोमयोः ॥ १७३ ॥

ईशानसोमयोर्मध्ये कुर्याच्चैव कुशोदकम् ।
ईशानशक्रयोर्मध्ये सम्यक् सक्तूदकं न्यसेत् ॥ १७४ ॥

ततस्तु दैविके भागे प्राच्यां गन्धोदकं न्यसेत् ।
आग्नेये पुष्पतोयं तु दक्षिणे चौपमानिकम् ॥ १७५ ॥

तथामलकतोयं तु निर्ऋत्यां विनिवेशयेत् ।
अक्षताम्भस्तु वारुण्यां वायव्ये तु तिलोदकम् ॥ १७६ ॥

यवोदकं तथा सौम्ये ईशाने तण्डुलोदकम् ।
मन्त्रमष्टाक्षरं चात्र द्वादशाक्षरमेव वा ॥ १७७ ॥

अथापि विष्णुगायत्री मन्त्रत्रयमुदाहृतम् ।
पाद्यादि तण्डुलान्तं तु स्नपनं चात्र कीर्तितम् ।
तिलाश्च दक्षिणा देयाः सुवर्णं वा स्वशक्तितः ॥ १७८ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे
स्नपनविधिर्नाम अष्टमोऽध्यायः

# शिवरात्रे नवमोऽध्यायः

सनत्कुमारः—

मङ्गलाङ्कुरभेदं तु प्रवक्ष्यामि यथातथम् ।
पात्रं तु त्रिविधं प्रोक्तं मङ्गलाङ्कुररोपणे ॥ १ ॥

पालिका घटिका चैव शरावश्चेति भेदतः ।
पालिकावक्त्रविस्तारः षोडशाङ्गुल उच्यते ॥ २ ॥

भवेत् कण्ठबिलं चास्यास्ततोऽष्टाङ्गुलविस्तृतम् ।
षडङ्गुलमधस्तात्तु विस्तारस्तावदेव वा ॥ ३ ॥

पादपीठस्य विस्तारः षडङ्गुल उदाहृतः ।
चतुरङ्गुल उत्सेधस्तत्संधिश्चाङ्गुलो भवेत् ॥ ४ ॥

तत्संधेस्तु भवेन्नाहः पादपीठार्धमेव तु ।
उत्सेधः पालिकायास्तु पञ्चविंशाङ्गुलो भवेत् ॥ ५ ॥

भवेत् पञ्चमुखी चैव घटिका तु घटाकृतिः ।
चतुरङ्गुलविस्ताराण्याहुर्वक्त्राणि पञ्च वै ॥ ६ ॥

चत्वारि च चतुर्दिक्षु ऊर्ध्वमेकं यथाविधि ।
घटिकायामविस्तारो द्वादशाङ्गुलमुच्यते ॥ ७ ॥

आचार्याः कथयन्त्येके षोडशाङ्गुलमेव वा ।
द्वादशाङ्गुलविस्तारं शरावस्य मुखं भवेत् ॥ ८ ॥

चतुरङ्गुलविस्तारमधस्तान्मूलमुच्यते ।
पालिका वैष्णवी ज्ञेया ब्राह्मी तु घटिका स्मृता ॥ ९ ॥

शैवं शरावं विज्ञेयं त्रयमेतत् त्रिदैवतम् ।
तस्मात् सर्वेषु यागेषु त्रितयं कारयेद् बुधः ॥ १० ॥

प्रत्येकं द्वादश ग्राह्या मङ्गलाङ्कुरकर्मणि ।
तिलाश्चापि तथा मुद्गाः सर्षपाः शालयस्तथा ॥ ११ ॥

प्रियङ्गुशिम्बिनिष्पावमाषश्यामकुलुत्थकाः ।
दशैतानि तु बीजानि पयोभिः क्षालयेत् ततः ॥ १२ ॥

मृद्वालुकाकरीषैस्तु पूरयित्वा तु पालिकाः ।
त्रिपङ्क्तीकृत्य ताः सर्वाः प्रत्येकं क्रमयोगतः ॥ १३ ॥

आग्नेयादीशपर्यन्तं विन्यस्य तु विचक्षणः ।
जितं त इति मन्त्रेण सर्वबीजानि वापयेत् ॥ १४ ॥

परिवेष्ट्य ततो वस्त्रैः सुगुप्ते स्थापयेत् ततः ।
श्यामलाश्च तथा रक्ता ये तिर्यग्गतयोऽपि च ॥ १५ ॥

अङ्कुरास्त्वप्ररूढाश्च वर्जनीयाः प्रयत्नतः ।
श्यामेषु द्रव्यनाशः स्याद् रक्तेषु कलहो भवेत् ॥ १६ ॥

तिर्यग्गतेषु रोगः स्यादप्ररूढे मृतिर्भवेत् ।
शुभं पीतेषु वर्णेषु ऋजुषूर्ध्वगतिष्वपि ॥ १७ ॥

कर्तुः कारयितुश्चापि भवत्येव न संशयः ।
नवाहं सप्तरात्रं वा पञ्चरात्रमथापि वा ॥ १८ ॥

स्थापयित्वा सुगुप्ते तु पश्चात् कर्मणि योजयेत् ।
बलिं च सर्वदा दद्यात् प्रतिरात्रं पृथक् पृथक् ॥ १९ ॥

प्रथमं भूतरात्रं तु द्वितीयं पैतृकं हविः ।
तृतीयं यक्षरात्रं तु नागरात्रं चतुर्थकम् ॥ २० ॥

ब्राह्मं तु पञ्चमं ज्ञेयं षष्ठं शैवमुदाहृतम् ।
सप्तमं वैष्णवं ज्ञेयमष्टमं नवमं तथा ॥ २१ ॥

भूतक्रूरबलिं दद्यात् पूर्वं भूतप्रहर्षणम् ।
द्वितीयं पैतृकं दद्याद् बलिं च तिलतण्डुलैः ॥ २२ ॥

धानोडुविकलाजैस्तु ततो यक्षबलिं हरेत् ।
[1]नालिकेरपयःसिक्तशालिपिष्टविमिश्रितैः ॥ २३ ॥

चतुर्थेऽहनि वै दद्यात् ततो नागबलिं बुधः ।
पञ्चम्यां तु बलिं दद्यात् ब्राह्मं पञ्चाक्षतैर्युतम् ॥ २४ ॥

चरुणापूपयुक्तेन षष्ठं शैवबलिं हरेत् ।
गुडान्नं वैष्णवं दद्यात् सप्तमं तु बलिं हरेत् ॥ २५ ॥

पायसं कृसरं दद्यादष्टमं नवमं तथा ।
पालिकानां तु परितः क्रमादष्टासु दिक्षु च ॥ २६ ॥

बलिं तु मण्डले दद्यादैन्द्रादिक्रमयोगतः ।
बलिमन्त्रं स्वनाम्ना तु तेषां चैव नमोऽन्वितम् ॥ २७ ॥

[1] B omits four lines from here.

शुद्धवासाः शुचिर्भूत्वा कृतदन्तानुधावनः ।
हविष्यभुग्यतात्मा तु आचार्यो बलिमानयेत् ॥ २८ ॥

रात्रौ तु बलिदानं स्याद् दत्त्वा स्नानं समाचरेत् ।
प्रातः कर्मदिने दद्याद् बलिं बलिविधानवित् ॥ २९ ॥

यदा चोप्तानि बीजानि तदा प्रभृति नित्यशः ।
न कश्चित् प्रविशेत् तत्र न स्पृशेद्वा कथंचन ॥ ३० ॥

आचार्य एव प्रविशेत् सिञ्चत् कुसुमवारिणा ।
उच्छिष्टादीनि सर्वाणि दूरतः परिवर्जयेत् ॥ ३१ ॥

अदत्त्वा तु बलिं कांचिन्न कुर्यात् पालिकाक्रियाम् ।
बलीनामप्यदाने तु क्रिया भवति निष्फला ॥ ३२ ॥

अमङ्गलाङ्कुरो यागो निष्फलः स्यान्न संशयः ।
तस्माद्यत्नेन वै कुर्यान्मङ्गलाङ्कुररोपणम् ॥ ३३ ॥

यदाभूदङ्कुरारोपस्तदा प्रभृति नित्यशः ।
मार्जनं ग्रामवीथीनां कृत्वासिच्य यथाविधि ॥ ३४ ॥

उत्थापयित्वा केतूंश्च तोरणानि च सर्वशः ।
अष्टदिक्षु यथायोगं बलिपीठं प्रकल्पयेत् ॥ ३५ ॥

एवं कृत्वा बहिर्ग्रामाद् ग्राममध्ये च कारयेत् ।
चतुष्पथेषु सर्वेषु मण्डलानि च कारयेत् ॥ ३६ ॥

कृत्वैवं ग्रामसंस्कारं तस्यां रात्र्यां यथाविधि ।
केतुभिर्विविधाकारैर्वितानैर्विविधैरपि ॥ ३७ ॥

भेरीमृदङ्गसंयुक्तं रथमारोप्य कौतुकम् ।
व्यजनैस्तालवृन्तैश्च दिव्यस्त्रीपरिवीजितम् ॥ ३८ ॥

प्रदीपशतसंयुक्तं रात्रौ ग्रामं परिभ्रमेत् ।
भूतकूरबलिं चैव पीठिकासु विनिक्षिपेत् ॥ ३९ ॥

मण्डलेषु तथा कुर्याज्जलदानसमन्वितम्[1] ।
कुमुदाद्यास्तु भूतेशास्तेन तृप्यन्ति नित्यशः ॥ ४० ॥

अग्निप्रदक्षिणं कुर्याच्छेषेषु दिवसेषु च ।
पूर्वोक्तं च बलिं दद्यात् पीठिकासु यथाक्रमम् ॥ ४१ ॥

परिभ्रमणकाले तु बलिदानमिहोच्यते ।
आचार्यो देवदासो वा नयन्ति बलिमन्वहम् ॥ ४२ ॥

कौतुकस्य पुरस्तात्तु गच्छन्ति बलिदायिनः ।
गन्धपुष्पसमायुक्तं धूपदीपसमन्वितम् ॥ ४३ ॥

भवेत्तु बलिविक्षेपो बलिमुद्रां च दर्शयेत् ।
तत्र नृत्तं च वाद्यं च कृत्वा कृत्वा परिभ्रमेत् ॥ ४४ ॥

अनुगच्छन्ति ये त्वेनं कौतुकं कौतुकान्विताः ।
पदे पदे क्रतुफलं लभन्ते नात्र संशयः ॥ ४५ ॥

पारे च ग्राममध्ये च बलिशेषं समापयेत् ।
तत्र नादं च नृत्तं च प्रयत्नेन तु कारयेत् ॥ ४६ ॥

1 जयदानसमन्वितम् B

नृत्यन्त्यत्र च ये भक्त्या नमस्यन्ति रमन्ति च ।
विमुक्तकल्मषास्ते स्युः क्रमात् पारिषदेश्वराः ॥ ४७ ॥

एवं नित्यं परिभ्राम्य दद्याच्च बलिमुत्तमम् ।
रात्रौ प्रतिसरारम्भं पूर्वेद्युः कारयेत् ततः ॥ ४८ ॥

चतुःस्तम्भयुतायां तु वेदिकायां यथाविधि ।
प्ररोहघटिकाभिस्तु शरावैश्च चतुर्दिशम् ॥ ४९ ॥

कोणेष्वलंकृतायां तु चतुर्भिः क्रमयोगतः ।
वैष्णवैः कारयेत् तत्र घृतारोपणमादितः ॥ ५० ॥

दर्पणं दर्शयेत् पश्चात् मङ्गलानि च दर्शयेत् ।
शङ्खदुन्दुभिनिर्घोषैर्जयशब्दैश्च नादयेत् ॥ ५१ ॥

ऊर्णामयेन सूत्रेण तथा क्षौमयुतेन च ।
अङ्गुष्ठानामिकाभ्यां तु सारयित्वा विचक्षणः ॥ ५२ ॥

ततश्चोभयहस्ताभ्यां दक्षिणे भगवत्करे ।
जितं त इति मन्त्रेण बध्नीयात् साधकः क्रमात ॥ ५३ ॥

चामरैस्तालवृन्तैश्च वीजयेन्मङ्गलान्वितः ।
एरकायां तु क्लृप्तायां निवेश्य प्रतिमां क्रमात् ॥ ५४ ॥

रात्रिशेषं समासीत अनिर्वाणैः प्रदीपकैः ।
[1]गुग्गुल्वगरुधूपैश्च धूपयित्वा विचक्षणः ॥ ५५ ॥

1 गुल्गुल्वगरु B

प्रभातायां तु शर्वर्यां ग्रामं प्राग्वत् परिभ्रमेत् ।
स्नापयेत् प्रतिमां पश्चान्नद्यां कूपे ह्रदेऽपि वा ॥ ५६ ॥

चतुःस्तम्भयुतायां तु वेदिकायां विचक्षणः ।
गोमयेनोपलिप्तायां पञ्चगव्येन चैव हि ॥ ५७ ॥

प्रोक्षितायां तु तोयेन क्लृप्तायां विष्टरैर्भुवि ।
स्थापयित्वा तु प्रतिमां कुर्यान्मङ्गलवादनम् ॥ ५८ ॥

ततो मङ्गलचूर्णानि वैष्णवीकरणं नयेत् ।
शालिभिर्यवगोधूमैः रजनीचूर्णमिश्रितैः ॥ ५९ ॥

कृत्वा सुवर्णचूर्णं च स्थापयित्वा तथोत्तरे ।
चतुर्भिः पालिकाभिस्तु अलंकृत्य च वेदिकाम् ॥ ६० ॥

घृतेन दध्ना पयसा मधुना च यथाक्रमम् ।
ततश्चोष्णोदकेनापि स्नापयेत् क्रमयोगतः ॥ ६१ ॥

घृतेन स्नापयेत् पूर्वं बीजेन परमेष्ठिना ।
पुंसा चाथ तथा दध्ना विश्वेन पयसा तथा ॥ ६२ ॥

निवृत्त्या मधुना चापि सर्वेणोष्णोदकेन च ।
ततश्च विसृजेच्चूर्णैः कुशकूर्चेन मार्जयेत् ॥ ६३ ॥

ततश्च गन्धतोयेन पुष्पतोयेन चैव हि ।
ततो मङ्गलतोयेन स्नापयेत् क्रमयोगतः ॥ ६४ ॥

अष्टाक्षरेण गन्धाम्भः पुष्पाम्भो द्वादशाक्षरैः ।
ततश्च विष्णुगायत्र्या मङ्गलाम्भो यथाक्रमम् ॥ ६५ ॥

गन्धचूर्णेन विमृजेत् कौतुकं छेदयेत् ततः ।
ततः शुद्धाम्भसा पश्चात् प्रणवेन समाहितः ॥ ६६ ॥

स्नापयित्वा यथान्यायं मूर्ध्नि चूर्णं तु कारयेत् ।
सौवर्णे तु तथा कृत्वा जयशब्दरवैर्युतम् ॥ ६७ ॥

आदाय प्रतिमां पश्चात् [1]ततः स्नानं तु कारयेत् ।
तच्च तीर्थजलं स्नानात् सर्वपापप्रणाशनम् ॥ ६८ ॥

अलंकृत्य यथान्यायं वस्त्रैराभरणैरपि ।
वितानध्वजसंयुक्तं यागस्थानं समानयेत् ॥ ६९ ॥

चतुर्भिस्तोरणैर्युक्तं चतुर्द्वारमलंकृतम् ।
पुष्पयागविधानेन कुर्याद्वै पुष्पमण्डलम् ॥ ७० ॥

पुष्पयागविधानं तु इन्द्ररात्रे प्रकीर्तितम् ।
द्रष्टव्यमत्र विस्तारः क्रियामात्रमिहोच्यते ॥ ७१ ॥

प्ररोहघटिकाः कुर्याद् [2]द्वे द्वे द्वारेषु सर्वशः ।
ये प्ररोहशरावास्तु द्वौ द्वौ तौ प्रतितोरणम् ॥ ७२ ॥

बहिरेव तु कर्तव्या अन्तस्तु [3]घटिकाः क्रमात् ।
यागमण्डलकोणे तु बहिः स्थाप्यास्तु पालिकाः ॥ ७३ ॥

चतस्रः स्थापयित्वैवं कर्णिकायां न्यसेत् प्रभुम् ।
मण्डलस्य प्रकारश्च बहिरावरणक्रमात् ॥ ७४ ॥

[1] नदीस्नानं B E  [2] द्वौ द्वौ B  [3] घटिकां E

परिवारक्रमश्चापि ब्रह्मरात्रे प्रकीर्तितः ।
तत्रैव चार्चनाध्याये कथितश्चार्चनाक्रमः ॥ ७५ ॥

तिथियागं च यत् प्रोक्तमत्र तेनैव चार्चयेत् ।
विशेषमत्र वक्ष्यामि चरुयागविधौ तथा ॥ ७६ ॥

पायसं कृसरं गौडं हरिद्रान्नं तथैव च ।
शुद्धान्नं चेति पञ्चैते चरवः परिकीर्तिताः ॥ ७७ ॥

निवेद्ये चैव होमे च शुद्धान्नं तु विधीयते ।
प्रथमावरणे चैव पायसं तु निवेदयेत् ॥ ७८ ॥

द्वितीयावरणे चैव कृसरं तु निवेदयेत् ।
तृतीयावरणे गौडं सर्वेषां गौडमेव वा ॥ ७९ ॥

बलिदाने हरिद्रान्नं न निवेदनकर्मणि ।
फलैरपूपैर्लाजैश्च सुप्तभिश्चाप्युडुम्बिकैः ॥ ८० ॥

निवेद्य बलिदाने च मुद्रांश्चैव प्रकल्पयेत् ।
हुतशेषमथाचार्यः प्रणीयात् प्राङ्मुखः शुचिः ॥ ८१ ॥

निवेद्यशेषं सर्वेषां वैष्णवानां तु दापयेत् ।
निवेदितं च यद् द्रव्यं तदग्नावप्सु निक्षिपेत् ।
एष संक्षेपतः प्रोक्त उत्सवस्य विधिर्मया ॥ ८२ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां शिवरात्रे
उत्सवाध्यायो नवमः

# शिवरात्रे दशमोऽध्यायः

सनत्कुमारः—

मण्डलानां विधिं वक्ष्ये यथावत् तं निबोधत[1] ।
कपिलागोमयं ग्राह्यं जरागोमयमेव वा ॥ १ ॥

तयोरलाभे शेषाणां गवां गोमयमुच्यते ।
अपर्युषितमच्छिन्नं क्रिमिकीटविवर्जितम् ॥ २ ॥

स्निग्धं [2]पर्पटिकाहीनं गोमयं शुभमुच्यते ।
ऊष्मवत्तु प्रशस्तं स्यात् तदलाभेऽन्यसंग्रहः ॥ ३ ॥

रोगार्ताया न गृह्णीयान्न वन्ध्यायाः कथंचन ।
न गर्भिण्याः कदाचिच्च न वत्सस्य कदाचन ॥ ४ ॥

कदाचिन्नाप्रसूताया न चैवानडुहस्तथा ।
न चैव नवसूताया अवत्सायास्तथैव च ॥ ५ ॥

ईदृग्विधानां शेषाणां न ग्राह्यं गोमयं भवेत् ।
प्रातर्विष्ण्वालये कुर्यान्मण्डलानि विचक्षणः ॥ ६ ॥

वृत्तानि पश्चिमे कुर्याच्चतुरश्राणि पूर्वतः ।
त्रिकोणान्युत्तरे कुर्याद् दक्षिणे धनुराकृति ॥ ७ ॥

[1] तन्निबोधत B

[2] पलटिका E

आयतं चतुरश्रं च वायव्ये कारयेद् बुधः ।
आयतं च तथा वृत्तमीशाने च प्रयोजयेत् ॥ ८ ॥

त्रिकोणमायतं चाग्नेर्नैर्ऋते धनुरायतम् ।
एवं विष्ण्वालये कुर्यादष्टदिक्षु यथाक्रमम् ॥ ९ ॥

तत्रैवेन्द्रालये कुर्याद्वज्राकारं विचक्षणः ।
ईशानस्यालये कुर्याच्छूलाकारमतन्द्रितः ॥ १० ॥

शक्त्याकारं तथाग्नेस्तु पद्माभं वरुणस्य तु ।
वायोस्तथोत्पलाकारं निर्ऋतेर्मालिकोपमम् ॥ ११ ॥

पञ्चाश्रं च यमस्यापि षडश्रं धनदस्य च ।
सप्ताश्रं गरुडस्यापि शक्रस्याष्टाश्रमुच्यते ॥ १२ ॥

नवाश्रं चापि शङ्खस्य दशाश्रं पीठकस्य च ।
अष्टासु दिक्षु पीठस्य शेषाणां द्वारि चैव हि ॥ १३ ॥

एकादशाश्रं कुर्याद्वै विष्वक्सेनस्य चालये ।
गोपुरे द्वादशाश्रं तु कुर्यात् तत्र विचक्षणः ॥ १४ ॥

एतेषां मिश्रकं सर्वं कुर्यात् प्राकारपार्श्वतः ।
गोमयग्रहणं कुर्याद् भूमावापतितं बुधः ॥ १५ ॥

वस्त्रपूतेन तोयेन आलेपविधिरुच्यते ।
मण्डलानां तु सर्वेषां दैवतं कथयामि वः ॥ १६ ॥

वृत्तस्य भगवान् विष्णुश्चतुरश्रस्य पद्मभूः ।
त्रिकोणस्य भवेत् स्कन्दः शंकरो धनुराकृतेः ॥ १७ ॥

चतुरश्रायतस्यापि दैवतं वायुरुच्यते ।
तथैवायतवृत्तस्य ईशानस्त्वधिदैवतम् ॥ १८ ॥

आयतस्य त्रिकोणस्य वह्निः स्यादधिदैवतम् ।
धनुषश्चायतस्यापि निर्ऋतिस्त्वधिदैवतम् ॥ १९ ॥

इन्द्रो वज्रोपमस्यापि त्रिकोणस्य वृषध्वजः ।
चक्राकारस्य विष्णुः स्यात् पद्माभस्य च षण्मुखः ॥ २० ॥

धनदश्चोत्पलाभस्य मालाकारस्य चन्द्रमाः ।
पञ्चाश्रस्य यमो देवः षडश्रस्य सरस्वती ॥ २१ ॥

सप्ताश्रस्य भवेत् सूर्यस्त्वष्टाश्रस्य प्रजापतिः ।
नवाश्रस्य मनुर्देवो दशाश्रस्य भृगुस्तथा ॥ २२ ॥

बुध एकादशाश्रस्य मण्डलस्याधिदैवतम् ।
तथैव द्वादशादित्या द्वादशाश्रस्य दैवतम् ॥ २३ ॥

मिश्रस्य दैवतं विष्णुः सर्वेषां विष्णुरेव वा ।
मार्जने ब्रह्मणः प्रीतिः सिक्ते वै शंकरस्य च ॥ २४ ॥

एवं विष्णोस्तथालिप्ते कुर्यात् तस्मात् त्रयं बुधः ।
त्रीणि वा पञ्च वा सप्त नवैकादश वाथवा ॥ २५ ॥

कुर्यात् स्थानेषु सर्वेषु मण्डलानि विचक्षणः ।
न चैवातिक्रमेत् तानि यच्छुष्काणि तथैव ह ॥ २६ ॥

अक्षतांश्चापि पुष्पाणि कुर्याद्वै प्रतिमण्डलम् ।
न शून्यं मण्डलं कुर्यात् पत्रैर्वल्ल्यङ्कुरैरपि ॥ २७ ॥

रूपकं प्रतिरूपं च चित्राणि विविधानि च ।
मिश्रकस्याप्यमिश्राणि प्रयोज्यान्युत्सवेषु ह ॥ २८ ॥

नित्यनैमित्तिकान्याहुर्मण्डलानि मनीषिणः ।
पूर्वोक्तान्येव नित्यानि तानि वै प्रतिदैवतम् ॥ २९ ॥

रूपकादीनि सर्वाणि उत्सवेऽधिकृतानि वै ।
तानि नैमित्तिकान्याहुर्यैः कुर्यादुत्सवं बुधः ॥ ३० ॥

चतुर्विधेषु सर्वेषु गोष्ठेषु गृहकुट्टिमे ।
मार्गेषु द्वारदेशेषु ग्रामस्य परितः क्रमात् ॥ ३१ ॥

बलिस्थानेषु सर्वेषु कुर्यान्नैमित्तिकानि वै ।
फलानि मण्डलानां तु प्रवक्ष्यामि यथातथम् ॥ ३२ ॥

नित्येषु मण्डलेष्वाहुः सालोक्यफलमुत्तमम् ।
नैमित्तिकेषु सर्वेषु सायुज्यं फलमुत्तमम् ॥ ३३ ॥

नित्ये नैमित्तिके चैव मण्डले विष्णुमर्चयेत् ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ ३४ ॥

मासेन स्वर्गमाप्नोति षण्मासेनेन्द्रलोकताम् ।
संवत्सराद्धरेर्लोकं प्राप्नुयान्नात्र संशयः ॥ ३५ ॥

स्नपनस्य फलं चैव वत्सरेणाप्नुयान्नरः ।
[1]तथा यागफलं चैव वत्सराभ्यामवाप्नुयात् ॥ ३६ ॥

[1] B omits this line.

वत्सरैश्च त्रिभिश्चैव उत्सवस्याप्नुयात् फलम् ।
चतुर्भिर्वत्सरैश्चैव प्रासादस्याप्नुयात् फलम् ॥ ३७ ॥

पञ्चभिर्वत्सरैश्चापि प्रतिमाफलमश्नुते ।
[1]षड्भिः संवत्सरैश्चापि प्रतिष्ठाफलमश्नुते ॥ ३८ ॥

सप्तभिर्वत्सरैश्चापि सप्तयागफलं भवेत् ।
अत ऊर्ध्वं तु सायुज्यं फलमत्र न संशयः ॥ ३९ ॥

एकाहमपि यः कुर्यान्मण्डलानि विचक्षणः ।
संवत्सरकृतं पापं व्यपोहति न संशयः ॥ ४० ॥

उत्सवेष्वपि यः कुर्यादेकाहमपि साधकः ।
दशवर्षकृतं पापं व्यपोहति न संशयः ॥ ४१ ॥

मासमेकं तु यः कुर्यान्मासार्धं वा न संशयः ।
सर्वपापविनिर्मुक्तो विष्णोः पारिषदो भवेत् ॥ ४२ ॥

स्त्री वापि दीक्षिता युक्ता भर्तृविष्टिपरायणा[2] ।
कुर्याद्वै मण्डलान्येवं विष्णोर्विष्णुपरायणा ॥ ४३ ॥

देवीनां याति सालोक्यमन्ते विष्णुपुरं व्रजेत् ।
वत्सरेण तथा याति रतेः सालोक्यतां ततः ॥ ४४ ॥

द्वाभ्यां तु वत्सराभ्यां च सरस्वत्याः सलोकताम् ।
त्रिभिश्च वत्सरैश्चैव श्रियः सालोक्यमाप्नुयात् ॥ ४५ ॥

1 B omits this line.

2 विष्णुपरायणा B

पञ्चभिर्वत्सरैश्चापि शान्तेः सालोक्यमाप्नुयात् ।
अतः परं तु देवीनां सायुज्यं तु न संशयः ॥ ४६ ॥

ततो द्वादशभिश्चैव स्त्री पुंस्त्वं प्राप्नुयादिह[1] ।
[2]ततश्च विष्णुसालोक्यं सायुज्यं प्राप्नुयात् ततः ॥ ४७ ॥

तस्माच्च पुरुषः स्त्री वा दीक्षितो विष्णुगोचरे ।
कुर्यात् सर्वप्रयत्नेन मण्डलानि स्वशक्तितः ।
शिवरात्रमिति प्रोक्तमिन्द्ररात्रमतः परम् ॥ ४८ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायां[3]
शिवरात्रे मण्डलाध्यायो दशमः

समाप्तं शिवरात्रम्

[1] ततः B [2] B omits this line.
[3] दशसाहस्रिकायां added B

# इन्द्ररात्रम्

## प्रथमोऽध्यायः

सनत्कुमारः—

इन्द्ररात्रं प्रवक्ष्यामि यथाहेन्द्रः पुरा मम ।
पूरणानां क्रमश्चात्र पूर्वमेव यथोच्यते ॥ १ ॥

तत्र [1]पञ्जरबन्धं तु प्रवक्ष्यामि यथातथम् ।
वेणुना विदलं कुर्यात् पञ्जरं च[2] विचक्षणः ॥ २ ॥

यावत्तु प्रतिमायामस्तावद्विस्तार उच्यते ।
उत्सेधः प्रतिमायाश्च चतुरङ्गुलमुच्यते ॥ ३ ॥

काष्ठैर्वा पञ्जरं कुर्यादन्तःपत्रसमन्वितम् ।
पत्रैर्वा केवलैः कुर्यान्नवैश्चोपरिबन्धनम् ॥ ४ ॥

अर्गलं तत्प्रमाणेन मधूच्छिष्टेन कारयेत् ।
लोहेन वा मृदा वापि शालिपिष्टेन वा पुनः ॥ ५ ॥

अर्गलं चापि तं कृत्वा पूर्वोक्तोत्सेधसंयुतम् ।
प्रतिमां तत्र निक्षिप्य पूरणं पुनरारभेत् ॥ ६ ॥

अधः शिला वा लोहं वा मधूच्छिष्टं तु वा भवेत् ।
रसादीनां तु सर्वेषां कुर्यादर्गलबन्धनम् ॥ ७ ॥

1 पञ्जरबद्धं A B    2 वा B

शेषाणामपि सर्वेषां पञ्जरं तु प्रशस्यते ।
चरुणा पूरयेत् [1]तत्तु विधिपक्वेन साधकः ॥ ८ ॥

नात्युष्णेनातिशीतेन कदुष्णेन विचक्षणः ।
पूरयित्वा तु विधिवत् स्थितं च दश नाडिकाः ॥ ९ ॥

ततस्तदप्सु वा चाग्नौ क्षिपेद्भूमौ खनेत्तु वा ।
दशनाड्यधिकं पूरं स्थापयित्वा त्रिचक्षणः ॥ १० ॥

कालयोगः स उद्दिष्टो रात्रावहनि चैव तु ।
कालयोगातिरिक्तं तु निर्माल्यं परिचक्षते ॥ ११ ॥

तस्मात् सर्वप्रयत्नेन काले तन्निर्हरेत् ततः ।
तस्य क्रतुफलं प्रोक्तमग्निष्टोमस्य यत् फलम् ॥ १२ ॥

रसैस्तु पूरयेत् सर्वैरेतेन क्रमयोगतः ।
सोऽत्यग्निष्टोमयागस्य फलं प्राप्नोत्यसंशयः ॥ १३ ॥

गृहसिद्धेन चान्नेन पूरयेद्यस्तु साधकः ।
चातुर्मास्यफलं प्राप्य विष्णुलोके महीयते ॥ १४ ॥

घृतपूरेण यो भक्त्या पूरयेत् प्रतिमां हरेः ।
इह भोगान् परान् भुक्त्वा विष्णुलोके महीयते ॥ १५ ॥

तैलेन पूरयेद्यस्तु विष्णोः कौतुकमुत्तमम् ।
स षोडशीफलं प्राप्य विष्णुलोके महीयते ॥ १६ ॥

[1] यस्तु B

पयसा पूरयेद्यस्तु भक्त्याथ प्रतिमां हरेः ।
वाजपेयफलं प्राप्य विष्णुलोके महीयते ॥ १७ ॥

मधुना पूरयेद्यस्तु भक्त्या च प्रतिमां हरेः ।
अतिरात्रफलं प्राप्य विष्णुलोके महीयते ॥ १८ ॥

अपूपैः पूरयेद्यस्तु प्रतिमां भक्तितो हरेः ।
अप्तोर्यामफलं प्राप्य विष्णुलोके महीयते ॥ १९ ॥

सक्तुना पूरयेद्यस्तु भक्त्या च प्रतिमां हरेः ।
गोसवस्य फलं प्राप्य विष्णुलोके महीयते ॥ २० ॥

फलैश्च पूरयेद्यस्तु प्रतिमां भक्तितो हरेः ।
अश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥ २१ ॥

कुसुमैः पूरयेद्यस्तु प्रतिमां भक्तितो हरेः ।
नरमेधफलं प्राप्य विष्णुलोके महीयते ॥ २२ ॥

गन्धेन पूरयेद्यस्तु प्रतिमां भक्तितो हरेः ।
राजसूयफलं प्राप्य विष्णुलोके महीयते ॥ २३ ॥

गुडपूरेण यो भक्त्या पूरयेत् प्रतिमां हरेः ।
विष्णुयागफलं प्राप्य विष्णुलोके महीयते ॥ २४ ॥

तण्डुलैः पूरयेद्यस्तु प्रतिमां भक्तितो हरेः ।
पुष्पयागफलं प्राप्य विष्णुलोके महीयते ॥ २५ ॥

तिलेन पूरयेद्यस्तु प्रतिमां भक्तितो हरेः ।
महायागफलं प्राप्य विष्णुलोके महीयते ॥ २६ ॥

दध्ना तु पूरयेद्यस्तु प्रतिमां भक्तितो हरेः ।
सर्वतीर्थफलं प्राप्य विष्णुलोके महीयते ॥ २७ ॥

लोहपूरेण यो भक्त्या पूरयेत् प्रतिमां हरेः ।
हरिस्तोमफलं प्राप्य विष्णुलोके महीयते ॥ २८ ॥

रत्नपूरेण यो भक्त्या पूरयेत् प्रतिमां हरेः ।
सर्वक्रतुफलं प्राप्य विष्णुसायुज्यमाप्नुयात् ॥ २९ ॥

एतैश्चान्यैश्च यो भक्त्या पूरयेत् प्रतिमां हरेः ।
भगवान् स तु विज्ञेयः सायुज्यान्नात्र संशयः ॥ ३० ॥

चरुणान्नेन वापूपैः प्रातः संपूरयेत् प्रभुम् ।
घृतेन मधुना तैलैर्मध्याह्ने पूरयेत् प्रभुम् ॥ ३१ ॥

पुष्पैश्च विविधै रम्यैः फलैश्च विविधैरपि ।
सक्तुना रसमिश्रेण सायाह्ने पूरयेत् प्रभुम् ॥ ३२ ॥

[1]रत्नतण्डुललोहैस्तु मध्यरात्रे प्रपूरयेत् ।
गुडेनापि रसैः सर्वैः प्रत्यूषे पूरयेत् प्रभुम् ॥ ३३ ॥

न पूरयेत् तिलै रात्रौ न चान्नैर्नापि वा फलैः ।
न चैव रत्नलोहानि निर्माल्यं स्यात् कदाचन ॥ ३४ ॥

शेषाणि सर्ववस्तूनि निर्माल्यं स्यान्न संशयः ।
कृसरं पायसं चैव हरिद्रान्नं गुडोदनम् ॥ ३५ ॥

[1] तत्तत्तण्डुल E

चरुपूरे विशिष्टानि फलं दशगुणं भवेत् ।
नालिकेररसं चापि तथा चेक्षुरसादि च ॥ ३६ ॥

रसपूरे विशिष्टानि फलं दशगुणं भवेत् ।
घृतपूरेषु सर्वेषु गव्यमेव विशिष्यते ॥ ३७ ॥

गव्यानामपि सर्वेषां कपिलाघृतमुत्तमम् ।
फलं दशगुणं प्रोक्तमेनेषामुत्तरोत्तरम् ॥ ३८ ॥

तैलं कृष्णतिलोत्पन्नं तैलपूरे विशिष्यते ।
तथा महातिलोत्पन्नं फलं दशगुणं भवेत् ॥ ३९ ॥

पयःपूरेषु सर्वेषु तथा गव्यं प्रशस्यते ।
गव्येष्वपि च सर्वेषु विशिष्टं तु जरापयः ॥ ४० ॥

जरायाः पयसः श्रेष्ठं तथैव कपिलापयः ।
तथैव दधिपूरे च फलं दशगुणं भवेत् ॥ ४१ ॥

मधुपूरेषु सर्वेषु शैलजं मधु शस्यते ।
तथैवोद्यानजं शस्तं फलं दशगुणं भवेत् ॥ ४२ ॥

अपूपेषु च सर्वेषु तथा घृतशृतं परम् ।
तथैवोत्करिका चैव फलं दशगुणं भवेत् ॥ ४३ ॥

तथैव सक्तुपूरेषु यवगोधूमजं परम् ।
तथा शालिमयं चापि फलं दशगुणं भवेत् ॥ ४४ ॥

फलपूरेषु सर्वेषु कदलीफलमुत्तमम् ।
तथैवाम्रफलं चापि फलं दशगुणं भवेत् ॥ ४५ ॥

सर्वेषामपि चैतेषां पनसं तु विशिष्यते ।
पुष्पपूरेषु सर्वेषु जाती च तुलसी परा ॥ ४६ ॥

तथा रक्तोत्पलं चापि फलं दशगुणं भवेत् ।
तण्डुलेषु च सर्वेषु शालितण्डुलमुत्तमम् ॥ ४७ ॥

प्रियङ्गुतण्डुलं चापि फलं दशगुणं भवेत् ।
तिलपूरेषु सर्वेषु तथा कृष्णतिलं परम् ॥ ४८ ॥

तथा शुक्लतिलं चापि फलं दशगुणं भवेत् ।
गन्धपूरेषु सर्वेषु उशीरं चन्दनं परम् ॥ ४९ ॥

तथैव कुङ्कुमं चापि फलं दशगुणं भवेत् ।
लोहपूरेषु सर्वेषु सुवर्णं तु प्रशस्यते ॥ ५० ॥

तथा रजतपूरं तु फलं दशगुणं भवेत् ।
रत्नपूरेषु सर्वेषु प्रोक्तं मुक्ताफलं परम् ॥ ५१ ॥

तथैव वज्रं शस्तं स्यात् फलं दशगुणं भवेत् ।
सर्वपूरेषु [1]सर्वाणि संयोज्यैव प्रपूरयेत् ॥ ५२ ॥

सर्वेषां पूर्णसंपत्तिर्भवेद् दशगुणोत्तरा ।
विष्णवे विष्णुपञ्चम्यां व्यतीपाते रविग्रहे ॥ ५३ ॥

तथा सोमग्रहे चैव द्रव्याणामपि संभवे ।
पूरणं विधिवत् कार्यं सफलं कर्तुमिच्छता ॥ ५४ ॥

[1] सर्वोऽपि A B

[1]एकेन पूरणेनापि सर्वान् कामानवाप्नुयात् ।
तस्मात् सर्वप्रयत्नेन कर्तव्यः पूरणक्रमः ॥ ५५ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् इन्द्ररात्रे
पूरणाध्यायः प्रथमः

[1] एतेन B

# इन्द्ररात्रे द्वितीयोऽध्यायः

सनत्कुमारः—

[1]मन्त्रोद्धारं प्रवक्ष्यामि यथावदनुपूर्वशः ।
स्वरास्तु प्रथमं जाता यथावत् तान् वदामि वः ॥ १ ॥

अकारः प्रथमं जज्ञे स्वराणामादिरव्ययः ।
इकारस्तु ततो जात उकारोऽस्मादजायत ॥ २ ॥

ऋकारस्तु ततो जातः लृकारोऽस्मादजायत ।
एकारस्तु ततो जात ओकारोऽस्मादजायत ॥ ३ ॥

ओकारात् पुनरंकारो जातस्तु क्रमयोगतः ।
एवमष्टौ समुत्पन्नाः स्वराः पूर्वं यथाक्रमम् ॥ ४ ॥

एवं दीर्घस्वरा जाता अष्टावष्टभ्य एव हि ।
आकारः पुनरीकार ऊकारश्च तथा परः ॥ ५ ॥

ॠकारोऽपि च लॄकार ऐकारश्च तथैव च ।
औकारः पुनरःकारो दीर्घा अष्टाविति स्मृताः ॥ ६ ॥

अःकारात्तु ककारोऽभूत् खकारोऽस्मादजायत ।
तस्माद् गकार उत्पन्नो घकारोऽस्मादजायत ॥ ७ ॥

1 मन्त्राध्यायं E

तस्माङ्ङकार उत्पन्नश्चकारक्रमयोगतः ।
ककारात्तु चकारोऽभूच्छकारोऽभूत् खकारतः ॥ ८ ॥

गकारात्तु जकारोऽभूज्झकारोऽभूद् घकारतः ।
ङकाराच्च ञकारोऽभूट्टकारोऽभूच्चकारतः ॥ ९ ॥

छकारात्तु ठकारोऽभूड्डकारोऽभूज्जकारतः ।
झकारात्तु ढकारोऽभूण्णकारोऽभूञ्ञकारतः ॥ १० ॥

टकारात्तु तकारोऽभूत् थकारोभूट्ठकारतः ।
डकारात्तु दकारोऽभूद्धकारोऽभूड्ढकारतः ॥ ११ ॥

णकारात्तु नकारोऽभूत् पकारोऽभूत् तकारतः ।
थकारात्तु फकारोऽभूद् बकारोऽभूद् दकारतः ॥ १२ ॥

धकारात्तु भकारोऽभून्मकारोऽभून्नकारतः ।
पकारात्तु यकारोऽभूत् फकाराद्रेफ उत्थितः ॥ १३ ॥

बकारात्तु लकारोऽभूद् वकारोऽभूद्भकारतः ।
मकारात्तु शकारोऽभूत् षकारोऽभूद्यकारतः ॥ १४ ॥

सकारस्तु ततो रेफात् हकारोऽभूल्लकारतः ।
ळकारोऽभूद् वकारात्तु चतुर्भ्यस्तु क्ष उत्थितः ॥ १५ ॥

क्षकारात् पञ्च मात्रास्तु प्रणवस्याथ जज्ञिरे ।
स्वराणां व्यञ्जनानां च कथयाम्यधिदैवतम् ॥ १६ ॥

अकारस्य सदाविष्णुरिकारस्य सदाशिवः ।
उकारस्य परो ब्रह्मा ऋकारस्य तु चन्द्रमाः ॥ १७ ॥

ऌकारस्य भवेत् सूर्य एकारस्य हुताशनः ।
ओकारस्य तथा दक्षश्चांकारस्य हरीश्वरौ ॥ १८ ॥

आकारस्य तथा रुद्र ईकारस्य स्वयं हरिः ।
ऊकारस्य शशाङ्कस्तु ॠकारस्य चतुर्मुखः ॥ १९ ॥

ॡकारस्य तथा चाग्निरैकारस्य दिवाकरः ।
औकारस्य हरीशौ तु अःकारस्य प्रजापतिः ॥ २० ॥

ककारः स्वयमाकाशः खकारो वायुरेव च ।
गकारस्तु भवेदग्निर्घकारस्त्वाप ईरिनाः[1] ॥ २१ ॥

ङकारः पृथिवी ज्ञेयश्चकारः श्रोत्रमुच्यते ।
छकारस्त्वगिति ज्ञेयो[2] जकारश्चक्षुरुच्यते ॥ २२ ॥

जिह्वा चैव झकारस्तु ञकारो घ्राण एव च ।
टकारस्तु भवेच्छब्दंष्ठकारः स्पर्शनं स्मृतम् ॥ २३ ॥

रूपं चैव डकारस्तु ढकारस्तु रसः स्मृतः ।
गन्धश्चैव णकारस्तु तकारो वागुदाहृतः ॥ २४ ॥

[3]थकारस्तु भवेत् पाणिर्दकारः पाद उच्यते ।
धकारस्तु भवेत् पायुरुपस्थो न उदाहृतः ॥ २५ ॥

पकारो वदनं ज्ञेयं फकारः करणं स्मृतम् ।
बकारो गमनं ज्ञेयं विसर्गो भ उदाहृतः ॥ २६ ॥

1 घकारोऽप उदाहृताः A B  2 ज्ञेया B  3 थकारो वा E

मकारस्तु गतिर्ज्ञेयो यकारो मांस उच्यते ।
रेफश्चैव भवेन्मेदो लकारोऽस्थ्यमिधीयते ॥ २७ ॥

वकारस्तु भवेन्मज्जा शकारः [1]शुक्रमुच्यते ।
षकारः सामवेदस्तु सकारो यजुरुच्यते ॥ २८ ॥

ऋग्वेदस्तु हकारः स्यात् ळकारोऽथर्व उच्यते ।
क्षकारस्तु षडङ्गाख्यस्तस्मान्मन्त्रास्तु जज्ञिरे ॥ २९ ॥

स्वराणां व्यञ्जनानां च देवताः परिकीर्तिताः ।
पुटभेदप्रकारं तु प्रवक्ष्यामि यथातथम् ॥ ३० ॥

चतुःषष्टिपुटान्यत्र कारयेत् तन्त्रवित्तमः ।
अष्टौ शून्यपुटान्यग्रे बिन्दुर्मन्त्रपुटानि तु ॥ ३१ ॥

षट्पञ्चाशत् पुटान्येव वर्णानामनुपूर्वशः ।
एषु वर्णपुटेष्वादौ अकारस्तु व्यवस्थितः ॥ ३२ ॥

इकारस्तु द्वितीये स्यादुकारस्तु तृतीयके ।
ऋकारस्तु चतुर्थे स्याल्लकारः पञ्चमे तथा ॥ ३३ ॥

एकारस्तु भवेत् षष्ठ ओकारः सप्तमे तथा ।
अंकारश्चाष्टमे चैव सदाद्यास्तु स्वराः स्थिताः ॥ ३४ ॥

सदादिवर्ग एषोक्तश्चासदादिस्तु कथ्यते ।
प्रथमे चासदादौ तु आकारस्तु पुटे स्थित. ॥ ३५ ॥

[1] शुक्ल B E

ईकारश्च द्वितीये च ऊकारस्तु तृतीयके ।
ऋकारस्तु चतुर्थे तु लृकारः पञ्चमे तथा ॥ ३६ ॥

ऐकारस्तु भवेत् षष्ठे औकारः सप्तमे तथा ।
अःकारश्चाष्टमे चैव असदाद्याः स्वराः स्थिताः ॥ ३७ ॥

तिर्यक्पञ्चपुटेष्वादौ कवर्गस्तु व्यवस्थितः ।
ककारः प्रथमे चैव खकारस्तु द्वितीयके ॥ ३८ ॥

तृतीये च गकारस्तु चतुर्थे घः प्रतिष्ठितः ।
ङकारः पञ्चमे चैव पुटे पञ्च व्यवस्थिताः ॥ ३९ ॥

द्वितीये पञ्चकेऽप्यादौ चकारस्तु व्यवस्थितः ।
छकारस्तु द्वितीये तु तृतीये जः पुटे स्थितः ॥ ४० ॥

झकारस्तु चतुर्थे तु ञकारः पञ्चमे स्थितः ।
तृतीये पञ्चके त्वादौ टकारस्तु व्यवस्थितः ॥ ४१ ॥

ठकारश्च द्वितीये च डकारश्च तृतीयके ।
ढकारश्च चतुर्थे तु णकारः पञ्चमे स्थितः ॥ ४२ ॥

चतुर्थे पञ्चकेऽप्यादौ तकारस्तु व्यवस्थितः ।
थकारश्च द्वितीये च दकारश्च तृतीयके ॥ ४३ ॥

धकारश्च चतुर्थे तु नकारः पञ्चमे स्थितः ।
पञ्चमे पञ्चकेऽप्यादौ पकारस्तु व्यवस्थितः ॥ ४४ ॥

फकारश्च द्वितीये तु बकारश्च तृतीयके ।
भकारश्च चतुर्थे तु मकारः पञ्चमे स्थितः ॥ ४५ ॥

षष्ठे च पञ्चके चैव यकारस्तु व्यवस्थितः ।
द्वितीये च तथा रेफो लकारश्च तृतीयके ॥ ४६ ॥

वकारश्च चतुर्थे तु शकारः पञ्चमे स्थितः ।
सप्तमे पञ्चके चादौ पकारस्तु व्यवस्थितः ॥ ४७ ॥

सकारस्तु द्वितीये च हकारस्तु तृतीयके ।
ळकारश्च चतुर्थे तु क्षकारः पञ्चमे स्थितः ॥ ४८ ॥

अष्टमे पञ्चकेऽप्यादौ मात्राश्चैव व्यवस्थिताः ।
द्वितीया च द्वितीये तु तृतीया तु तृतीयके ॥ ४९ ॥

चतुर्थी तु चतुर्थे तु पञ्चमी पञ्चमे स्थिता ।
प्रथमायास्तु मात्राया ब्रह्मा चैवाधिदैवतम् ॥ ५० ॥

शिवश्चैव द्वितीयाया मात्रायाः संप्रकीर्तितः ।
विष्णुश्चैव तृतीयाया महाविष्णुश्च नादके ॥ ५१ ॥

श्वासस्यैव सदाविष्णुर्मात्रादेवाः प्रकीर्तिताः ।
वक्ष्यामि यमकोत्पत्तिं[1] यथावर्णश्च गृह्यते ॥ ५२ ॥

मात्राः पञ्च समानीय अकारे संनियोजयेत् ।
एका मात्रा त्वकारे च पञ्च मात्रा नियोजिताः ॥ ५३ ॥

षण्मात्रास्तत्र संजातास्ता मात्राश्चैव निर्मथेत ।
प्रणवेनाथ निर्मथ्य उद्धरेत् प्रणवद्वयम् ॥ ५४ ॥

[1] उत्पत्तिः B

प्रत्येकं तत् त्रिमात्रं तु विद्याद्यमकसंज्ञितम् ।
ताभ्यां तु प्रणवाभ्यां तु सर्वमन्त्रान् समुद्धरेत् ॥ ५५ ॥

मन्त्रोद्धारं ततः कुर्यात् यथावर्णानुपूर्वशः ।
अष्टाक्षरस्य पूर्वं तु प्रवक्ष्याम्युद्धृतिक्रमम् ॥ ५६ ॥

अत्र शून्यपुटान्यादौ न्यस्तान्यष्टाक्षरस्य तु ।
ओंकारस्य पुटं चाद्यं नकारस्य द्वितीयकम् ॥ ५७ ॥

मोकारस्य तृतीयं तु नाकारस्य चतुर्थकम् ।
रा इत्येतस्य संप्रोक्तं पञ्चमं तु पुटं ततः ॥ ५८ ॥

षष्ठं चैव यकारस्य णाकारस्य तु सप्तमम् ।
अष्टमं तु यकारस्य पुटान्येतानि चैव हि ॥ ५९ ॥

मन्त्रं मन्त्रपुटे चान्ये अकारं यमकेन च ।
आदाय योजयेदत्र उकारं च विचक्षणः ॥ ६० ॥

मकारं तत्र संयोज्य वेष्टयेद्यमकेन तु ।
व्यञ्जनानि स्वराण्येव योजयेत्तु पृथक् पृथक् ॥ ६१ ॥

वेष्टयेद्यमकेनापि ततः कुर्याद्विचक्षणः ।
सकलीकरणं नाम प्रबीजं तु प्रवेष्टनम् ॥ ६२ ॥

एवमुद्धृत्य सर्वं तु समस्तं वेष्टयेत् ततः ।
उद्धारक्रम एष स्यात् सर्वेषां मन्त्रवादिनाम् ॥ ६३ ॥

मन्त्राणां विलयं पश्चात् कथयामि यथातथम् ।
अकारे यमकान् न्यस्य आलोड्य प्रणवेन तु ॥ ६४ ॥

उद्धरेत् पञ्चमात्रास्तु ताः क्षकारे नियोजयेत् ।
यथोत्पत्ति [1]लयस्तस्मात् सर्वेषां तु भविष्यति ॥ ६५ ॥

अंअःकारलयो यस्तु स तु प्रलयसंज्ञितः ।
दीर्घादीनां लयो यस्तु स महाप्रलयः स्मृतः ॥ ६६ ॥

ऊउकारलयो यस्तु स स्यादाभूतसंप्लवः ।
ईइकारलयो यस्तु स कल्प इति संज्ञितः ॥ ६७ ॥

आअकारलयो यस्तु तत्कल्पान्तमुदाहृतम् ।
अकारस्य लयो यस्तु तद्विष्णोः परमं पदम् ।
अतः परं न चादैवं स्थूलं वा सूक्ष्ममेव वा ॥ ६८ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम इन्द्ररात्रे
मन्त्रोद्धारो नाम द्वितीयोऽध्यायः

[1] लयं B

## इन्द्ररात्रे तृतीयोऽध्यायः

सनत्कुमारः—

पुराणं तु प्रवक्ष्यामि संक्षेपेण यथातथम् ।
भगवत्यनिरुद्धे तु संप्रबुद्धे महार्णवे ॥ १ ॥

[1]अवगत्य महीं मग्नां [2]सार्णवां सधराधराम् ।
तामुद्धर्तुमभूच्चिन्ता परस्य परमेष्ठिनः ॥ २ ॥

तस्य चिन्तयतश्चित्ताद्वाराहं रूपमद्भुतम् ।
सद्य आविरभूद्रम्यं महाबलपराक्रमम् ॥ ३ ॥

दीप्तदंष्ट्रं महाकायं महाबाहुसमन्वितम् ।
कालमेघप्रतीकाशमञ्जनाचलसंनिभम् ॥ ४ ॥

अप्रमेयमनिर्देश्यं संपूर्णाखिलदिङ्मुखम् ।
सृष्ट्वा त्वत्यद्भुतं रूपं तद्वाराहमुखं पुनः ॥ ५ ॥

भूमेरुद्धरणे यत्नमनिरुद्धस्त्वमन्यत ।
स ब्रह्ममयदेहस्तु वाराहवदनो हरिः ॥ ६ ॥

मग्नः समुद्रादुत्तस्थौ भूमिमादाय दंष्ट्रया ।
तत्पार्ष्णिभागसंलीनाः समुद्राः सर्व एव हि ॥ ७ ॥

[1] Corrupt reading B

[2] सार्णवैः सधराधरैः A B

मेरोरधित्यकायां तु एका मुस्ता यथा स्थिता ।
तथा वाराहदंष्ट्रायां भूमिः सर्वाप्यदृश्यत ॥ ८ ॥

स्थापयित्वा महीं सम्यक् समुद्रान्तां यथापुरम् ।
संक्षिप्य च स्वयं देवो वाराहं [1]रूपमद्भुतम् ॥ ९ ॥

प्राच्यां दिशि समासीनः सुखमासीत् सुरेश्वरः ।
नारसिंहं ततो वक्ष्ये पुराणमिदमुत्तमम् ॥ १० ॥

हिरण्यकशिपुर्नाम दुर्जयोऽभून्महासुरः ।
बलेन तेजसा चैव सर्वदेवानपीडयत् ॥ ११ ॥

पीडिताश्च सुराः सर्वे दानवेन दुरात्मना ।
शरणं रुद्रमाजग्मुः संत्रस्ताकुलचेतसः ॥ १२ ॥

[2]रुद्रस्तु सह देवैस्तु ब्रह्माणं शरणं गतः ।
ब्रह्मा तैरेव सर्वैस्तु संत्रस्ताकुलमानसः ॥ १३ ॥

अनिरुद्धं महादेवं शरण्यं शरणं गतः ।
तं दृष्ट्वा नागशय्यायामुत्थितः पुरुषोत्तमः ॥ १४ ॥

दृष्ट्वा चैव सुरान् सर्वान् प्रोवाच परमेश्वरः ।
पश्चादासनदानेन चतुर्मुखमपूजयत् ॥ १५ ॥

तेन प्रसादचिह्नेन प्रत्याश्वस्तास्ततः सुराः ।
बद्धाञ्जलिपुटाः सर्वे स्तोत्रमेतदुदैरयन् ॥ १६ ॥

[1] वपुरद्भुतम् B

[2] रुद्रस्त्वरेण B E

देवाः—

नमः सर्वविदे तुभ्यं विष्णवे प्रभविष्णवे ।
अस्माकमापदं प्राप्तामपनेतुं त्वमर्हसि ॥ १७ ॥

हिरण्यकशिपुर्नाम दानवेन्द्रो महाबलः ।
स्वयंभूवरदानेन अवध्यत्वमुपागतः ॥ १८ ॥

बाधते दर्पसंयुक्तः सुरपुष्टिं समत्सरः ।
अवश्यं तद्वधोपायश्चिन्त्यतां भवताधुना ॥ १९ ॥

इति [1]विज्ञापितो देवैरनिरुद्धः सुरेश्वरः ।
नारसिंहं परं रूपं चिन्तयामास तत्क्षणात् ॥ २० ॥

तस्य चिन्तयतश्चित्ताद्रूपमाविरभूच्च तत् ।
[2]सिंहवक्त्रं नराकारं प्रदीप्ताङ्गारलोचनम् ॥ २१ ॥

चन्द्ररश्मिप्रतीकाशं भैरवं भयनाशनम् ।
नारसिंहं तु तं दृष्ट्वा चतुर्बाहुं सितप्रभम् ॥ २२ ॥

शङ्खचक्रगदापाणिं सर्वे प्राञ्जलयः स्थिताः ।
[3]नारसिंहं परं मन्त्रं [4]जगुः सर्वे दिवौकसः ॥ २३ ॥

तेन मन्त्रस्तवेनासौ प्रीतिमानभवत् स्वयम् ।
ततस्तद्वचमाश्रुत्य[5] देवेभ्यस्त्रिदशेश्वरः ॥ २४ ॥

[1] विज्ञापिते E
[2] सिंहवक्त्र B
[3] नारसिंहमपां B
[4] जग्मुः B
[5] आश्रित्य B

हिरण्यकशिपुं हन्तुं निर्जगाम ततः क्षणात् ।
संध्याकाले समासाद्य [1]देहल्यामसुरेश्वरम् ॥ २५ ॥

ऊरुयुग्मे तु विन्यस्य वक्षस्तस्य न्यदारयत् ।
तं हत्वा नारसिंहस्तु देवानां हितकाम्यया ॥ २६ ॥

दक्षिणां दिशमासाद्य निषसाद सुरेश्वरः ।
मात्स्यं तु कथयाम्यद्य पुराणमृषिसत्तमाः ॥ २७ ॥

दानवेन्द्रौ समुद्भूतौ मधुकैटभसंज्ञितौ ।
तौ वेदान् ब्रह्मणो हृत्वा वेगेन बलगर्विनौ ॥ २८ ॥

[2]समुद्रकुक्षेर्निर्गत्य देवान् सर्वान् न्यगृह्णन ।
[3]हन्तुं प्राप्तेषु सर्वेषु ब्रह्मा ब्रह्मविदां वरः ॥ २९ ॥

ततः संकर्षणं देवं ब्रह्मा स शरणं गतः ।
ज्ञात्वा तस्य [4]भयं देवो वेदाहरणजं महत् ॥ ३० ॥

तत्प्रत्याहरणे चिन्तामकरोदमितप्रभः ।
तस्य चिन्तयतश्चित्तान्मत्स्यरूपमजायत ॥ ३१ ॥

तत् समुद्रं समासाद्य बभ्राम सकलार्णवम् ।
क्वचित् प्रदेशे संलीनान् वेदानम्बुपटावृतान् ॥ ३२ ॥

दृष्ट्वा जग्राह सहसा स तु मत्स्यः सनातनः ।
उज्जहार ततो वेदान् पुरस्ताद् ब्रह्मणः स्थितः ॥ ३३ ॥

[1] देहल्याम B
[2] समुद्रकुक्षौ B
[3] हर्तुं E
[4] मतं E

[1]तान् दृष्ट्वा सहसा ब्रह्माहृतान् [2]प्राश्नात् स तत्क्षणात् ।
प्राशितेष्वथ वेदेषु ब्रह्मणा परमेष्ठिना ॥ ३४ ॥

निवृत्तकृत्यो मत्स्योऽथ चचारार्णवमण्डले ।
कूर्मं तु कथयाम्यद्य पुराणमृषिसत्तमाः ॥ ३५ ॥

पुरा मन्वन्तरे देवा वलीपलितसंयुताः
दुःखेन [3]भृशसंतप्तास्ततः संकर्षणं गताः ॥ ३६ ॥

चिन्तयंस्तत्प्रतीकारं कूर्मरूपमचिन्तयत् ।
अकूपार इति ख्यातः कूर्मश्चित्तादजायत ॥ ३७ ॥

तस्य पृष्ठे तु निक्षिप्य मन्दरं धरणीधरम् ।
ममन्थुस्त्रिदशाः सर्वे सागरं तेन भूभृता ॥ ३८ ॥

मथ्यमानात्तु जलधेरमृतं समजायत ।
भुक्त्वा तदमृतं देवाः पुनर्यौवनमाययुः ॥ ३९ ॥

एवं कृत्वाथ तत् कूर्मः पूज्यमानः सुरोत्तमैः ।
सरितः सागराञ्छैलान् विचचार यथासुखम् ॥ ४० ॥

वक्ष्ये तार्क्ष्यपुराणं तु यथावन्मुनिसत्तमाः ।
वालखिल्यैर्मुनिवरैः सुरेन्द्रेणावमानितैः ॥ ४१ ॥

याचितस्तपसा देवस्ततस्तार्क्ष्यः प्रजापतिः ।
आराधयत् सपत्नीको महाविष्णुं सुरेश्वरम् ॥ ४२ ॥

[1] तं B
[2] माप्राशलक्षणान् B
[3] हृतसंत्रस्ताः B

तेन चाराधितः प्रीतो भगवान् भक्तवत्सलः ।
विष्वक्सेनं समालोक्य पार्श्वस्थं प्राह स स्वयम् ॥ ४३ ॥

पुत्रत्वे त्वां नियोक्ष्यामि [1]तस्य पारिषदेश्वर ।
तस्य तद्वचनं श्रुत्वा विष्वक्सेनः प्रणामवान् ॥ ४४ ॥

अत्यन्तमभवत् प्रीतस्तत्र पारिषदेश्वरः ।
प्रसादं स्वामिनो ज्ञात्वा तत्कर्मत्वे न्ययोजयत् ॥ ४५ ॥

विनतायामभूद् गर्भस्तार्क्ष्येणोत्पादितः स तु ।
स पुनर्भिन्नवृद्धाण्डः पक्षी जातोऽरुणानुजः ॥ ४६ ॥

स पुनर्वालखिल्यानां प्रीत्यर्थं बलगर्वितः ।
सर्पाणां मर्दनार्थं च मातुश्च प्रियकाम्यया ॥ ४७ ॥

सोमपालान् विनिर्जित्य परिभूय शतक्रतुम् ।
जहार सोमं पक्षीन्द्रः पपौ च विनतासुतः ॥ ४८ ॥

पीत्वा तदमृतं दृप्तः सर्वलोकान् विहाय सः ।
वाहनत्वं समासाद्य गत्वा विष्णोः स्वय ययौ ॥ ४९ ॥

पुराणं वामनं वक्ष्ये यथावद्दषिसत्तमाः ।
अदित्यां कश्यपाज्जातो विष्णुर्द्वादशधा किल ॥ ५० ॥

धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यश्च तथैव च ॥ ५१ ॥

[1] वद B E

त्वष्टा चैवाथ विष्णुश्च इति [1]नाम्ना तु देवताः ।
सुराधिपत्ये चैतेषामिन्द्र एव[2] नियोजितः ॥ ५२ ॥

तस्मादिन्द्रो जगत् सर्वं भासते स्वेन तेजसा ।
बलिर्वैरोचनो नाम दानवेन्द्रो महाबलः ॥ ५३ ॥

जहार शक्रस्वं देवानवमत्य बलोद्धतः ।
दुर्जयं तं ततो ज्ञात्वा कनिष्ठो विष्णुरव्ययः ॥ ५४ ॥

वर्तमाने मखे तस्य वितते वामनः स्वयम् ।
स ततो द्विजरूपेण पदत्रयमयाचत ॥ ५५ ॥

वारितोऽपि बलिस्तस्मै तदाश्रुत्य ददौ स्वयम् ।
ततः [3]पदद्वयेनासौ सर्वलोकं जहार ह ॥ ५६ ॥

[4]अवशिष्टेन पश्चात् तं[5] कृत्वा पातलगोचरम् ।
ततश्च त्रिदशाः सर्वे निर्वृताः सर्व एव हि ॥ ५७ ॥

पुराणमपि वक्ष्यामि क्रमेण हयशीर्षकम् ।
पुनरेव ततो वेदा ब्रह्मणस्तु हृताः किल ॥ ५८ ॥

ततो हृतेषु वेदेषु ब्रह्मा प्रद्युम्नमाययौ ।
प्रद्युम्नस्तु ततो ज्ञात्वा सवेदं हयशीर्षकम् ॥ ५९ ॥

असृजन्मानसं पुत्रं रक्ताङ्गं तु चतुर्भुजम् ।
शङ्खचक्रगदापाणिः स पुनर्हयशीर्षकः ॥ ६० ॥

[1] नामास्तु B [2] एवं E [3] पदत्रयेणासौ B E
[4] अवशिष्टस्य B E [5] तु B E

समुद्रेणोत्तरे स्थित्वा वेदानध्यापयच्च तम् ।
तस्मादधीतवेदोऽसौ ब्रह्मा ब्रह्मविदां वरः ॥ ६१ ॥

कृतार्थस्तं प्रणम्याशु वैराजमगमत् पदम् ।
ततश्च कापिलं वक्ष्ये पुराणमृषिसत्तमाः ॥ ६२ ॥

ततो नष्टेषु सर्वेषु ज्ञानेषु द्विजसत्तमाः ।
जग्मुः संकर्षणं देवं तत्प्रतीकारचिन्तया ॥ ६३ ॥

संकर्षणस्ततो देवः ससर्ज कपिलं हरिम् ।
स पुनर्भगवान् ज्ञानं सांख्यं नाम महामतिः ॥ ६४ ॥

व्याचष्ट भगवान् सर्वं पातालनलमाश्रितः ।
एवं ज्ञानसमायुक्ताः सेश्वराश्च सुरेश्वराः ॥ ६५ ॥

तेन ज्ञानेन देवास्तु योजिताश्च यथाविधि ।
पुराणं जामदग्न्याख्यं कथयामि यथातथम् ॥ ६६ ॥

संकर्षणस्तु भगवान् हेतुना केनचित् पुरा ।
जमदग्निसुतो भूत्वा चचार पृथिवीमिमाम् ॥ ६७ ॥

तस्मिंश्चरति रामे तु दानवाः सर्व एव हि ।
पृथिव्यां क्षत्रिया भूत्वा चेरुर्बलसमन्विताः ॥ ६८ ॥

तान् सर्वान् हन्तुकामोऽसौ निमित्तीकृत्य हैहयम्[1] ।
परश्वधेन तान् सर्वांश्चिच्छेद बलगर्वितान् ॥ ६९ ॥

1 हेहयम् A B

निहत्य क्षत्रियान् सर्वानाग्नेयीं दिशमाश्रितः ।
पुराणं चापि काकुत्स्थं कथयामि यथातथम् ॥ ७० ॥

देवास्तु राक्षसेन्द्रेण रावणेन बलात्कृताः ।
[1] . . . . . . . .
तामाज्ञां व्यचरत् कृत्वा ततः साकेतवासिनः ॥ ७१ ॥

गृहीत्वाभ्यागमत् तुष्टस्ततः पश्चिमदक्षिणम् ।
ततः स्वर्गान्तरं कृत्वा तेषां तु हितकाम्यया ॥ ७२ ॥

निवृत्तः स यथाकामं भगवानभवत् पुनः ।
पुराणं सात्त्वतं वक्ष्ये यथावत् तन्निबोधत ॥ ७३ ॥

[2]हतास्तु दानवाः सर्वे समरे तारकामये ।
ते भूमौ तु समुत्पन्नाः सर्वे विष्णुभयार्दिताः ॥ ७४ ॥

तांस्तु वोढुमशक्ता भूरतः श्रमनिर्पीडिता ।
तत्प्रतीकारबुद्ध्या तु वासुदेवं सनातनम् ॥ ७५ ॥

अगमद्वसुधा देवं शरणं शरणार्थिनी ।
तां दृष्ट्वा भारदुःखार्तां भगवान् भक्तवत्सलः ॥ ७६ ॥

भारावतरणार्थं च धर्मं स्थापयितुं भुवि ।
वसुदेवसुतो भूत्वा देवक्यां समजायत ॥ ७७ ॥

ततः सर्वासुरान् भूमौ क्षत्रजन्मन्यवस्थितान् ।
योधयित्वा निहत्याशु भूमेर्भारमपानयत् ॥ ७८ ॥

[1] Gap in all manuscripts.

[2] ततस्तु B E

स पुनः सात्त्वते यस्मात् कुले जातः सुरेश्वरः ।
तस्मात्तु सात्त्वतं नाम पुराणं कोविदा विदुः ॥ ७९ ॥

[1]उपदिष्टं पञ्चरात्रं तेन लोकहितैषिणा ।
[2]आहुकांस्तु समुद्दिश्य तेन सात्त्वतमुच्यते ॥ ८० ॥

ये तस्य शिष्यास्तद्भक्तास्ते सर्वे सात्त्वताः स्मृताः ।
केचित् तान् सात्त्वतानाहुः केचिद्भागवतान् विदुः ॥ ८१ ॥

केचिच्च वैष्णवानाहुः केचित् तान् पाञ्चरात्रिकान् ।
इति नाम्ना तु भेदेन दीक्षिता वैष्णवाः स्मृताः ॥ ८२ ॥

पूजयन्ति महाविष्णुं सदाविष्णुपरायणाः ।
एवं पुराणं सर्वं वः कथितं सात्त्वतं मया ॥ ८३ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् इन्द्ररात्रे
पुराणाध्यायस्तृतीयः

1 विदुर्व्याख्यां B

2 आहुरेतान् A B

## इन्द्ररात्रे चतुर्थोऽध्यायः

सनत्कुमारः—

अथ यागं प्रवक्ष्यामि यथावर्णानुपूर्वशः ।
ब्राह्मणः प्रविशेद् दीक्षां वासन्ते चक्रमण्डले ॥ १ ॥

वासन्तो ब्राह्मणो ज्ञेयो ब्रह्मयोनिर्विशेषतः ।
तस्माद्वसन्ते यष्टव्यं ब्राह्मणेन विजानता ॥ २ ॥

ग्रीष्मे तु प्रविशेद् दीक्षां क्षत्रियश्चक्रमण्डले ।
ग्रैष्मस्तु क्षत्रियो ज्ञेयः क्षत्रयोनिर्विशेषतः ॥ ३ ॥

शरदि प्रविशेद् दीक्षां वैश्यो वै चक्रमण्डले ।
वैश्यस्तु शारदो ज्ञेयो वैश्ययोनिः प्रकीर्त्यते ॥ ४ ॥

हेमन्ते प्रविशेद् दीक्षां सच्छूद्रश्चक्रमण्डले ।
शूद्रश्चैव तु हैमन्तः शूद्रयोनिः प्रकीर्त्यते ॥ ५ ॥

वर्षासु प्रविशेद्दीक्षां स्त्रीजनश्चक्रमण्डले ।
वर्षा स्त्री चेति विज्ञेया स्त्रीयोनिश्चेति कीर्तिना ॥ ६ ॥

शिशिरे प्रविशेद् दीक्षां सूतो वै चक्रमण्डले ।
सूतस्तु शैशिरो ज्ञेयः सूतयोनिस्तु कीर्तिनः ॥ ७ ॥

दीक्षामथानुलोम्येन प्रविशेत् सर्व एव हि ।
वर्जयेत् प्रतिलोमं तु पातनीयं न संशयः ॥ ८ ॥

स्त्रीणां चैव तु शूद्राणां सूतानां च यथाक्रमम् ।
स्व एव कालो निर्दिष्टो विपरीतं तु वर्जयेत् ॥ ९ ॥

सर्वेषु च द्विजातीनां सर्वेषां सा प्रशस्यते ।
प्रोक्तं तन्मण्डलाध्याये ब्रह्मरात्रे यथाविधि ॥ १० ॥

सर्वमेव सविस्तारं यागमण्डपलक्षणम् ।
मण्डलस्य प्रकारं तु तत्रैव कथितं मया ॥ ११ ॥

सकलं विकलं चैव निष्कलं च यथाविधि ।
यागभेदत्रयं चापि तत्रैव कथितं मया ॥ १२ ॥

दीक्षाध्याये च दीक्षाया ब्रह्मरात्रे मया कृतम् ।
एवं सर्वं समालोक्य सर्वमन्त्रविचक्षणः ॥ १३ ॥

कारयेन्मण्डपं चापि मण्डलं च विचक्षणः ।
दीक्षां चापि तथा कुर्याद्विशेषं कथयामि वः ॥ १४ ॥

रजो वर्णानुपूर्व्येण[1] केचिदिच्छन्ति पण्डिताः ।
केचित् पूर्वोक्तविधिना रजो यागे प्रचक्षते ॥ १५ ॥

रजः स्वमेव शस्तं स्यात् प्रथमे यागकर्मणि ।
आनुलोम्यं प्रशस्तं स्यात् प्रातिलोम्यं तु वर्जयेत् ॥ १६ ॥

स्तोमादौ मिश्रितं कुर्यान्महेन्द्रस्य मतं तथा ।
अष्टौ तु कलशास्तत्र द्वारान्तर्ये प्रतिष्ठिताः ॥ १७ ॥

[1] पूर्वेण B E

शतं तु दक्षिणा चात्र श्वेताश्वश्चापि दक्षिणा ।
ततः स्त्रीशूद्रसूतानां कृष्णमेव रजः स्मृतम् ॥ १८ ॥

पश्चाद्भागवतानां च दक्षिणा शतमेव हि ।
एषां सकलयागे तु दक्षिणा समुदाहृता ॥ १९ ॥

अश्वस्तु विकले प्रोक्तो निष्कले वस्त्रमेव तु ।
कलशाः सर्वदा याग आसनं शयनं तथा ॥ २० ॥

याग एष मया प्रोक्तः स्तोमं तु कथयामि वः ।
मिश्रं तत्र रजःपातं कुर्यात् तन्त्रविचक्षणः ॥ २१ ॥

कुर्याद्वा दशकुम्भं तु बहिरावरणाद्बहिः ।
प्राच्यां कलशयोर्मध्ये वाराहासनमुत्तमम् ॥ २२ ॥

नारसिंहासनं चाथ दक्षिणस्यां विधीयते ।
[1]पश्चिमायां ततः कुर्याच्छ्रीधरासनमुत्तमम् ॥ २३ ॥

हयवक्त्रासनं कुर्यादुत्तरस्यां यथाविधि ।
ततश्चाभिमुखाः स्थाप्याश्चत्वारो दीक्षिताः क्रमात् ॥ २४ ॥

दर्भासने समासीना जपन्तो द्वादशाक्षरम् ।
नवाम्बरधराः सर्वे बद्धोष्णीषाः पृथक् पृथक् ॥ २५ ॥

पूर्वोक्ता द्विगुणा चात्र दक्षिणा समुदाहृता ।
आचार्यः पादुके दद्याच्छिष्याय श्रद्धयान्वितः ॥ २६ ॥

[1] पश्चिमस्यां B E

स्तोम एष मया प्रोक्तो महायागं ब्रवीमि वः ।
स्तोमवन्मण्डलं कुर्यात् बहिरावरणं ततः ॥ २७ ॥

चतुर्विंशतिसंख्याताः[1] कलशाः पूर्वलक्षणाः ।
बहिस्तृतीयावरणात् पूर्ववद् द्वादशैव तु ॥ २८ ॥

अन्तस्तृतीयावरणात् तथैव द्वादशैव तु ।
आसनं पूर्ववत् कुर्याच्चतुर्दिक्षु यथाविधि ॥ २९ ॥

कोणेषु च तथा कुर्यादासनानि यथाक्रमम् ।
आग्नेये जामदग्न्यीयं भवेदासनमुत्तमम् ॥ ३० ॥

नैर्ऋत्यां चैव रामस्य वायव्यां वामनस्य च ।
ईशाने वासुदेवस्य भवेदासनमुत्तमम् ॥ ३१ ॥

अत्र भागवतालाभे दिक्ष्वेवंविधकर्मणि ।
कुर्याद् दर्भं पवित्रं वा केवलासनमेव वा ॥ ३२ ॥

कलशस्त्वेक एव स्याद्वासुदेवस्य मण्डले ।
अष्टदिक्षु तथा चाष्टौ स्युर्नारायणमण्डले ॥ ३३ ॥

तृतीयावरणादेव तदा चाष्टौ प्रकीर्तिताः ।
आसनानि यथापूर्वमत्राप्यासु च दिक्षु च ॥ ३४ ॥

दक्षिणां त्रिगुणां दद्यादश्वमेकं तथैव च ।
चतुर्थावरणं चात्र न कदाचन विद्यते ॥ ३५ ॥

[1] संप्रोक्ताः B

दद्याच्छत्रं तु शिष्याय पूर्ववत् पादुके तथा ।
चक्रवर्ती भवेन्नाम्ना महायागे तु दीक्षितः ॥ ३६ ॥

महायाग इति प्रोक्तः प्रवक्ष्याम्यध्वरं ततः ।
अन्तर्द्वितीयावरणात् तथैव कलशा अपि ॥ ३७ ॥

पूर्वोक्ताश्च तथा स्थाप्या आसनादीनि कारयेत् ।
रजःपातं तथा कुर्याद् दक्षिणा पूर्ववत् तथा ॥ ३८ ॥

अभिषेकं तु शिष्याय दद्यादासनमेव तु ।
अभिषिक्त इति प्रोक्तः सोऽध्वरे दीक्षितो नरः ॥ ३९ ॥

अध्वरस्तु मया प्रोक्तः सवं तु कथयामि वः ।
प्रथमावरणादन्तः कलशान् पूर्ववन्न्यसेत् ॥ ४० ॥

तोरणेषु बहिर्द्वारे तथैवाष्टौ तु विन्यसेत् ।
रत्नगर्भाः सवस्त्रास्तु सर्वे तु कलशाः स्मृताः ॥ ४१ ॥

सहस्रं दक्षिणा चात्र दद्यादष्टोत्तरं तथा ।
किरीटाकारमुष्णीषं नववस्त्रमयं तथा ॥ ४२ ॥

शिष्याय दद्यादाचार्यस्तथा क्षौममयं तु वा ।
गुरुर्नाम भवेच्छिष्यो दीक्षितश्च भवेत्तु यः ॥ ४३ ॥

सवश्चैष समाख्यातः क्रतुं च कथयामि वः ।
शुक्लेन रजसा सर्वं मण्डलं तु प्रवर्तयेत् ॥ ४४ ॥

पूर्ववत् कलशान् सर्वान् स्थापयित्वा यथाविधि ।
दक्षिणां पूर्ववद् दद्यात् सवे प्रोक्ता तु या मया ॥ ४५ ॥

ततश्च दक्षिणावर्तं शङ्खं शिष्याय दापयेत् ।
क्रतौ तु दीक्षितस्त्वेवमाचार्यः परिकीर्तितः ॥ ४६ ॥

एवं क्रतुर्मया प्रोक्तो हरिस्तोमं ब्रवीमि वः ।
लोहजं च रजश्चात्र कलशा लोहसंभवाः ॥ ४७ ॥

पालिका लोहजाश्चैव क्षौमं वै वस्त्रकर्मणि ।
एवं वितानके चापि सर्वे क्षौममयाः स्मृताः ॥ ४८ ॥

क्षौमवासा गुरुश्चैव शिष्याश्चैव तथाविधाः ।
शिष्याश्चैव तथाचार्याः सर्वाभरणभूषिताः ॥ ४९ ॥

सहस्रं दक्षिणाचार्ये भक्तेषु च शतं शतम् ।
आत्मीयाभरणं सर्वमाचार्याय निवेदयेत् ॥ ५० ॥

ग्रामयानासनादीनि यथाशक्ति निवेदयेत् ।
भगवानिति विख्यातो हरिस्तोमे तु दीक्षितः ॥ ५१ ॥

शङ्खचक्रगदापाणिः पीतवासा हविष्यभुक् ।
अतः परं न यागस्तु हरिस्तोमाद्विशिष्यते ॥ ५२ ॥

सर्वपापविनिर्मुक्तः पदं गच्छति वैष्णवम् ।
यागे तु समयी ज्ञेयः स्तोमे वै दीक्षितः स्मृतः ॥ ५३ ॥

चक्रवर्ती महायागे अध्वरे चाभिषिक्तकः ।
सवे चैव गुरुः प्रोक्त आचार्यः स्तोमतो भवेत् ॥ ५४ ॥

भगवांस्तु हरिस्तोमे फलं दशगुणोत्तरम् ।
संक्षेपात् सप्त यागास्तु कथिता वः समासतः ॥ ५५ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् इन्द्ररात्रे
यागविधिर्नाम चतुर्थोऽध्यायः

## इन्द्ररात्रे पञ्चमोऽध्यायः

सनत्कुमारः—

परिवारान् प्रवक्ष्यामि यथाहेन्द्रः पुरा मम ।
त्रिविधाः परिवारास्तु तन्त्रेऽस्मिन् कथिता मया ॥ १ ॥

अर्चितस्य तु देवस्य विष्णोर्नारायणस्य हि ।
उत्तमा मध्यमाश्चापि अधमा इति भेदतः ॥ २ ॥

अतः पूर्वं प्रवक्ष्यामि स्थितस्य परमेष्ठिनः ।
ब्रह्मा तु दक्षिणे पार्श्वे वामपार्श्वे सदाशिवः ॥ ३ ॥

चन्द्रार्कौ पृष्ठतः कार्यौ दक्षिणोत्तरपार्श्वयोः ।
तथा चामरहस्ते तु लक्ष्मीः श्रीरिति पृष्ठतः ॥ ४ ॥

अर्चनापीठपार्श्वे तु मार्कण्डेयो मही तथा ।
उत्तमास्तु परीवाराः स्थितस्यैते प्रकीर्तिताः ॥ ५ ॥

ब्रह्मेश्वरविहीनास्तु मध्यमाः परिकीर्तिताः ।
ब्रह्मरुद्रेन्दुसूर्यैस्तु विहीनाश्चाधमाः स्मृताः ॥ ६ ॥

आसीनस्य प्रवक्ष्यामि परिवारान् हरेः प्रभोः ।
दक्षस्तु दक्षिणे पार्श्वे वामपार्श्वे मनुस्तथा ॥ ७ ॥

चामरव्यग्रहस्ते तु रतिश्चैव सरस्वती ।
भित्तिभागे तु कर्तव्यौ चन्द्रादित्यौ तथोपरि ॥ ८ ॥

भृगुश्च नारदश्चैव अर्चनापीठपार्श्वयोः ।
आसीनस्य परीवारा उत्तमाः परिकीर्तिताः ॥ ९ ॥

मनुदक्षविहीनास्तु मध्यमाः परिकीर्तिताः ।
मनुदक्षेन्दुसूर्यैस्तु विहीनाश्चाधमाः स्मृताः ॥ १० ॥

स्थितस्य तु परीवाराः स्थिता एव न संशयः ।
आसीनस्य तथासीनाः [1]परिवाराः प्रकीर्तिताः ॥ ११ ॥

अर्चनापीठपार्श्वस्था आसीना एव नित्यशः ।
चामरव्यग्रहस्ते तु स्थिते एव न संशयः ॥ १२ ॥

सहासने न कुर्वीत विष्णोः किंचिच्च दैवतम् ।
देव एवासने कार्यः परिवारास्त्वनासनाः ॥ १३ ॥

सहासनं तु यः कुर्याल्लोभात्[2] किंचिच्च दैवतम् ।
विनाशं प्रतियात्याशु कारकः स्थापकस्तथा ॥ १४ ॥

तस्मात् सर्वप्रयत्नेन वर्जयेच्च सहासनम् ।
एषामन्यतमं ग्राह्यं यानगे [3]परमेष्ठिनि ॥ १५ ॥

उत्तमाधमयोगेन सर्वथा कर्तुरिच्छया ।
वक्ष्ये बहिः परीवारान् यथावदनुपूर्वशः ॥ १६ ॥

प्रासादमात्रमर्धं वा तदध्यर्धं तु वा पुनः ।
प्राकारालययोः कुर्यादन्तरं तन्त्रवित्तमः ॥ १७ ॥

[1] स्थिता एव B [2] लोहात् B [3] परमेष्ठिना B

अध्यर्धमुत्तमं ज्ञेयं तन्मात्रं मध्यमं स्मृतम् ।
तदर्धमधमं विद्यादन्तरं सालगेहयोः ॥ १८ ॥

धामगोपुरयोर्मध्ये विधिनैव विभाजिते ।
भागे गोपुरपार्श्वे तु वैनतेयालयं भवेत् ॥ १९ ॥

गोपुरात्तु बहिः पार्श्वे तावन्मानेन भाजिते ।
गोपुरस्य द्वितीयस्य पार्श्वे चक्रालयं भवेत् ॥ २० ॥

द्वितीयस्य बहिः पश्चान्मानेनैव विभाजिते ।
गोपुरस्य तृतीयस्य बहिः शङ्खालयं भवेत् ॥ २१ ॥

शङ्खगोपुरयोर्यावदन्तरं तस्य बाह्यतः ।
तावद्दूरं तु कुर्वीत बलिपीठं विचक्षणः ॥ २२ ॥

उत्तमास्तु परीवारा बहिरावर्ण स्मृताः ।
मध्यमं शङ्खहीनं तु चक्रहीनं तथाधमम् ॥ २३ ॥

अष्टौ स्युरधमे चैव परिवाराः समन्ततः ।
इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा ॥ २४ ॥

वायुं सोमं तथेशानमष्टौ कुर्याद्विचक्षणः ।
मध्यमे दश संप्रोक्ताः [1]परिवाराः समन्ततः ॥ २५ ॥

आग्नेये भित्तिकोणे तु नरं कुर्याद्विचक्षणः ।
नारायणं निर्ऋत्यां तु हरिं वायव्यगोचरे ॥ २६ ॥

[1] परीवाराः B

कृष्णं चैव तथैशाने चतुर्धांशीकृते क्रमात् ।
द्वयोस्तु भागयोः प्राच्यामुत्तरे दक्षिणे तथा ॥ २७ ॥

मृगव्याधश्च शर्वश्च क्रमात् कार्यौ विचक्षणैः ।
पिनाकिनं च निर्ऋतिं दक्षिणे मध्यभागयोः ॥ २८ ॥

कपालिनं चेश्वरं च पश्चिमे मध्यभागयोः ।
स्थाणुं चैव भवं चैव उत्तरे मध्यभागयोः ॥ २९ ॥

मध्यमास्तु परीवारा द्वादशैते प्रकीर्तिताः ।
उत्तमाः षोडश प्रोक्तास्तान् वै[1] वक्ष्यामि च क्रमात् ॥ ३० ॥

कौशिकं च गणेशं च कंदर्पं स्कन्दमेव च ।
आग्नेयादिषु कोणेषु यथासंख्यं प्रकल्पयेत् ॥ ३१ ॥

वाराहं नारसिंहं च श्रीधरं हयशीर्षकम् ।
ऐन्द्र्याद्यासु महादिक्षु यथासंख्येन कल्पयेत् ॥ ३२ ॥

मध्ये [2]वाराहकौशिक्योर्धातारं विनिवेशयेत् ।
मध्ये नृसिंहकौशिक्योः कुर्यादर्यमणं बुधः ॥ ३३ ॥

गणेशसिंहयोर्मध्ये कुर्यान्मित्रं विचक्षणः ।
श्रीधरस्य गणेशस्य मध्ये तु वरुणं न्यसेत् ॥ ३४ ॥

कामश्रीधरयोर्मध्ये कुर्यादंशं विचक्षणः ।
भगं तं विन्यसेन्मध्ये हयशीर्षककामयोः ॥ ३५ ॥

[1] तेषां B [2] वराह B

पर्जन्यं विन्यसेन्मध्ये हयवक्त्रकुमारयोः ।
त्वष्टारं विन्यसेन्मध्ये वाराहस्कन्दयोस्तथा ॥ ३६ ॥

एते बहिः परीवारा उत्तमाः परिकीर्तिताः ।
शून्ये बहिः परीवाराः कार्या वै सप्त मातरः ॥ ३७ ॥

उच्यन्ते क्रमयोगेन सप्त वैष्णवमातरः ।
वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च ॥ ३८ ॥

विद्या कान्तिश्च सप्तैता मातरः परिकीर्तिताः ।
उत्तरस्यां दिशि सदा कार्या रक्षानिमित्ततः[1] ॥ ३९ ॥

विष्वक्सेनमथैशान्यां कुर्यात् तन्त्रविचक्षणः ।
द्वितीयावरणादन्तः प्रथमावरणाद्बहिः ॥ ४० ॥

मातॄणामालयं कुर्याद् दक्षिणद्वारमायतम् ।
श्रीधरो हयवक्त्रश्च तासां पर्यन्तपालकौ ।
एवं कृते परीवाराः संपूर्णाः स्युर्न संशयः ॥ ४१ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् इन्द्ररात्रे
परिवाराध्यायः पञ्चमः

[1] निमित्तकः B

# इन्द्रात्रे षष्ठोऽध्यायः

सनत्कुमारः—

विद्येश्वराणामुत्पत्तिं कथयामि यथातथम् ।
चतस्रो मूर्तयः पूर्वं जाता नारायणांशजाः ॥ १ ॥

अव्यक्ताद् वासुदेवाख्यात् सदाविष्णोर्महात्मनः ।
कूटस्थादक्षरात् तस्माद् वासुदेवोऽक्षरोऽजनि ॥ २ ॥

आदिदेवः स देवानामभूद्[1] विग्रहवान् स्वयम् ।
तमाहुः पुरुषं दिव्यं महाविष्णुं महाद्भुतम् ॥ ३ ॥

ईश्वरं सर्वदेवानां लोकानां परमेष्ठिनः ।
कर्तारं सर्वविश्वानां पातारं च स्वयं प्रभुम् ॥ ४ ॥

स पुनर्मानसीं देवीं शान्तिं पूर्वं ससर्ज ह ।
तस्यां शान्त्यां तनो देव्यां क्रमादजनयत् सुतम् ॥ ५ ॥

[2]संकर्षणः स नाम्नाभूद् विष्णुः सर्वत्र संज्ञितः ।
तमेव शंकरं प्राहुः क्षयकर्तारमीश्वरम् ॥ ६ ॥

क्षये संकर्षणात् तस्मात् पुराणज्ञाः प्रचक्षते ।
तस्याथ वामतो देहाच्छ्रीर्देवी समजायत ॥ ७ ॥

[1] योऽभूत् C
[2] संकर्षणाख्यो नामाभूत् C

तस्यां देव्यां ततो देवं जनयामास स प्रभुः ।
प्रद्युम्नाख्यः स पुत्रोऽभूद् ब्रह्मेति परिकीर्तितः ॥ ८ ॥

स पुनर्वाङ्मयीं देवीं ससर्ज तु सरस्वतीम् ।
सृष्टिकर्ता स देवोऽभूत तस्यामजनयत् सुतम् ॥ ९ ॥

अनिरुद्धमिति प्राहुस्तमेव पुरुषोत्तमम् ।
तत्र तेजोमयी देवी रतिरित्यभिसंज्ञिता ॥ १० ॥

तपसा तेजसा सृष्टाः सर्वलोकपितामहाः ।
एव सूक्ष्मशरीरा हि कीर्तिता बहिरण्डजाः ॥ ११ ॥

अर्धमर्धं यथापूर्वं पूर्वात् पूर्वात् प्रहीयते ।
तथा तेजश्च वीर्यं च प्रमाणं चायुरेव च ॥ १२ ॥

क्रमादर्धार्धहीनानि भवन्त्येव न संशयः ।
चतस्रो मूर्तयस्त्वेताः पूर्वा एव चतुर्भुजाः ॥ १३ ॥

शुक्ला रक्ता च पीता च कृष्णा चैव तु वर्णतः ।
शुद्धस्फटिकसंकाशा शान्तिर्देवी च मानसी ॥ १४ ॥

पद्मकिञ्जल्कवर्णाभा श्रीर्देवी पद्मधारिणी ।
गोक्षीरसदृशी शुभ्रा नित्यमेव सरस्वती ॥ १५ ॥

दाडिमीपुष्पसंकाशा रक्ता वै रतिरुच्यते ।
बहिरण्डस्थितास्त्वेताः सर्वाः सूक्ष्माश्च देवताः ॥ १६ ॥

स्थूलसृष्टिमथो वक्ष्ये अन्तरण्डस्थितां शुभाम् ।
अनिरुद्धोऽथ भगवान् ससर्ज प्रथमं जलम् ॥ १७ ॥

शिश्ये तत्र जले देवो मायानिद्रावशं गतः ।
तस्य नाभौ समुद्भूतं महदाख्यं तु पङ्कजम् ॥ १८ ॥

पद्माधरेण तेनाथ [1]वीर्यमादावसृज्यत ।
अण्डं तदभवद्वीर्यमद्भुतं तु हिरण्मयम् ॥ १९ ॥

हिरण्यगर्भ इत्यस्मादण्डात्तु समजायत ।
[2]भूतस्य पतिरेकोऽयं हविषां पतिरग्रतः ॥ २० ॥

तमाहुः पुरुषं दिव्यं ब्रह्म ज्ञेयं [3]पुराविदः ।
स चादिवासुदेवांशः पुरुषस्तु चतुर्मुखः ॥ २१ ॥

स्थूलसृष्टेरयं चादिः पुरुषस्तु हिरण्मयः ।
महानित्युच्यते सोऽयमण्डाधिपतिरव्ययः ॥ २२ ॥

तस्य वामशरीरार्धात् संध्या देवी व्यजायत ।
संध्यायामथ तस्यां तु रुद्र उत्पादितः सुतः ॥ २३ ॥

तं च सत्यमिति प्राहुरहंकारं मनीषिणः ।
संध्यायामेव जाता ये ते मरीच्यादयः सुताः ॥ २४ ॥

सत्यस्य सोदराः सर्वे प्रजासृष्टिविचक्षणाः ।
दक्षादयस्ततो जाता ये प्रजापतयः स्मृताः ॥ २५ ॥

दक्षस्य मानसी कन्या सा [4]सत्याख्या यशस्विनी ।
[5]ततो मनोमयः पुत्रस्तस्य जातोऽच्युताह्वयः ॥ २६ ॥

1 वीर्यमाहुः B; वीर्यमाशु C
2 C omits 6 lines from here.
3 पुराविदम् E
4 सत्याह्वा C
5 तस्यां C

संकर्षणात्तु रुद्राख्यादच्युताख्यो मनोमयः ।
तमाहुरच्युतं साक्षात् प्रद्युम्नं तन्त्रवित्तमाः ॥ २७ ॥

अच्युतादनिरुद्धोऽभूदनिरुद्धांश एव सः ।
स्थूलसृष्टिरियं प्रोक्ता मूर्तीनामन्तरण्डजा ॥ २८ ॥

चतुर्मूर्तिरिति स्थूला अन्तरण्डं तु यत् स्थितम् ।
अष्टौ तु मूर्तयः पश्चात् पुरुषादन्तरण्डजाः ॥ २९ ॥

अग्न्यादयस्तु संजाताः सर्व एव न संशयः ।
अग्निश्च मुखतो जातः पृथिवी पादतोऽजनि ॥ ३० ॥

वायुर्निश्वासतोऽभूत्तु हृदयादन्तरिक्षकम् ।
आदित्यश्चक्षुषो जातो मूर्ध्नो द्यौरप्यजायत ॥ ३१ ॥

चन्द्रस्तु मनसो जातः शुक्रान्नक्षत्रसंज्ञकः ।
एतास्तु मूर्तयस्त्वष्टावष्टाक्षरमयाः स्मृताः ॥ ३२ ॥

सूक्ष्मात्तु वासुदेवाख्याज्जाता द्वादश मूर्तयः ।
ये तु मासाधिपाः प्रोक्ता विष्ण्वाद्याः परिकीर्तिताः ॥ ३३ ॥

एते सूक्ष्माः समाख्याताः सर्वे विद्येश्वरा अमी ।
एतेभ्यो द्वादशेभ्यस्तु निर्गता द्वादशात्मना ॥ ३४ ॥

स्थूलसृष्टेः समुद्भूता अदित्यां काश्यपस्य तु ।
धात्राद्या द्वादश सुताः सर्वे विद्येश्वरा अमी ॥ ३५ ॥

याः षोडश कलाः प्रोक्ताः सदाद्या ब्रह्मसंज्ञिताः ।
ताः सूक्ष्मसृष्टौ संप्रोक्ताः क्रमात् षोडश मूर्तयः ॥ ३६ ॥

मन्त्रोद्धारे तु संप्रोक्ता द्रष्टव्याश्च स्वनामतः ।
माहेन्द्र्यां संज्ञितायां तु कथितं सर्वमेव तत् ॥ ३७ ॥

कलास्ता एव स्थूलेन स्थिताश्चन्द्रमसि क्रमात् ।
विष्णुश्चैव महाविष्णुः सदाविष्णुरिति त्रिधा ॥ ३८ ॥

मूर्तित्रयं समाख्यातं स्थितमत्र गुणत्रयम् ।
तमो विष्णौ रजश्चापि महाविष्णौ प्रतिष्ठितम् ॥ ३९ ॥

सत्त्वं चैव सदाविष्णौ स्थितमेतद्गुणत्रयम् ।
अग्नीषोमीयरूपेण यौ स्थितौ सहितावुभौ ॥ ४० ॥

तौ द्विमूर्ताकृती ज्ञेयौ द्वैताख्यं तद् द्वयं विदुः ।
अद्वैतं तु परं ब्रह्म एकमूर्ति तदुच्यते ॥ ४१ ॥

विष्णूनामिह सर्वेषां प्रवक्ष्यामीह संभवम् ।
यदेकत्र [1]च वाराहे लोके ये तु व्यवस्थिताः ॥ ४२ ॥

ते शतं विष्णवो जाता ब्राह्मणा मन्त्रशक्तिनः ।
एकैकस्य च लोकस्य सहस्रपुरुषस्य ह ॥ ४३ ॥

नायकाः सर्व एवासन्नष्टाक्षरपरायणाः ।
वक्ष्यामि नामान्येतेषां नामनानात्वभेदतः ॥ ४४ ॥

विष्णुर्जिष्णुर्वषट्कारो वाराहो विश्वभुग्विभुः ।
योगीशः सर्वविद्योगी योगाधिष्ठानमुच्यते ॥ ४५ ॥

[1] शिवारोहे B

माहेन्द्रः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ।
महादेवो वासुदेवो देवेशो देवभृद् गुरुः ॥ ४६ ॥

उपेन्द्रः पुण्डरीकाक्षो विश्वेशो विश्वभावनः ।
चित्पतिश्चिन्निधिर्मार्यो यज्ञभुग्यज्ञभृत् कविः ॥ ४७ ॥

अविजः कनको दक्षो विक्षतो रोहितः स्वराट् ।
विश्वमूर्तिरमेयात्मा मायात्मा प्रपिता शुभः ॥ ४८ ॥

भूतावासः सदावासो वसुर्वसुमना मुनिः ।
तीर्थस्तीर्थकरः श्रीमान् विश्वेशो वसुधाधिपः ॥ ४९ ॥

भगवान् भगहा नन्दी नन्दीशो नरकान्तकः ।
निमित्तः कारणः कर्ता क्रिया कार्यो हविष्पतिः ॥ ५० ॥

देवराड् देवनाथश्च देवराजः सनातनः ।
धर्मी धर्मश्च धर्मात्मा धर्मभुग् धर्मसाधनः ॥ ५१ ॥

धनदो धननाथश्च [1]धनवान् धनिनां पतिः ।
परमः परमेष्ठी च परमेश्वर उच्यते ॥ ५२ ॥

शार्ङ्गी चक्री गदी धन्वी हली च हलसाधनः ।
मुसली वनमाली च जगन्नाथो जगत्पतिः ॥ ५३ ॥

भूतकृद् भूतभृद्भूतो भूतात्माथो विभुर्भुवः ।
त्रिविक्रमस्त्रिधामा च त्रयीवासस्त्रयीपतिः ॥ ५४ ॥

[1] धनधावो B

वेदो वेदविदव्यङ्गो वेदाङ्गो वेदविद्विभुः ।
विष्णवः शतमेते तु प्राचीं दिशमुपाश्रिताः ॥ ५५ ॥

आग्नेय्यां दिशि तिष्ठन्ति ये तान् वक्ष्यामि वः क्रमात् ।
रामलोके तु ते[1] लोकाः शतं तिष्ठन्ति शाश्वतम् ॥ ५६ ॥

लोकानां पतयस्त्वेषां शतं वै विष्णवः स्मृताः ।
प्रत्येकं तु सहस्रस्य पुरुषाणां तु नायकाः ॥ ५७ ॥

ते सर्वे क्षत्रकन्यासु द्विजैरुत्पादिताः सुताः ।
विष्णुत्वं भक्तितो याता द्वादशाक्षरविद्यया ॥ ५८ ॥

तेषां नामानि वक्ष्यामि नामनानात्वभेदतः ।
विश्वसृग्विश्वकृत् कृष्णो विष्वक्सेनो जनार्दनः ॥ ५९ ॥

मकुटः पद्मनाभश्च वलक्षो वसुदो वसुः ।
भीमो भीमबलो धाता विधाता विधिरव्ययः ॥ ६० ॥

नागो नागपतिर्नागी नागेशो नागसाधनः ।
मनुजेशो मनुर्मानी मनीषी मतिमान् मतिः ॥ ६१ ॥

हंसः परमहंसश्च सर्वः शर्वः शुचिश्रवाः ।
परः परनरः पक्षः पर्जन्यः पावनोऽनलः[2] ॥ ६२ ॥

शैलधन्वा सुधन्वा च रुद्रो बहुशिरास्तथा ।
सहस्रमूर्धा सर्वेशः सहस्राक्षः सहस्रपात् ॥ ६३ ॥

[1] लोकार्ते: B [2] नग: B

बुद्धिमान् बुद्धितत्त्वज्ञो बुधावासो बुधाधिपः ।
पाञ्चजन्यो हृषीकेशः केशवः क्लेशनाशनः ॥ ६४ ॥

नरो नारायणो ब्रह्मा ब्रह्मविद्विशदः शिवः ।
शुचिः शुचितमः सूर्यो मरीचिश्च मरीचिमान् ॥ ६५ ॥

सविता तपनः सूर्यः सहस्रांशू रसांशुकः ।
तार्क्ष्यकेतुररिष्टारिः सर्वाङ्गः सर्वभावनः ॥ ६६ ॥

अणुर्बृहत् कृशः स्थूलो दीर्घो वामन एव च ।
शार्ङ्गपाणिर्गदापाणिश्चक्रपाणिश्चतुर्भुजः ॥ ६७ ॥

[1]वरेण्यो वरदो वक्ता रक्तः श्यामश्च पिङ्गलः ।
सुकृती च सुकृत् स्वर्गः स्वर्गेशः स्वर्गभावनः ॥ ६८ ॥

वह्निरग्निर्जातवेदाः सप्तजिह्वो हुताशनः ।
शतमेते तु संप्रोक्ता आग्नेय्यां दिशि विष्णवः ॥ ६९ ॥

एतयोर्दक्षिणस्यां तु दिशि ये तान् वदामि वः ।
नारसिंहेऽथ लोके तु शतं लोकाः प्रतिष्ठिताः ॥ ७० ॥

तेषां तु पतयश्चात्र शतं वै विष्णवः स्मृताः ।
ते सर्वे क्षत्रिया एव भक्त्या विष्णुत्वमागताः ॥ ७१ ॥

अष्टाक्षरेण मन्त्रेण सिद्धिं याताः पृथक् पृथक् ।
प्रत्येकं तु सहस्रस्य पुरुषाणां तु नायकाः ॥ ७२ ॥

[1] हिरण्यः B

तेषां नामानि वक्ष्यामि नाम्नां नानात्वभेदतः ।
विक्रमी विक्रमो व्यग्रः समग्रः प्रग्रहस्तथा ॥ ७३ ॥

शक्तः शक्तिधरो धार्यः सुपर्णो भुजगोत्तमः ।
रथी रथाङ्गी रक्षोघ्नो राजा राजीवलोचनः ॥ ७४ ॥

शितश्च शतधामा च धरो धाराधरोऽधिपः ।
ज्योतिर्ज्योतिष्पतिः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ ७५ ॥

सिन्धुः सिन्धुपरः शैलः स्रोतः स्रोतस्वतः पतिः ।
गुणवान् पवनो वायुरनलोऽग्निस्तथैव च ॥ ७६ ॥

असुरारिर्महाविष्णुर्महासेनो महीपतिः ।
भावनो भावभावश्च भवनो भावनाशनः ॥ ७७ ॥

भक्तिर्भक्तप्रियो भक्तो भक्तिमान् भक्तिभावनः ।
स्वापनः स्वपनो व्यापी वीरसेनो वृषाकपिः ॥ ७८ ॥

मनो मनुष्यो मान्यश्च मनोनाथो मनोमयः ।
मनोभवो मनोजातो मनुजेशो महाशनः ॥ ७९ ॥

महान् महत्करश्चैव परो वीरः पराशनः ।
धरणो धारणो रामो मारणो हारणस्तथा ॥ ८० ॥

सत्यः सत्यधरो राशिः प्रद्युम्नोऽमितविक्रमः ।
वर्णोत्तरः सुवर्णश्च वर्णदो वर्णनाशनः ॥ ८१ ॥

वर्णकृद्वर्णभुग्वर्णी वर्णात्मा वर्णभावनः ।
अक्षरात्मा स्वरात्मा च स्वरो व्यञ्जन एव च ॥ ८२ ॥

वाक्यं वाक्यविदर्थश्च विषयो विषयाधिपः ।
एते शतं दिशि प्रोक्ता दक्षिणस्यां तु विष्णवः ॥ ८३ ॥

निर्ऋत्यां ये स्थिता देवास्तान् प्रवक्ष्याम्यशेषतः ।
शतं तु विष्णवस्तेषां नायकाः परिकीर्तिताः ॥ ८४ ॥

क्षत्रियाद्वैश्यकन्यायां जाता वैश्योत्तमास्तु ये ।
विष्णुत्वमागता भक्त्या द्वादशाक्षरविद्यया ॥ ८५ ॥

पुरुषाणां सहस्रस्य प्रत्येकं नायकास्तु ये ।
तेषां नामानि वक्ष्यामि नामनानात्वभेदतः ॥ ८६ ॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः प्रियः ।
हुताशी हुतकर्ता च हुतनाथो हुतप्रियः ॥ ८७ ॥

व्यासश्चैव समासश्च समस्तो व्यस्त एव च ।
वेद्यो विद्येश्वरो व्यापी वीरो धीरो [1]धराधरः ॥ ८८ ॥

धृतिमान् धृतिधृष्टश्च प्रतिमा प्रतियातनः ।
प्रकृतिर्विकृतिश्चैव निकृतिः सुकृतिः कृती ॥ ८९ ॥

निलयोऽनिलयः क्षेत्रः क्षेत्री क्षेत्रज्ञ एव च ।
एको नैको युवा वृद्धो व्यापको व्याप्तिरेव च ॥ ९० ॥

दुःसहो दुर्धरो दुष्टो दुरारोहो दुरागमः ।
दुर्मना दुर्गतिर्दुर्गो [2]दूरगो दुर्गतिस्तथा ॥ ९१ ॥

[1] धरोधरः B [2] दूरतः E

कोमलः कर्कशो व्यामः कठिनो मृदुरेव च ।
ऋजुर्वक्रः कूपावासः कूपावान् कूप एव च ॥ ९२ ॥

दयावान् दानवान् दानी दानदो दान एव च ।
दयावासो दयाचारो दयी दानपरः परः ॥ ९३ ॥

मन्थरो मन्दरो मन्दी मन्दिरो मन्थनस्तथा ।
वार्धिर्वारिधिरक्षोभ्यो मकरी मकरालयः ॥ ९४ ॥

सुद्युम्नो द्युम्नकृद् द्युम्नी प्रद्युम्नो द्युम्न एव च ।
सारथः सारथिः साधुः सर्वावासो वरप्रदः ॥ ९५ ॥

[1]प्रत्ययी प्रत्ययः प्राज्ञः प्रणम्यः प्रणवालयः ।
समना संगतः साङ्गो निरङ्गो निर्ममस्तथा ॥ ९६ ॥

इत्येते विष्णवः प्रोक्ता नैर्ऋतीं दिशमाश्रिताः ।
वारुण्यां ये दिशि प्रोक्ता विष्णवस्तान् वदामि वः ॥ ९७ ॥

ततः श्रीधरलोके तु शतं लोकास्तथैव च ।
तेषां तु नायकाः प्रोक्ताः शतमेवात्र विष्णवः ॥ ९८ ॥

प्रत्येकं तु सहस्रस्य पुरुषाणां तु नायकाः ।
वैश्यास्ते विष्णुतां याता अष्टाक्षरपरायणाः ॥ ९९ ॥

तेषां नामानि वक्ष्यामि नामनानात्वभेदतः ।
भगो भगोदयो भर्गो विविक्तो विलिकस्तथा ॥ १०० ॥

[1] प्रत्ययः प्रत्ययी B

वरुणो वारुणो वृक्षो वृक्षराजो वृषप्रियः ।
पयोनाथः पयोयुक्तः पयोराशिः पयोगतिः ॥ १०१ ॥

नीरूपो रूपवान् रूपो रूपदो रूपनायकः ।
शैलजातिः कविः कालश्चतुष्कालः कलाविदः ॥ १०२ ॥

कालीकालश्च कालात्मा कालाष्टः कालकात्मजः ।
कालभोग्यः कालयोग्यो वल्गुवाग्वल्गुभाषणः ॥ १०३ ॥

वदान्यो वल्गुलो वल्गुवदनो वल्गुभाषणः ।
मत्तो विमत्त उन्मत्तः प्रमत्तः प्राणदस्तथा ॥ १०४ ॥

लास्येशो लासको लास्यो लास्याचार्यो लयस्तथा ।
शैलराड् भूमिराड् गोराट् तुराषाट् सुरराडपि ॥ १०५ ॥

[1]अरिहा दैत्यहादित्यः सर्वासुरनिषूदनः ।
वेला वेलावलिर्वेली वेलाङ्गो विश्वभावनः ॥ १०६ ॥

स्रष्टा [2]हर्ता च गोप्ता च स्थावरो जङ्गमस्तथा ।
विश्वावसुर्विश्वगुरुर्विश्वात्मा विश्वभावनः ॥ १०७ ॥

शिखण्डी खण्डनः खण्डी शिखी मुण्डो विमुण्डकः ।
एकनेत्रस्त्रिनेत्रश्च बहुनेत्रस्तथैव च ॥ १०८ ॥

विनेत्रः शतनेत्रश्च पद्मनेत्रस्तथैव च ।
अजः शतधृतिर्धुर्यो धूमकेतुर्धुरंधरः ॥ १०९ ॥

[1] तदिहा B

[2] भर्ता B

[1]त्रयीपतिस्त्रयीवेद्यस्त्रयीवासो महोरगः ।
गीर्त्राणो गीर्वणो गीर्वा गीर्बाणो गीर्निवेदकः ॥ ११० ॥

पीतवासा हरिश्मश्रुः प्राणदः [2]पूरणोऽरुणः ।
इत्येते विष्णवः प्रोक्ता वारुणीं दिशमाश्रिताः ॥ १११ ॥

वायव्ये च दिशाभागे विष्णवस्तान् वदामि वः ।
तत्र वामनलोके तु शतं लोकास्तथापरे ॥ ११२ ॥

शतं तु विष्णवस्तेषां नायकाः परिकीर्तिताः ।
ब्राह्मणाद्वैश्यकन्यायां जाता वैश्योत्तमास्तु ये ॥ ११३ ॥

ते सर्वे विष्णुतां याता द्वादशाक्षरविद्यया ।
प्रत्येकं तु सहस्रस्य पुरुषाणां तु नायकाः ॥ ११४ ॥

तेषां नामानि वक्ष्यामि नामनानात्वभेदतः ।
पुमान् [3]पुराणः पुण्याशीः पुण्यदः पुण्यतापनः ॥ ११५ ॥

यागो [4]यागपतिर्यागी यागात्मा यागभावनः ।
छन्दश्छन्दाधिपो वेदश्छन्दी च च्छन्दसां पतिः ॥ ११६ ॥

छन्दोमयो जीर्णवर्णो वर्णात्मा वर्ण एव च ।
सुयोगः सुयशा गुह्यो गुणवान् गुणसाधनः ॥ ११७ ॥

चिन्त्यश्चिन्तामणिश्चिन्ता चित्तावासश्चितां पतिः ।
कृत्तिवासाः सुवासाश्च विवासा बहुवासकः ॥ ११८ ॥

[1] त्रयीचति B
[2] प्रारण: B
[3] पुराणपुण्याशी B
[4] यायापति: B E

नीचो मरुस्थलो निम्नो विषमश्च समस्तथा ।
पद्मदृष्टिः सुदृष्टिश्च पाचनः पाकशासनः ॥ ११९ ॥

अदृष्टिर्दृष्टिरिष्टार्शी श्वासनः श्वसनो नसः ।
आविष्कारस्तिरस्कारो दुर्ज्ञेयो ज्ञेय एव च ॥ १२० ॥

स्थानं गतिश्च शयनमासनो वासनस्तथा ।
विभ्रमः संभ्रमो द्रष्टा वेग उद्वेग एव च ॥ १२१ ॥

शोको भयं विषादश्च लोभो मोहस्तथैव च ।
ब्रह्मण्यदेवो ब्रह्मण्यो ब्राह्मण्यो ब्राह्मणप्रियः ॥ १२२ ॥

कारकाश्च क्रियाश्चैव देवदो देवलस्तथा ।
पञ्चात्मा पञ्चकालात्मा बाह्यात्मा बहुशीर्षकः ॥ १२३ ॥

दूरात्मा परमात्मा च कर्मात्मा कर्मकारणः ।
कर्ता विकर्ता गहनो महीमा महिमालयः ॥ १२४ ॥

महिमा महिमावासो वासवो वसुदो वसुः ।
इत्येते विष्णवः प्रोक्ता वायवीं दिशमाश्रिताः ॥ १२५ ॥

विष्णवो ये च तान् वक्ष्ये उत्तरस्यां दिशि स्थितान् ।
हयशीर्षस्य लोकोऽत्र शतं लोकास्तथा परे ॥ १२६ ॥

शतं तु विष्णवस्तेषां नायकाः परिकीर्तिताः
प्रत्येकं तु सहस्रस्य पुरुषाणां तु नायकाः ॥ १२७ ॥

ब्राह्मणाच्छूद्रकन्यायां जाताः शूद्रोत्तमास्तु ये ।
ते सर्वे विष्णुतां याता अष्टाक्षरपरायणाः ॥ १२८ ॥

तेषां नामानि वक्ष्यामि नामनानात्वभेदतः ।
भूतं भव्यं भविष्यच्च प्रभूतं प्रभवः सवः ॥ १२९ ॥

स्तोमः स्तोमाधिपश्चैव सप्ततन्तुमुखस्तथा ।
[1]जीवो जीवत्करो जप्यो जीवनं जीवनस्तथा ॥ १३० ॥

देहो देहविदो देही देहवान् देहसाधनः ।
रहस्यं शंभुरग्रण्यः [2]शम्बरः शंकरः शिवः ॥ १३१ ॥

शतानन्दः शतस्तोमः शतायुः शतशासनः ।
श्रीधरः श्रीपतिः श्रेयः श्रीनिधिः श्रीवृषस्तथा ॥ १३२ ॥

श्रीकरः श्रीपरः श्रीशः श्रीनिवासः श्रियः पतिः ।
तेजस्वी द्युतिमानाढ्यस्तेजोऽहस्तेजसां पतिः ॥ १३३ ॥

प्रभावः प्रभवः श्रीमान् प्रभविष्णुर्भवोद्भवः ।
प्रभाकरः प्रभानाथः प्रभावान् प्रयतः पृथक् ॥ १३४ ॥

सर्वेदः शर्वदः शास्ता शमहासः शमाकरः ।
शत्रुहा शत्रुजः शक्यः शतर्द्धिः [3]शतशासनः ॥ १३५ ॥

शरीरशासनः श्लाघ्यः शरधिः शरशासनः ।
स्यन्दनाङ्गी रथाङ्गी च स्यन्दनः स्यन्दनाधिपः ॥ १३६ ॥

आयुधी सायुधीः स्वाधीः साधीयः समरप्रियः ।
त्रयी त्रयीपतिर्दान्तः पात्री पात्रं तथैव च ॥ १३७ ॥

[1] जीवा B [2] ईश्वरः B [3] शमशासनः B

मन्त्री मन्त्राधिपो मार्गो मातङ्गः पतगाधिपः ।
पतङ्गकेतुः पातङ्गी पतङ्गी पतगेश्वरः ॥ १३८ ॥

पन्नगः पन्नगी पन्नो गरीयान् गरिमा गुरुः ।
इत्येते विष्णवः प्रोक्ताः कौबेरीं दिशमाश्रिताः ॥ १३९ ॥

ऐशान्यां दिशि ये प्रोक्ता विष्णवस्तान् वदामि वः ।
क्षत्रियाच्छूद्रकन्यायां जाता ये शूद्रसत्तमाः ॥ १४० ॥

ते वैष्णवं गता भक्त्या द्वादशाक्षरविद्यया ।
वासुदेवस्य लोकेऽत्र शतं लोकास्तथा परे ॥ १४१ ॥

शतं तु नायकास्तेषां विष्णवः परिकीर्तिताः ।
प्रत्येकं तु सहस्रस्य पुरुषाणां तु नायकाः ॥ १४२ ॥

तेषां नामानि वक्ष्यामि नामनानात्वभेदतः ।
उग्रो निग्रः समग्रश्च व्यग्रः साग्रस्तथैव च ॥ १४३ ॥

वरिष्ठो वासरोऽरिष्टोऽरिष्टारिः सृष्टसाधनः ।
मेचको वारिदेवश्च वलक्षो मणिको [1]मणिः ॥ १४४ ॥

जरजीरश्च घटिकाकारकः कलशस्तथा ।
केतुमान् केतुमाली च केतुः केतुनिषूदनः ॥ १४५ ॥

[2]विद्युद्विद्युत्पतिर्विद्वान् मेघो जलमनेकलः ।
मालामयो मयो माली मालात्मा मालिकापतिः ॥ १४६ ॥

[1] मलः B

[2] विधुर्विधुपतिः B

स्रग्गुणो गुणवान् मेध्यो मेधावी विबुधाधिपः ।
आधारो धारको धारी विधारी वीतकल्मषः ।। १४७ ।।

अशोकः शोकदः शौरिः शोकारिः शोकनाशनः ।
मरुन्मरुत्पतिर्मर्मा मर्मात्मा मर्म एव च ।। १४८ ।।

कंदर्पो दर्पदो दर्पो दर्पात्मा दर्पनाशनः ।
कर्परः कर्पटः कन्दः कन्दनः कन्दलोचनः ।। १४९ ।।

कमलेशः कलानाथः कान्तात्मा कान्तसूदनः ।
श्वेतः श्वेतपतिः श्वेती श्वेतात्मा श्वेतसंभवः ।। १५० ।।

धराधरो धराधारो धारावान् धारकोपमः ।
शुचिश्रवाः श्रवश्चैव श्रवणः [1]श्रवणाधिपः ।। १५१ ।।

धूर्धरो धूरिषो धूरिर्धूनतिर्धूर्विधारणः ।
निराकरिष्णुर्वर्तिष्णुर्वर्धिष्णुर्वर्धमानकः ।। १५२ ।।

द्यौर्वियद् द्युमणिः सूर्यः सर्वेशः सर्वभावनः ।
इत्येते विष्णवः प्रोक्ता ऐशान्यां दिशि नायकाः ।। १५३ ।।

असंख्याः कापिले लोके संक्षिप्ताश्च मयाधुना ।
अत्र संक्षेपतः प्रोक्तो विघ्नेशा विष्णवो मया ।। १५४ ।।

**इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् इन्द्ररात्रे विघ्नेशोत्पत्तिर्नाम षष्ठोऽध्यायः**

[1] श्रवणोऽधिपः B

# इन्द्ररात्रे सप्तमोऽध्यायः

सनत्कुमारः—

विष्णूनामथ सर्वेषां लोकान् सर्वान् वदामि वः ।
पूर्वस्यां दिशि वाराहो लोकः पूर्वं मयोच्यते ॥ १ ॥

शतयोजनविस्तीर्णः शतयोजनमायतः ।
[1]हरिन्मणिमयेनैव प्राकारेणोपशोभितः ॥ २ ॥

ज्योतीरूपमयैः शुभ्रैर्गोपुरैरुपशोभितः ।
अनेकशतसंख्यैस्तु प्रासादैरुपशोभितः ॥ ३ ॥

दशभिर्दशभिर्लोकैरीदृग्भूतैः समंततः ।
दिक्ष्वष्टास्वप्यधस्ताच्च ऊर्ध्वं च परिशोभितः ॥ ४ ॥

आक्रीडापर्वतस्तत्र लोकालोको महागिरिः ।
शुभा सरिद्वरा तेषां राजकल्पकपादपः ॥ ५ ॥

एतेषामपि सर्वेषां वहिःसालो हिरण्मयः ।
सहस्रयोजनाकीर्णश्चतुर्गोपुरशोभितः ॥ ६ ॥

चतुर्णां गोपुराणां तु वक्ष्ये दौवारिकान् पृथक् ।
मुख्यश्चैव मुकुन्दश्च पूर्वगोपुरपालकौ ॥ ७ ॥

[1] हरिमणि B E

रक्षश्च पिङ्गलाक्षश्च दक्षिणद्वारपालकौ ।
विरूपो विकृतिश्चैव पश्चिमद्वारपालकौ ॥ ८ ॥

उत्कटो विकटश्चैव उत्तरद्वारपालकौ ।
एतैर्गुप्तान्यचिन्त्यानि गोपुराणि समंततः ॥ ९ ॥

पूर्वद्वारं भवेन्नाम्ना सदा तत्र विभद्रकम् ।
भवेच्च दक्षिणद्वारं नाम्ना भद्रमिति श्रुतम् ॥ १० ॥

सुभद्रं पश्चिमद्वारमभद्रं चोत्तरं तथा ।
उद्द्योतद्योतकृद्द्योतद्युतिमानिति नामतः ॥ ११ ॥

तोरणानि यथासंख्यं गोपुराणां क्रमेण हि ।
वाराहो लोक उद्दिष्टो मया संक्षेपतोऽधुना ॥ १२ ॥

तत्पार्श्वे चक्रलोको हि पश्चिमद्वारदेशतः ।
क्रमेण पश्चिमद्वारं दूरेण शतयोजनम् ॥ १३ ॥

आग्नेये चाथ दिग्भागे रामलोकं ब्रवीमि वः ।
शतयोजनविस्तीर्णं शतयोजनमायतम् ॥ १४ ॥

प्राकारेण परिक्षिप्तं पद्मरागमयेन च ।
गोपुरा हाटकमयास्तथा प्रासादसंचयाः ॥ १५ ॥

पूर्ववत् तस्य लोकस्य दिक्षु सर्वास्ववस्तथा ।
ऊर्ध्वं च तादृशा लोकाः क्रमाद् दशशतं स्थिताः ॥ १६ ॥

आक्रीडापर्वतस्तत्र लोकालोको महागिरिः ।
नदी च वाहिनी नाम मन्दारास्तत्र भूरुहाः ॥ १७ ॥

सर्वेषामपि चैतेषां सालम्ताम्रमयः स्मृतः ।
सहस्रयोजनाकीर्णश्चतुर्भिर्गोपुरैर्युतः ॥ १८ ॥

कोणदिक्षु चतुर्ष्वेव गोपुरास्तु हिरण्मयाः ।
तेषां दौवारिकान् वक्ष्ये नामतश्च पृथक् पृथक् ॥ १९ ॥

विरिञ्चो विश्वकर्मा च आग्नेय्यां द्वारपालकौ ।
गोपा वीरनरश्चैव नैर्ऋत्यां द्वारपालकौ ॥ २० ॥

निष्ठुरो दुर्मुखश्चैव वायव्यां द्वारपालकौ ।
भीमसेनो विकुक्षी च ईशानद्वारपालकौ ॥ २१ ॥

मन्थरो वारुणो वज्रो वलाहक इति क्रमात् ।
गोपुराणां तु नामानि यथासंख्यक्रमेण वा २२ ॥

श्वभ्रश्चाभ्रंलिहः प्रांशुरुच्च इत्यभिधानतः ।
चतुर्णां गोपुराणां तु तोरणानि यथादिशम् ॥ २३ ॥

वायव्ये गोपुरात् तस्य दूरेण शतयोजनम् ।
कालाग्नेरिह तल्लोकः शतयोजनमायतः ॥ २४ ॥

रामलोक इति प्रोक्तो नारसिंहं वदामि वः ।
नारसिंहस्य लोकस्तु दक्षिणस्यां दिशि स्थितः ॥ २५ ॥

शतयोजनविस्तीर्णः शतयोजनमायतः ।
स्फाटिकेनैव सालेन समन्तात् परिशोभितः ॥ २६ ॥

अष्टापदमयैर्दिव्यैर्गोपुरैरुपशोभितः ।
प्रासादै राजतैरेव सर्वतः परिशोभितः ॥ २७ ॥

अष्टदिक्षु यथा चोर्ध्वमधस्ताच्च तथाविधैः ।
दशभिः शोभितस्तद्वद् गोपुराणां यथादिशम् ॥ २८ ॥

आक्रीडापर्वतस्तत्र लोकालोको महागिरिः ।
नदी मधुमती नाम भूरुहाः काञ्चनद्रुमाः ॥ २९ ॥

तेषां प्राकारभागेऽभूत् पितॄणां निर्मितं पुरम् ।
सहस्रयोजनाकीर्णं चतुर्भिर्गोपुरैर्युतम् ॥ ३० ॥

तेषां दौवारिकान् वक्ष्ये गोपुराणां यथादिशम् ।
कुटिलः कुटिलाक्षश्च पूर्वद्वारस्य पालकौ ॥ ३१ ॥

तण्डिमः कुम्भनामश्च दक्षिणद्वारपालकौ ।
विद्युत्केशो विकेशश्च पश्चिमद्वारपालकौ ॥ ३२ ॥

नन्दिको विन्दकश्चैव श्रेणिकः प्रापकस्तथा ।
गोपुराणां तु नामानि तोरणानि ब्रवीमि वः ॥ ३३ ॥

वसुभागः सुभागश्च विभागो भाग एव च ।
तोरणानि चतुर्दिक्षु नामतः कीर्तितानि वः ॥ ३४ ॥

दक्षिणगोपुरात् पश्चाद् दूरेण शतयोजनम् ।
रामलोको भवत्यत्र शतयोजनमायतम् ॥ ३५ ॥

लोकोऽत्र नारसिंहस्य संक्षेपात् कथितो मया ।
रामलोकमथो वक्ष्ये नैर्ऋतीं दिशमाश्रितम् ॥ ३६ ॥

रावणान्तकरस्यात्र लोको रामस्य कीर्तितः ।
शतयोजनविस्तीर्णः शतयोजनमायतः ॥ ३७ ॥

दिक्षु चाष्टास्वधस्ताच्च ऊर्ध्वं चैव समावृतः ।
आक्रीडापर्वतस्तेषां लोकालोको महागिरिः ॥ ३८ ॥

नदी संतरणी नाम वृक्षाः संतानकाः स्मृताः ।
तेषां चैव बहिः सालस्त्वारकूटमयः शुभः ॥ ३९ ॥

सहस्रयोजनाकीर्णश्चतुर्भिर्गोपुरैर्युतः ।
सर्वे कंसमयाभोगा गोपुरास्तु न संशयः ॥ ४० ॥

तेषां दौवारिकान् सर्वान् प्रवक्ष्यामि यथाक्रमम् ।
पूर्वस्यां द्वारपालौ तु अवाङ्मुखपराङ्मुखौ ॥ ४१ ॥

वञ्चनो निषदश्चैव दक्षिणद्वारपालकौ ।
बलश्चानिबलश्चैव पश्चिमद्वारपालकौ ॥ ४२ ॥

कुहको वरुणश्चैव उत्तरद्वारपालकौ ।
सुवाहश्च प्रवाहश्च निवाहो वाह एव च ॥ ४३ ॥

गोपुराणां तु नामानि तोरणानां ब्रवीमि वः ।
वक्रकं तीक्ष्णकं सुञ्जं वीरभद्रमिति क्रमात् ॥ ४४ ॥

तोरणानां तु नामानि यथासंख्यक्रमेण वै ।
प्राग्द्वाराद्वारुणो लोको दूरेण शतयोजनम् ॥ ४५ ॥

[1] . . . . . . .

शतयोजनविस्तीर्णं शतयोजनमायतम् ।
वैडूर्यरत्नसालेन समंतात् परिशोभितम् ॥ ४६ ॥

[1] Gap in all MSS.

शातकुम्भमयैश्चैव चतुर्भिर्गोपुरैर्युतः ।
सौवर्णैः सर्वसालैश्च सर्वतः परिशोभितः ॥ ४७ ॥

एवंविधैस्तथा लोकैर्दशभिर्दशभिः क्रमात् ।
दिक्ष्वष्टासु तथा चोर्ध्वमधस्ताच्चोपशोभितः ॥ ४८ ॥

आक्रीडापर्वतस्तत्र लोकालोको महागिरिः ।
नदी सरस्वती नाम ब्रह्मवृक्षास्तथा द्रुमाः ॥ ४९ ॥

बहिः प्राकार एतेषां वृत्तो लोहमयः शुभः ।
सहस्रयोजनाकीर्णश्चतुर्भिर्गोपुरैर्युतः ॥ ५० ॥

गोपुराः कोणदेशे तु जाम्बूनदमयाः शुभाः ।
तेषां दौवारिकान् वक्ष्ये यथासंख्यक्रमेण तु ॥ ५१ ॥

भानुमानुग्रतेजाश्च आग्नेय्यां द्वारपालकौ ।
वरिष्ठः कलहश्चैव नैर्ऋत्यां द्वारपालकौ ॥ ५२ ॥

तुङ्गघोणो विकर्णश्च वायव्यां द्वारपालकौ ।
उत्क्रोशनो विसारिश्च ऐशान्यां द्वारपालकौ ॥ ५३ ॥

सुधामा च निधामा च प्रधामा बहुधामकः ।
गोपुराणां तु नामानि तोरणानि वदामि वः ॥ ५४ ॥

तुङ्गश्चाप्यतितुङ्गश्च नितुङ्गश्च प्रतुङ्गकः ।
तोरणानां तु नामानि यथासंख्यक्रमेण वै ॥ ५५ ॥

आग्नेय्यां द्वारदेशे तु दूरेण शतयोजनम् ।
शतयोजनविस्तीर्णो वायुलोकः प्रतिष्ठितः ॥ ५६ ॥

उक्तो वामनलोकस्तु हयवक्त्रस्य चोच्यते ।
हयशीर्षस्य लोकस्तु उत्तरस्यां दिशि स्थितः ॥ ५७ ॥

शतयोजनविस्तीर्णः शतयोजनमायतः ।
मुक्ताप्राकारजालेन सर्वतः परिशोभितः ॥ ५८ ॥

चतुर्भिर्गोपुरैश्चैव युक्तो हेममयैः शुभैः ।
एवंविधैस्तथा लोकैर्दशभिर्दशभिः क्रमात् ॥ ५९ ॥

दिक्ष्वष्टासु तथा चोर्ध्वमधस्ताच्चोपशोभितः ।
आक्रीडापर्वतस्तत्र लोकालोको महागिरिः ॥ ६० ॥

नदी प्रस्रवणी नाम अश्वत्थाश्च द्रुमास्तथा ।
बहिस्तलस्तथैतेषां तुङ्गगन्धिः समः शुभः ॥ ६१ ॥

गोपुरास्तत्र चत्वारः कृष्णलोहमयाः शुभाः ।
तेषां दौवारिकाणां तु वक्ष्ये नामानि च क्रमात् ॥ ६२ ॥

स्तब्धको मुञ्जकेशश्च प्राच्यां दौवारिकौ स्मृतौ ।
एकनेत्रस्त्रिनेत्रश्च दक्षिणद्वारपालकौ ॥ ६३ ॥

भीषणो रोचनश्चैव पश्चिमद्वारपालकौ ।
प्रमोहो विश्वकश्चैव उत्तरद्वारपालकौ ॥ ६४ ॥

नियोनिर्निवयश्चैव सुलयः प्रलयस्तथा ।
गोपुराणां तु नामानि तोरणानां ब्रवीमि वः ॥ ६५ ॥

संधानश्च प्रधानश्च सुधानो धान एव च ।
तोरणानां तु नामानि यथासंख्यक्रमेण तु ॥ ६६ ॥

दक्षिणागोपुरस्यास्य दूरेण शतयोजनम् ।
शतयोजनविस्तीर्णः सोमलोकः प्रतिष्ठितः ॥ ६७ ॥

उक्तो हयास्यलोकोऽयं वासुदेवस्य वक्ष्यते ।
वासुदेवस्य लोकोऽयमैशान्यां दिशि तिष्ठति ॥ ६८ ॥

शतयोजनविस्तीर्णः शतयोजनमायतः ।
प्राकारेण परिक्षिप्तस्ततो वज्रमयेन तु ॥ ६९ ॥

हेमैस्तु गोपुरैः शुभ्रैश्चतुर्भिः सर्वतो वृतः ।
एवंविधैस्तथा लोकैर्दशभिर्दशभिः क्रमात ॥ ७० ॥

दिक्ष्वष्टासु तथा चोर्ध्वमधस्ताच्चोपशोभितः ।
आक्रीडापर्वतस्तत्र लोकालोको महागिरिः ॥ ७१ ॥

नदी वर्णवती नाम वृक्षा बिल्वमयाः स्मृताः ।
बहिः प्राकार एतेषामयस्कान्तमयः शुभः ॥ ७२ ॥

गोपुराश्चापि कोणेषु चत्वार इति निर्मिताः ।
तेषां दौवारिकान् वक्ष्ये यथासंख्यक्रमेण वः ॥ ७३ ॥

विद्रुमाक्षः स्फुलिङ्गाक्ष आग्नेय्यां द्वारपालकौ ।
उल्कास्यो वक्रास्यश्च नैर्ऋतद्वारपालकौ ॥ ७४ ॥

ताम्रफुल्लः किरीटी च वायव्ये द्वारपालकौ ।
पीनबाहुः सुबाहुश्च ऐशानद्वारपालकौ ॥ ७५ ॥

सुक्रीडश्च तथाक्रीडः क्रीडनः क्रीड एव च ।
गोपुराणां तु नामानि यथासंख्यक्रमेण वै ॥ ७६ ॥

सुबन्धुर्बन्धुरश्चैव प्रबन्धुश्च निबन्धुकः ।
तोरणानां तु नामानि कथितानि यथाक्रमम् ॥ ७७ ॥

नैर्ऋताद् गोपुरात् पश्चाद् दूरेण शतयोजनम् ।
ईशानस्य च लोकोऽभूद् दूरेण शतयोजनम् ॥ ७८ ॥

सर्वेषामपि लोकानां प्राकारास्तु पृथक् पृथक् ।
चतुरश्रास्तथा वृत्ताः सर्वे चैव बहिः स्थिताः ॥ ७९ ॥

अधस्तात् कापिलं लोकं कथयिष्यामि वः क्रमात् ।
रसातले महान् लोकः कपिलस्य महामुनेः ॥ ८० ॥

शतयोजनविस्तीर्णः शतयोजनमायतः ।
मुक्तामयेन मौक्तेन सर्वतः परिशोभितः ॥ ८१ ॥

पद्मरागमयैश्चैव गोपुरैरुपशोभितः ।
बहिस्तस्यैव परितः शतं लोकाः प्रतिष्ठिताः ॥ ८२ ॥

तेषां बहिश्च प्राकारो विद्रुमैः परिकल्पितः ।
स्फाटिकैर्गोपुरैः शुभ्रैश्चतुर्भिश्च समन्वितः ॥ ८३ ॥

तस्यैव परितो लोकाः सहस्रं वै प्रतिष्ठिताः ।
तेषां बहिश्च प्राकारः स्थितो वज्रमयः शुभः ॥ ८४ ॥

हरिजातशिलाक्लृप्तैर्गोपुरैरुपशोभितः ।
ततो दशसहस्रं वै स्थिता लोकाः समन्ततः ॥ ८५ ॥

तेषां बहिश्च प्राकारः पद्मरागमयः शुभः ।
मुक्तामयैस्तथा शुभ्रैर्गोपुरैरुपशोभितः ॥ ८६ ॥

लोकाः शतसहस्रं वै तस्य चोपरि संस्थिताः ।
तेषां बहिश्च प्राकारो गारुडैर्मणिभिः कृतः ॥ ८७ ॥

पुष्यरागमयैः शुभ्रैर्गोपुरैरुपशोभितः ।
तेषां बहिः स्थिता लोकाः कोटिसंख्याप्रमाणतः ॥ ८८ ॥

तेषां बहिश्च प्राकारो वैडूर्यमणिनिर्मितः ।
जाम्बूनदमयैः शुभ्रैर्गोपुरैरुपशोभितः ॥ ८९ ॥

तस्य दौवारिकान् वक्ष्ये यथासंख्यक्रमेण तु ।
सुद्युम्नश्च [1]मयीन्दश्च प्राच्यां वै द्वारपालकौ ॥ ९० ॥

सुमित्रः शङ्खदश्चैव दक्षिणद्वारपालकौ ।
पर्जन्यः पाञ्चजन्यश्च पश्चिमद्वारपालकौ ॥ ९१ ॥

विशालाक्षकरालाक्षावुत्तरद्वारपालकौ ।
विमन्दिरं तथा प्राच्यां दक्षिणस्यां सुमन्दिरम् ॥ ९२ ॥

मन्दिरं पश्चिमायां तु उत्तरस्यां प्रमन्दिरम् ।
गोपुराणां तु नामानि तोरणानां वदामि वः ॥ ९३ ॥

उल्लेखश्च सुलेखश्च प्रलेखश्च विलेखकः ।
तोरणानां तु नामानि यथासंख्यक्रमेण तु ॥ ९४ ॥

उक्तस्तु कापिलो लोको विष्णुलोकं वदामि वः ।
मेरोस्तु यावदुत्सेधस्तावदूर्ध्वमथोपरि ॥ ९५ ॥

[1] मयिन्दश्च B

विष्णुलोकस्ततश्चोर्ध्वं यत्रासन् नव विष्णवः ।
शतयोजनविस्तीर्णः शतयोजनमायतः ॥ ९६ ॥

सर्वरत्नमयस्तस्य प्रासादः परिकल्पितः ।
तथा वज्रमयैः शुभ्रैर्गोपुरैरुपशोभितः ॥ ९७ ॥

तस्यापि परितः पश्चाद् ब्रह्मलोकाः शतं स्थिताः ।
तेषां बहिश्च प्राकारो ब्रह्मरागमयः शुभः ॥ ९८ ॥

गारुडैर्मणिभिश्चित्रैः कल्पितास्तस्य गोपुराः
सहस्रं रुद्रलोकास्तु तस्यैव परिकल्पिताः ॥ ९९ ॥

तेषां बहिश्च प्राकारो पद्मरागमयः शुभः ।
स्फाटिकैर्गोपुरैः शुभ्रैः समन्तात् परिशोभितः ॥ १०० ॥

ततो दशसहस्रं तु देवलोकाः प्रकीर्तिताः ।
तेषां बहिश्च प्राकारः क्लृप्तो मरतकैः शुभैः ॥ १०१ ॥

गोपुरैर्वज्रक्लृप्तैस्तु सर्वतः परिशोभितः ।
ततः शतसहस्रं तु तस्यैव परिसंस्थिताः ॥ १०२ ॥

लोका देवपितृणां तु सर्वलोकसुखावहाः ।
तेषां बहिश्च प्राकारो राजतः परिकल्पितः ॥ १०३ ॥

सौवर्णैर्गोपुरैः शुभ्रैः सर्वतः परिशोभितैः ।
तेषां दौवारिकान् वक्ष्ये यथासंख्यक्रमेण तु ॥ १०४ ॥

कुमुदः कुमुदाक्षश्च प्राच्यां दौवारिकौ स्मृतौ ।
दक्षिणद्वारपालस्तु पुण्डरीकोऽथ वामनः ॥ १०५ ॥

शङ्कुकर्णः सर्वनेत्रः पश्चिमद्वारपालकौ ।
उत्तरद्वारपालौ तु सुमुखः सुप्रतिष्ठितः ॥ १०६ ॥

तस्योपरि महाविष्णोर्लोक एव प्रतिष्ठितः ।
प्राकारो राजतः प्रोक्तो गोपुरश्च तथाविधः ॥ १०७ ॥

न कश्चित् तत्र लोकोऽभूद् देव एव परः पुमान् ।
ज्योतिर्मयो ह्यनिर्देश्यो ज्योतिर्मण्डलमध्यगः ॥ १०८ ॥

चण्डश्चैव प्रचण्डश्च तस्य दौवारिकौ स्मृतौ ।
तस्योपरि महाविष्णोरचिन्त्यस्तमसः परः ॥ १०९ ॥

तमाहुः पुरुषं दिव्यं नारायणमनामयम् ।
तस्मात् परतरं किंचिन्न भूतं न भविष्यति ॥ ११० ॥

बहिरण्डाद् बहिः सोऽयं वासुदेवः सनातनः ।
बहिरण्डान्महाविष्णोरव्यक्तान्नाम . . . . . . ॥ १११ ॥

विष्णोरधस्तान्मेरुः स्यात्तत्र स्थूलास्तु मूर्तयः ।
पुरुषश्चापि सत्यश्च अच्युतश्चानिरुद्धकः ॥ ११२ ॥

तत्रार्चन्ति सदा विष्णुमावाहनविसर्जनैः ।
ज्ञानध्यानपरा नित्यमष्टाक्षरपरायणाः ॥ ११३ ॥

दिश्युत्तरस्यां तत्रैव सप्त वैष्णवमातरः ।
वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च ॥ ११४ ॥

विद्या कान्तिश्च समैता मातरः परिकीर्तिताः ।
शङ्खचक्रधराः सर्वाः सर्वा एव चतुर्भुजाः ॥ ११५ ॥

शुक्ला रक्ता च पीता च [1]हरिवर्णा च वर्णतः ।
एवमेव प्रकारेण वर्णतः परिकीर्तिताः ॥ ११६ ॥

मूर्तिलोक इति प्रोक्तः संक्षेपादेव विष्णवः[2] ।
मूर्तिमन्तो हि ते[3] सर्वे लोकानां हितकाम्यया ॥ ११७ ॥

स्मरणादेव वै तेषां सद्यः पापात् प्रमुच्यते ।
तस्मात् सर्वप्रयत्नेन सदाविष्णुपरायणैः ।
अध्येतव्योऽयमध्यायः सर्वपापप्रणाशनः ॥ ११८ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम इन्द्ररात्रे विष्णुलोकविस्तारो नाम सप्तमोऽध्यायः

[1] वारि E
[2] न तु विष्णुना B
[3] Corrupt reading B

## इन्द्ररात्रे अष्टमोऽध्यायः

सनत्कुमारः—

योनिशुद्धिं प्रवक्ष्यामि जायन्ते यत्र वैष्णवाः ।
योनिरित्युच्यते क्षेत्रं क्षेत्रभूताः स्त्रियः स्मृताः ॥ १ ॥

क्षेत्रं चतुर्विधं प्रोक्तं चातुर्वर्ण्यव्यवस्थया ।
कन्या च विधवा चैव पुनर्भूः स्वैरिणीति च ॥ २ ॥

चतुर्विधाः स्त्रियः प्रोक्ताः स्वतः क्षेत्रपरिग्रहे ।
एतासामपि सर्वासां पूर्वा पूर्वा गरीयसी ॥ ३ ॥

चतुर्णामपि वर्णानां कन्या चैव प्रशस्यते ।
त्रयाणां [1]क्षत्रियादीनामुत्तमा तु प्रशस्यते ॥ ४ ॥

विधवा च[2] प्रशस्ता तु क्षेत्रजो यत्र जायते ।
द्वयोरेव प्रशस्ता तु पुनर्भूर्वैश्यशूद्रयोः ॥ ५ ॥

शूद्रस्यैव प्रशस्ता तु स्वैरिणी नाम नामतः ।
कन्या च द्विविधा प्रोक्ता चातुर्वर्ण्ये यथाक्रमम् ॥ ६ ॥

नित्यमक्षतयोनिश्च क्षतयोनिरिति द्विधा ।
शुद्धा चाक्षतयोनिस्तु सर्वेषामपि शस्यते ॥ ७ ॥

[1] क्षेत्रजातीनां B

[2] चाप्रशस्ता B

विप्रवर्जं त्रयाणां तु क्षतयोनिश्च शस्यते ।
सा पुनर्विधवा प्रोक्ता क्षतयोनिरितीरिता ॥ ८ ॥

उत्तमा क्षतयोनिश्च सवर्णक्षतयोनिका ।
त्रयाणां क्षत्रियादीनां ब्राह्मणक्षतयोनयः ॥ ९ ॥

सवर्णेन क्षताः सर्वाः सवर्णक्षतयोनयः ।
एतासामपि सर्वासां पूर्वा पूर्वा गरीयसी ॥ १० ॥

अभियोगे च [1]शस्तास्तु सर्वाः स्युः क्षतयोनयः ।
निवाहयोग्याः सर्वाः स्युः प्रसूता अपि वा न वा ॥ ११ ॥

तत्रापि द्विविधा प्रोक्ता प्रसूता गर्भिणीति च ।
गरीयसी प्रसूताया गर्भिणी तु न संशयः ॥ १२ ॥

अप्रसूतासु कन्यासु प्रणीतासु यथाक्रमम् ।
जाताः स्युरौरसाः पुत्रा रिक्थभाजः पितुः सदा ॥ १३ ॥

प्रसूतायां तु कानीनो गर्भिण्यां तु सहोढकः ।
सहोढो रिक्थभागेव कानीनो न कथंचन ॥ १४ ॥

कानीनं वर्जयित्वा तु सर्वे दीक्षार्हकाः स्मृताः ।
सहोढश्च कदाचित्तु न चाचार्यत्वमर्हति ॥ १५ ॥

विधवामत्र वक्ष्यामि क्षेत्रजो[2] यत्र जायते ।
क्षता वा अक्षता वापि विधवा त्वनपत्यका ॥ १६ ॥

[1] निष्णास्तु B [2] क्षत्रियः B

ब्राह्मणाद् देवराद्वापि या क्रमेण प्रसूयते ।
सा ज्ञेया विधवा चेति क्षेत्रजोऽत्र[1] प्रसूयते ॥ १७ ॥

विधवा द्विविधा ज्ञेया [2]अक्षता च क्षतेति च ।
अक्षता सर्वदा शस्ता तदलाभे क्षता पुनः ॥ १८ ॥

क्षता च द्विविधा प्रोक्ता विक्षता स्वक्षतेति च ।
[3]कन्यायां च क्षतायां तु विक्षतेति च संमता ॥ १९ ॥

ऊढा भर्तुः क्षतायां तु स्वक्षतेति च सा स्मृता ।
स्वक्षता सर्वदा शस्ता तदलाभे तु विक्षता ॥ २० ॥

प्रसूता विधवा वर्ज्या तत्सुतो गोलको भवेत् ।
गोलकं वर्जयित्वैकं क्षेत्रजः सर्व एव हि ॥ २१ ॥

अर्हत्येव सदा दीक्षां सतन्त्रं तु विवर्जयेत्[4] ।
पुनर्भूरुच्यते चात्र या जाता वैश्यशूद्रयोः ॥ २२ ॥

ऊढा याक्षतयोनिश्च दत्ता तु पुनरुह्यते ।
सा पुनर्भूः सुतस्तस्याः पौनर्भव उदाहृतः ॥ २३ ॥

ऊढा च क्षतयोनिर्या सा प्रभूरिति कीर्तिता ।
[5]तत्सुतः प्राभवः स्याद्वै द्विधैवं तु व्यवस्थितौ ॥ २४ ॥

पौनर्भवः सदा शस्तः [6]प्राभवस्तदलाभतः ।
द्वौ वै पौनर्भवौ प्रोक्तौ जातौ तस्यां सवर्णजौ ॥ २५ ॥

[1] क्षत्रियोऽस्य A
[2] क्षता विक्षतेति B
[3] कन्यायामक्षतायां B
[4] विसर्जयेत् E
[5] B omits this line.
[6] प्रभाव: B

उत्तमश्चानुलोम्येन वर्णेषु च सवर्णजः ।
तावुभौ सर्वदा शस्तौ प्रातिलोम्यं विवर्जयेत् ॥ २६ ॥

स्वैरिणी चेति या प्रोक्ता शूद्रजा तु प्रशस्यते ।
स्वैरिणी या पतिं त्यक्त्वा पत्यौ जीवति कामतः ॥ २७ ॥

चतुर्णामपि वर्णानां पतिमन्यतमं व्रजेत् ।
स्वैरिणी सा समुद्दिष्टा तत्सुतो वल्लो भवेत् ॥ २८ ॥

चतुर्विधास्तु वल्ला जाता वर्णक्रमेण तु ।
मातानसिकपैटारसूचकाः सूप इत्यपि ॥ २९ ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च क्रमात् सुताः ।
द्वितीये गामिनी वर्णे स्वैरिणी नात्र संशयः ॥ ३० ॥

ततः प्रभृति सा वेश्या वेश्यापुत्रस्तु तत्सुतः ।
वल्लः सर्वदा शस्तो वेश्यापुत्रं तु वर्जयेत् ॥ ३१ ॥

स्वैरिणी द्विविधा प्रोक्ता प्रसूता चाप्रसूतिका ।
अप्रसूता सदा शस्ता प्रसूता तदलाभतः ॥ ३२ ॥

सा च द्वितीयगा वर्ज्या सा दासीति सदोच्यते ।
दायभागे सुतस्तस्या दासीपुत्र उदाहृतः ॥ ३३ ॥

स यत्नाद्वर्जनीयस्तु तथा प्रव्रजितासुतः ।
योनिशुद्धिरिति प्रोक्ता बीजशुद्धिं वदामि वः ॥ ३४ ॥

अविप्लुतब्रह्मचर्यश्चातुवर्ण्ये तु यः स्थितः ।
अविवाहः स बीजः स्यात् प्रशस्तः सर्वकर्मसु ॥ ३५ ॥

ब्रह्मचर्यप्लुतिश्चात्र त्रिविधा परिकीर्तिता ।
मानसी [1]वाचिकी चैव कायिकी चेति वै त्रिधा ॥ ३६ ॥

ब्रह्मचर्यव्रते चापि पूर्वा पूर्वा गरीयसी ।
ब्रह्मचर्यप्लुतिर्या तु मानसी परिकीर्तिता ॥ ३७ ॥

सा विष्णोः स्मरणान्नश्येद् [2]ध्यानाकलितचेतसः ।
प्लुतिश्च वाचिकी नश्येदष्टाक्षरजपेन तु ॥ ३८ ॥

यागैर्व्रतोपवासैश्च नश्येदेव तु कायिकी ।
कायिकी च प्लुतिर्या तु सा पुनर्द्विविधा मता ॥ ३९ ॥

अयोन्यां चापि योन्यां च या भवेद्रेतसः प्लुतिः ।
सा [3]कायिकीति विज्ञाता पूर्वा तत्र गरीयसी ॥ ४० ॥

पूर्वा च द्विविधा प्रोक्ता यत्नजा चाप्ययत्नजा ।
स्त्रीणां तु दर्शने चैव स्वप्ने चैव तु या स्रुतिः ॥ ४१ ॥

बलादयत्नजा सा स्यात् तदन्या यत्नजा स्मृता ।
श्रेयसी यत्नजायाश्च नित्यमेवाप्ययत्नजा ॥ ४२ ॥

योनौ च द्विविधा प्रोक्ता ब्रह्मचर्यप्लुतिः क्रमात् ।
तिर्यङ्मनुष्ययोनौ वा द्विविधा सा प्रकीर्तिता ॥ ४३ ॥

ततो मनुष्ययोन्यास्तु तिर्यग्योनिर्बलीयसी ।
चतुर्णामपि वर्णानां पूर्वा पूर्वा गरीयसी ॥ ४४ ॥

[1] वाचिका A B [2] ध्यानाकुलित A B [3] कायिकेति A B

स्वदारे ब्रह्मविच्छित्तिर्न कदाचन विद्यते ।
सर्वदा ब्रह्मचारी स्यात् स्वदारव्रतिको नरः ॥ ४५ ॥

अयोन्यां तु च्युतिः प्रोक्ता नित्यमेवाप्ययत्नजा ।
उपवासेन सा नश्येत् पञ्चम्यां विष्णुगोचरे ॥ ४६ ॥

व्रतोपवासैर्नश्येच्च[1] नित्यमेव तु यत्नजा ।
तिर्यग्योनिषु या प्रोक्ता समये सा विशुध्यति ॥ ४७ ॥

चतुर्विधा च या प्रोक्ता नित्यं मानुषयोनिषु ।
ब्रह्मचर्यच्युतिः सा तु महायोगेन शुध्यति ॥ ४८ ॥

सूनमेकं परित्यज्य प्रातिलोम्यं तु वर्जयेत् ।
बीजशुद्धिश्च संप्रोक्ता वर्णशुद्धिं वदामि वः ॥ ४९ ॥

वर्णाश्चत्वार एवासन् पूर्वं सृष्टाः स्वयंभुवा ।
अनुवर्णास्तथा [2]सप्त शुद्धा इति च कीर्तिताः ॥ ५० ॥

त्रयाणां क्षत्रियादीनां तयोर्वर्णं तु शस्यते ।
जाता द्वौ च तथा जातौ क्षत्रियाद् वैश्यशूद्रयोः ॥ ५१ ॥

एक एव तु शूद्रायां जातो वर्णस्तु वैश्यतः ।
ब्राह्मणात् क्षत्रियादेकः सर्ववर्णाः प्रकीर्तिताः ॥ ५२ ॥

वर्णास्त्वेकादशैते तु दीक्षायोग्या न संशयः ।
वर्णशुद्धिरिति प्रोक्ता देशशुद्धिं वदामि वः ॥ ५३ ॥

[1] नश्येत B

[2] सप्ताशुद्धाः A B

मध्यदेशः कुरुक्षेत्रं पञ्चालाः शूरसेनकाः ।
ब्रह्मावर्तस्तथा मध्यो ब्रह्मदेशस्तथैव च ॥ ५४ ॥

आर्यावर्तसमुद्भूताः शस्तास्ते सर्व एव हि ।
चातुर्वर्ण्यक्रमो यत्र यत्र भागवता जनाः ॥ ५५ ॥

स सर्वत्र प्रशस्तः स्याद्यत्र कृष्णमृगा अपि ।
देशशुद्धिरिति प्रोक्ता देहशुद्धिं वदामि वः ॥ ५६ ॥

व्रतोपवासशुद्धात्मा शुश्रूषाभिरतः सदा ।
विष्णुमेव सदा ध्यायन्नभोज्यान्नविवर्जितः ॥ ५७ ॥

पावकेनाविहीनस्तु जातिभ्रंशविवर्जितः ।
ह्रीमानक्षतवेषश्च तथैकादशवर्णजः ॥ ५८ ॥

अभिन्नावयवश्चैव वयोरूपसमन्वितः ।
तथानुद्दृश्यस्त्रीक्लीबकुष्ठस्तम्भविवर्जितः ॥ ५९ ॥

दीक्षायोग्यो भवेच्छिष्यो ह्यन्यदीक्षापराङ्मुखः ।
देहशुद्धिरिति प्रोक्ता क्रियाशुद्धिं वदामि वः ॥ ६० ॥

गर्भाधानादिभिर्यस्तु क्रियाभिः कृतसंस्कृतिः ।
स शुद्धक्रिय इत्युक्तो दीक्षायोग्यस्तु सर्वदा ॥ ६१ ॥

शुद्धक्रियास्तु द्विविधाः पुरुषाः परिकीर्तिताः ।
कृतक्रियास्तु गुरुणा तथा ह्यगुरुणापि च ॥ ६२ ॥

गरीयानेतयोस्त्वाद्यस्तदलाभे तथेतरः ।
सत्क्रिया दशवर्णाः स्युरक्रियाः शूद्रवर्णजाः ॥ ६३ ॥

अक्रियाणां च सर्वेषां दीक्षाकाले क्रिया भवेत् ।
क्रियाशुद्धास्तदा सर्वे भविष्यन्ति न संशयः ।
तस्मात् सर्वप्रयत्नेन क्रिया कार्या विचक्षणैः ॥ ६४ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् इन्द्ररात्रे
शिष्यलक्षणं नाम अष्टमोऽध्यायः

## इन्द्ररात्रे नवमोऽध्यायः

सनत्कुमारः—

आचार्य उच्यते पूर्वमाचार्यश्च विशेषतः ।
न कुर्यान्निन्दितं कर्म न त्वयाज्यं च याजयेत् ॥ १ ॥

न चोपजीवेद् देवेशं न निर्माल्यानि भक्षयेत् ।
नादीक्षिताय दद्याद्वै हविःशेषं कदाचन ॥ २ ॥

नार्चनालङ्घनं कुर्यान्न च [1]प्रव्रजितां व्रजेत् ।
परान्नं नैव भुञ्जीत परस्पृष्टं तथैव च ॥ ३ ॥

न कंसपात्रे भोक्तव्यं नाविकं च पयः पिबेत् ।
न शुण्ठराज्ये निवसेन्नान्धदेशे कथंचन ॥ ४ ॥

न सिंहलकटाहेषु न पारसिकभूमिषु ।
न म्लेच्छतस्कराकीर्णे चातुर्वर्ण्यविवर्जिते ॥ ५ ॥

धान्याम्लं न स्पृशेच्चैव न शार्ङ्गिष्टां च भक्षयेत् ।
[2]नानन्तर्धाय चासीत न चर्ते विष्णुनामभिः ॥ ६ ॥

न चाशिष्याय चोच्छिष्टं दातव्यं तु कदाचन ।
प्रेतान्नं सूतिकान्नं च यत्नतः परिवर्जयेत् ॥ ७ ॥

[1] प्रव्राजितां B C

[2] नानकाचयवासीत B

चक्राङ्कः सर्वदा भूत्वा चरेच्चक्रध्वजोऽपि वा ।
वर्जयेच्च दिवा स्वप्नमहनां*[1] च विवर्जयेत् ॥ ८ ॥

यश्च पद्मभवे प्रोक्त आचारस्तं समाचरेत् ।
एष आचार उद्दिष्टो बुद्धिशुद्धिं वदामि वः ॥ ९ ॥

कुर्यान्न लोभमर्थेषु कुर्यान्न गुरुलङ्घनम् ।
नाशुभां तु मतिं कुर्याद् वैष्णवानां कदाचन ॥ १० ॥

न नृशंसां मतिं कुर्यात् सर्वप्राणिषु सर्वदा ।
न धृतिं च परस्वेषु परदारेषु जातुचित् ॥ ११ ॥

नाहंकारं न चासूयां न मानं नाशुभां मतिम् ।
बुद्धिशुद्धिरिति प्रोक्ता जातिशुद्धिं वदामि वः ॥ १२ ॥

आचार्यग्रहणे योग्यास्त्रयो वर्णा द्विजातयः ।
आचार्यत्वं न शूद्रस्तु लभते जातुचित् क्वचित् ॥ १३ ॥

चतुर्णामपि वर्णानामाचार्यो ब्राह्मणो भवेत् ।
तदलाभे क्षत्रियस्तु आचार्यो वैश्यशूद्रयोः ॥ १४ ॥

ब्राह्मणक्षत्रियालाभे वैश्यः स्याच्छूद्रजन्मनः ।
ब्राह्मणात् क्षत्रकन्यायां जातो मूर्धावसिक्तकः ॥ १५ ॥

त्रयाणां क्षत्रियादीनां सूतस्यापि गुरुर्भवेत् ।
मूर्धावसिक्तकन्यायां ब्राह्मणाद्यस्तु जायते ॥ १६ ॥

* अहना प्रभातकाल इति सायणः

[1] अहनी B C

मात्राब्राह्मण इत्युक्तो ब्रह्मकर्मपरायणः ।
सर्वेषामपि चैतेषामाचार्यो ब्राह्मणादृते ॥ १७ ॥

मात्राब्राह्मणकन्यायां ब्राह्मणाद्यस्तु जायते ।
मूर्धावसिक्तसदृशः सर्वाचार्यो भविष्यति ॥ १८ ॥

ब्राह्मणाद्वैश्यकन्यायां जातो वैश्योत्तमस्तु सः ।
क्षत्रियेण समः सोऽपि आचार्यो वैश्यशूद्रयोः ॥ १९ ॥

वैश्योत्तमायां कन्यायां ब्राह्मणाद्यस्तु जायते ।
[1]विराडित्युच्यते सोऽपि भवेद् ब्राह्मणसंनिभः ॥ २० ॥

आचार्यः स भवेदेव सर्वेषां ब्राह्मणादृते ।
विराट्सुतायां यो जातो ब्राह्मणात् क्रमयोगतः ॥ २१ ॥

स्वराडित्युच्यते सोऽपि कृत्रिमब्राह्मणोपमः ।
सूनस्य क्षत्रकन्यायां स चाचार्यत्वमर्हति ॥ २२ ॥

स्वराट्सुतायां यो जातो ब्राह्मणात् क्रमयोगतः ।
स ब्राह्मण इति प्रोक्तः सर्वाचार्यो भविष्यति ॥ २३ ॥

ब्राह्मणाच्छूद्रकन्यायां जातः शूद्रोत्तमस्तु यः ।
शूद्राणामुत्तमः सोऽपि न चाचार्यत्वमर्हति ॥ २४ ॥

शूद्रोत्तमस्य कन्यायां ब्राह्मणाद्यस्तु जायते ।
कल्पवैश्यस्तु स प्रोक्तो वैश्यकल्पो न संशयः ॥ २५ ॥

[1] B C omit this line.

सर्वेषामपि शूद्राणां स चाचार्यो भविष्यति ।
कल्पवैश्यस्य कन्यायां ब्राह्मणाद्यस्तु जायते ॥ २६ ॥

प्रवैश्य इति विज्ञेयो वैश्येन सदृशस्तु सः ।
शूद्राणां कल्पवैश्यानां स चाचार्यत्वमर्हति ॥ २७ ॥

प्रवैश्यस्य तु कन्यायां ब्राह्मणाद्यस्तु जायते ।
कल्पक्षत्रिय इत्युक्तः क्षत्रकल्पः स सर्वदा ॥ २८ ॥

सर्वेषां वैश्यशूद्राणां स चाचार्यत्वमर्हति ।
कल्पक्षत्रियकन्यायां ब्राह्मणाद्यस्तु जायते ॥ २९ ॥

मात्राक्षत्रिय इत्युक्तः क्षत्रियेण समः सदा ।
स कल्पक्षत्रियादीनामाचार्यत्वं सदार्हति ॥ ३० ॥

मात्राक्षत्रियकन्यायां ब्राह्मणाद्यस्तु जायते ।
मूर्धावसिक्तसदृशः क्षत्रियोत्तम उच्यते ॥ ३१ ॥

त्रयाणां क्षत्रियादीनां स चाचार्यत्वमर्हति ।
क्षत्रियोत्तमकन्यायां ब्राह्मणाद्यस्तु जायते ॥ ३२ ॥

मात्राब्राह्मणकल्पोऽयं ब्राह्मणब्रुव उच्यते ।
स क्षत्रियोत्तमादीनामाचार्यत्वं सदार्हति ॥ ३३ ॥

ब्राह्मणब्रुवकन्यायां ब्राह्मणाद्यस्तु जायते ।
कल्पब्राह्मण इत्युक्तः कृत्रिमब्राह्मणोपमः ॥ ३४ ॥

आचार्यः स भवेदेषां सर्वेषां ब्राह्मणादृते ।
क्षत्रियाद्वैश्यकन्यायां जातो यः क्षत्रियोपमः ॥ ३५ ॥

क्षत्रियात् किंचिदूनः स वैश्यात् किंचिदिवोन्नतः ।
क्षत्रियाधम इत्युक्तो नाम्ना च क्रमयोगतः ॥ ३६ ॥

स च शूद्रोत्तमादीनामाचार्यो नैव संशयः ।
क्षत्रियाधमकन्यायां क्षत्रियाद्यस्तु जायते ॥ ३७ ॥

स मात्राक्षत्रियो ज्ञेयो नाम्ना च क्रमयोगतः ।
[1]स कल्पवैश्यादीनां तु आचार्यः स्यान्न संशयः ॥ ३८ ॥

मात्राक्षत्रियकन्यायां क्षत्रियाद्यस्तु जायते ।
स पुनः पार्थिवो नाम क्षत्रियेण समः सदा ॥ ३९ ॥

स पार्थिवानां सर्वेषामाचार्यः स्यान्न संशयः ।
क्षत्रियाच्छूद्रकन्यायां जातः सच्छूद्रसंज्ञकः ॥ ४० ॥

तदाचार्यो भवत्येव न चाचार्यत्वमर्हति ।
यस्तु सच्छूद्रकन्यायां क्षत्रियात्तु प्रजायते ॥ ४१ ॥

मात्रावैश्य इति प्रोक्तो वैश्यात् किंचिदिवाधमः ।
मात्रावैश्यस्य कन्यायां क्षत्रियाद्यस्तु जायते ॥ ४२ ॥

वैश्याद इति विज्ञेयो वैश्येन सदृशः सदा ।
सर्वेषामपि शूद्राणां स चाचार्यत्वमर्हति ॥ ४३ ॥

ततो वैश्यादकन्यायां क्षत्रियाद्यस्तु जायते ।
ऊनक्षत्रिय इत्युक्तः क्षत्रात् किंचिदिवाधमः ॥ ४४ ॥

[1] C omits three lines from here.

स मात्रावैश्यकादीनामाचार्यः स्यान्न संशयः ।
न्यूनक्षत्रियकन्यायां क्षत्रियाद्यस्तु जायते ॥ ४५ ॥

नाम्ना नरपतिर्नाम क्षत्रियेण समः सदा ।
स सर्ववैश्यशूद्राणामाचार्यः स्यान्न संशयः ॥ ४६ ॥

ततस्तु वैश्यकन्यायां जातो वैश्योपमस्तु सः ।
दीक्षायोग्यो भवेदेव न चाचार्यत्वमर्हति ॥ ४७ ॥

वैश्याधमस्य कन्यायां वैश्याद्यश्चापि जायते ।
उत्तमर्ण इति ज्ञेयो[1] न चाचार्यो भविष्यति ॥ ४८ ॥

उत्तमर्णस्य कन्यायां यो वैश्यस्यापि जायते ।
स वीथीत्युच्यते सद्भिः शूद्राचार्यो भविष्यति ॥ ४९ ॥

जातिशुद्धिरिति प्रोक्ता लक्षणं तु वदामि वः ।
पादयोरूर्ध्वरेखा तु यस्य हस्ते च विद्यते ॥ ५० ॥

ललाटे त्रिपताका च स चाचार्यत्वमर्हति ।
सिंहो मृगश्च कलशस्तोरणं वेदिरेव च ॥ ५१ ॥

यस्य हस्ततले सन्ति स चाचार्यत्वमर्हति ।
यस्य शङ्खं च चक्रं च मत्स्यश्च यव एव च ॥ ५२ ॥

[2]वर्तन्ते पादयोः पाणौ स चाचार्यत्वमर्हति ।
पद्मं च स्वस्तिकं चैव भेरी पणवमेव च ॥ ५३ ॥

[1] प्रोक्तः B [2] मत्स्यश्च B

यस्य हस्ततले सन्ति स चाचार्यत्वमर्हति ।
श्रीवृक्षश्चाङ्कुशं शक्तिर्वनमाला तथैव च ॥ ५४ ॥

यस्य हस्ततले सन्ति स चाचार्यो भविष्यति ।
करकं मणिकं चैव पालिका वर्धमानकम् ॥ ५५ ॥

यस्य हस्ततले सन्ति स चाचार्यत्वमर्हति ।
रक्ते पादतले यस्य रक्ते पाणितले तथा ॥ ५६ ॥

जिह्वा यस्यास्ति दीर्घा च स चाचार्यत्वमर्हति ।
रक्ताः पादनखाश्चापि तथा हस्तनखा अपि ॥ ५७ ॥

तथैव चक्षुषी चापि स चाचार्यत्वमर्हति ।
समवृत्ताङ्गुलिर्यस्तु यश्च स्यात् तुङ्गनासिकः ॥ ५८ ॥

छत्राकारशिराश्चापि स चाचार्यत्वमर्हति ।
अनूनावयवश्चापि [1]तथा चानतिरिक्तकः ॥ ५९ ॥

अतीन्द्रियविहीनश्च स चाचार्यो भविष्यति ।
उक्ता लक्षणशुद्धिस्तु देहशुद्धिं वदामि वः ॥ ६० ॥

असूतप्रेतकान्नाशी न मांसमधुभोजनः ।
आचार्यः शुद्धदेहः स्यादपर्युषितभोजनः ॥ ६१ ॥

यागदोषविचारं च प्रवक्ष्याम्यनुपूर्वशः ।
वर्ज्यास्तु प्रतिलोमाः स्युरन्यभक्तास्तथैव च ६२ ॥

[1] तथाप्यनति B

नास्तिकाश्च तथा म्लेच्छाः पाषण्डाश्च तथैव च ।
दृष्टदोषास्तथा सर्वे चातुर्वर्ण्यबहिष्कृताः ॥ ६३ ॥

एतेषां यजनादेव यागदोषो भविष्यति ।
सर्वे दोषा भवन्त्येव [1]यागदोषान्न संशयः ॥ ६४ ॥

चातुर्वर्ण्यविहीनस्य प्रातिलोम्यस्य याजने ।
सर्वदेवप्रकोपः स्यादन्यभक्तस्य याजने ॥ ६५ ॥

देवकोपान्महादोषो याजकस्य भविष्यति ।
याजकस्य सदा दोषात् क्रिया भवति निष्फला ॥ ६६ ॥

यस्यां क्रियायां तु फलं न प्राप्नोति न युज्यते ।
फलावाप्त्यावयुक्तायां पातश्च [2]नरके ध्रुवम् ॥ ६७ ॥

नरके पतितस्यास्य [3]निष्कृतिर्न विधीयते ।
फलप्राप्तिर्भवेन्नैव तच्छिष्यस्य न संशयः ॥ ६८ ॥

[4]विनाशे सर्वविद्यानां सर्वनाशो भविष्यति ।
सर्वविद्याप्रणाशे तु धर्मनाशो भविष्यति ॥ ६९ ॥

धर्मे नष्टेऽथ सर्वेषां जायते वर्णसंकरः ।
संकरान्नरकप्राप्तिः सर्वेषां तु न संशयः ॥ ७० ॥

सर्वनाशे समुत्पन्ने आत्मनाशो न संशयः ।
तस्मान्नास्तिकयाज्यत्वं सर्वनाशस्य कारणम् ॥ ७१ ॥

[1] यागदोषे B
[2] नरकं B
[3] निष्कृतिस्तु B
[4] विनाशः B

राष्ट्रस्य तु विनाशः स्यान्म्लेच्छानामपि याजने[1] ।
राष्ट्रनाशे समुत्पन्ने राजनाशो भविष्यति ॥ ७२ ॥

अराजके तु लोकेऽस्मिन्नधर्मो वृद्धिमेष्यति ।
अधर्मस्य प्रवृत्तौ तु धर्मनाशो भविष्यति ॥ ७३ ॥

धर्मे नष्टेऽथ सर्वेषां जायते वर्णसंकरः ।
संकरान्नरकप्राप्तिः सर्वेषां तु न संशयः ॥ ७४ ॥

तस्मात् सर्वप्रयत्नेन न म्लेच्छं याजयेद् बुधः ।
सिद्धान्तस्य विनाशः स्यात् तथा पाषण्डयाजने ॥ ७५ ॥

विनष्टे चैव सिद्धान्ते देवयागो न युज्यते ।
देवयागविनाशे तु लोकनाशो न संशयः ॥ ७६ ॥

लोकनाशे समुत्पन्ने नाशः कस्य न जायते ।
तस्मात् सर्वप्रयत्नेन पाषण्डानां न याजयेत् ॥ ७७ ॥

असंग्राह्यः स्यादाचार्यो दृष्टदोषस्य याजने ।
दृष्टदोषा इति प्रोक्ताः सर्वे पातकिनो जनाः ॥ ७८ ॥

स्वयं च तत्समानः स्याद् दृष्टदोषस्य याजने ।
तस्मात् सर्वप्रयत्नेन दृष्टदोषं न याजयेत् ॥ ७९ ॥

शास्त्राणां तु विनाशः स्याद्वर्णबाह्यस्य याजने ।
शास्त्रनाशे समुत्पन्ने जायन्ते विधिविप्लवाः[2] ॥ ८० ॥

1 जायते B

2 विधिपल्लवाः B

विधेर्विनाशे संप्राप्ते त्वनुष्ठानं विनश्यति ।
विनष्टे चाप्यनुष्ठाने जायते वर्णसंकरः ॥ ८१ ॥

संकरे नरकप्राप्तिर्जायते नात्र संशयः ।
तस्मात् सर्वप्रयत्नेन [1]वर्णबाह्यं न याजयेत् ॥ ८२ ॥

यागयोग इति प्रोक्तः शुभहस्तं वदामि वः ।
शुभहस्तविधिश्चात्र लभ्यते चार्थयोर्द्वयोः ॥ ८३ ॥

यागे चैव प्रतिष्ठायामनयोरेव लक्ष्यते ।
यागश्चतुर्विधः प्रोक्तः सर्वथास्मिन् हि शासने ॥ ८४ ॥

प्रोक्षणं पुष्पयागश्च तथा मण्डलदर्शनम् ।
दीक्षा चेति तथा चात्र याग उक्तः समासतः ॥ ८५ ॥

[2]संप्राप्ते त्वर्चनाकाले शुश्रूषाभ्यर्चितो गुरुः ।
प्रोक्षयेदर्चनातोयैर्मूलमन्त्राभिमन्त्रितैः ॥ ८६ ॥

ततः [3]शिष्यं प्रसादेन तत् प्रोक्षणमुदाहृतम् ।
लिखित्वा मण्डलं सम्यक् प्रोक्षयित्वाथ मन्त्रतः ॥ ८७ ॥

पुष्पैश्च विविधैरर्चां चातुर्वर्ण्यैर्यथाविधि ।
मण्डलं विधिवत् कृत्वा शिष्यं तत्र प्रवेशयेत् ॥ ८८ ॥

अनुग्रहेण चाचार्यः पुष्पयागः स उच्यते ।
लिखित्वा मण्डलं सम्यक् शास्त्रोक्तविधिना क्रमात् ॥ ८९ ॥

1 विष्णुबाह्यं B E    2 सा प्राप्ते B C    3 शिष्यप्रसादेन B

शुद्धे देशे गृहे वापि देवतायतनेऽपि वा ।
पटे वाप्यथवा कुड्ये मण्डपे वापि चित्रिते ॥ ९० ॥

मण्डलं दर्शयेच्छिष्यं[1] तस्मान्मण्डलदर्शनम् ।
[2]अधिवासक्रियां कृत्वा लिखित्वा चक्रमण्डलम् ॥ ९१ ॥

रजःपात क्रमात् कृत्वा हुत्वा[3] चाग्निं यथाविधि ।
या दीक्षा विधिवत् प्रोक्ता सा दीक्षेति प्रशस्यते ॥ ९२ ॥

चतुर्विधेषु यागेषु पूर्वोक्तेष्वेषु सर्वदा ।
शुभं भवेच्च शिष्याणां शुभहस्तः स उच्यते ॥ ९३ ॥

ततः* [4] . . . . . . . . . .

[1] शिष्यः B [2] अधिमास B [3] कृत्वा B

* All MSS. abruptly break here leaving the book Indrarātra incomplete.

[4] B reads the following misleading colophon and mentions the name of scribe:

इतीन्द्ररात्रे आचार्यलक्षणं नाम नवमोऽध्यायः । इन्द्ररात्रं समाप्तम् ।
Copied by Tepperumal Rama Ayyangar.

# ऋषिरात्रम्

## प्रथमोऽध्यायः

सनत्कुमारः—

ऋषिरात्रं प्रवक्ष्यामि यथाहुर्ऋषयः पुरा ।
पञ्च कालान् यथावत्तु कथयाम्यनुपूर्वशः ॥ १ ॥

[1]यच्च विष्णुं समुद्दिश्य क्रियते कर्म दीक्षितैः ।
तत् सर्वं [2]कालसंबद्धं ततोऽन्यत्तु न विद्यते ॥ २ ॥

अथाभिगमनं पूर्वं काल एष मयोच्यते ।
शयनोत्थानकर्मादि क्रियतेऽथ [3]यथा तु यत् ॥ ३ ॥

तत् सर्वं भगवत्कर्म करोमीत्यनुचिन्तयेत् ।
तेनाभिसंहितं[4] सर्वं कर्म कुर्वन् यथाविधि ॥ ४ ॥

दीक्षितः समर्थी नित्यमनेन स्यादुपासकः[5] ।
उपासितो भवेद्देवो नित्यमेव तु कर्मणा ॥ ५ ॥

इत्युक्तोऽभिगमः कालः प्रीतस्तेन सुरेश्वरः ।
उपादानं प्रवक्ष्यामि कालं कालविदां तु वः ॥ ६ ॥

[1] यत्र B C [2] कालसंबन्धं B C [3] यया B C
[4] महितं B C [5] उपासितः B C

वस्तु यद् गृह्यते सर्वं दीक्षितैस्तन्त्रवित्तमैः ।
प्रतिग्रहं वा क्रीतं वा अयाचितमथापि वा ॥ ७ ॥

गृह्यते [1]फलपुष्पादि विष्ण्वर्थमिति चिन्तया ।
तदुपादानमित्युक्तः[2] कालस्तेन सदाहरिः ॥ ८ ॥

अर्चितो देवदेवेशः कालज्ञेन तु मन्त्रिणा ।
इज्या चेति समाख्याता यागकर्मणि [3]यत् कृतम् ॥ ९ ॥

रजःपातादि यागश्च अर्चनाविधिरेव च ।
यतीनां चैव भक्तानां दीक्षितानां च पूजनम् ॥ १० ॥

दानं चैव हरेर्नित्यमिज्या सेति प्रकीर्तिता ।
तेन कालेन देवेशः पूजितः स्याद्विशेषतः ॥ ११ ॥

[4]स्वाध्याये तु तथा काले चिन्तयेद्वैष्णवान् मनून् ।
इतिहासपुराणानि पठेदर्थावबोधतः ॥ १२ ॥

स्वाध्यायः काल इत्युक्तः पूजितस्तेन वै प्रभुः ।
यो योग इति संप्रोक्तो योगिभिर्योगवित्तमैः ॥ १३ ॥

तेन योगेन देवेशः पूजितः स्यात् स्वयं हरिः ।
षडङ्गयुक्तो योगः स उक्तः पद्मोद्भवे किल ॥ १४ ॥

संक्षेपेणाथ[5] वक्ष्यामि नाडीचक्रमशेषतः ।
कन्दं नाभिर्भवेन्मूलं नाडीनामेव सर्वशः ॥ १५ ॥

1 फलपुष्पाणि B C    2 उक्तं B C    3 चेत् B
4 A B omit this verse    5 अत्र C

कुमुदस्य यथा मूलमुत्पलस्य तथैव च ।
नालानामपि सर्वेषामुत्पत्तिस्थानमुत्तमम् ॥ १६ ॥

तथैव नाभिर्नाडीनामुत्पत्तिस्थानमुच्यते ।
द्विसप्ततिसहस्राणि नाड्यः परिकीर्तिताः ॥ १७ ॥

तिर्यगूर्ध्वमधश्चैव देहे ताः स्युर्यवस्थिताः ।
आग्नेय्यश्चैव सौम्याश्च सौम्याग्नेय्यस्तथैव च ॥ १८ ॥

सर्वा ऊर्ध्वमुखा नाड्यस्त्वाग्नेय्यः परिकीर्तिताः ।
अधोमुखास्तथा सौम्यास्तिर्यक् चैवोभयात्मिकाः ॥ १९ ॥

शतद्वयं चाष्टषष्टिः प्रतिदिक्कं व्यवस्थिताः ।
शतसाहस्रिकायां तु संहितायां पुरा खलु ॥ २० ॥

नामान्यासां तु सर्वासां कथितानि सविस्तरम् ।
दशानां तु प्रधानानां तन्नामात्र प्रवक्ष्यते ॥ २१ ॥

इडा च पिङ्गला चैव सुषुम्ना च तथा परा ।
गान्धारी हस्तिजिह्वा च पूषा च सुयशास्तथा ॥ २२ ॥

अलम्बुसा कुहूश्चैव कौशिकी दशमी तथा ।
इडा चैव सुषुम्ना च स्थिते पिङ्गलया सह ॥ २३ ॥

नासापुटे चोर्ध्वमुख्यौ शुक्लरक्ते च वर्णत ।
गान्धारी हस्तिजिह्वा च पूष्णा च सहिते स्थिते ॥ २४ ॥

बस्तिदेशं समाश्रित्य [1]पीतकृष्णे स्थिते समे ।
अलम्बुसासुयशसौ[2] स्थिते दक्षिणपार्श्वतः ॥ २५ ॥

बभ्रुश्यामे च[3] वर्णेन सौम्याग्नेयगुणान्विते ।
कौशिकी च कुहूश्चैव वामपार्श्वे समाश्रिते ॥ २६ ॥

अञ्जनारुणसंकाशे सौम्याग्नेयगुणान्विते ।
दश प्राणवहा ह्येता नाडयः परिकीर्तिताः ॥ २७ ॥

प्राणास्तु दश संप्रोक्ता यथासंख्यक्रमेण तु ।
प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ २८ ॥

नागश्चैव कुमारश्च कृकरश्च तथा परः ।
धनंजयो देवदत्त इति प्राणा दश स्मृताः ॥ २९ ॥

प्राणस्तु प्रथमो वायुः शेषाणां प्रभुरेव सः ।
इडा वहति तं वायुं नाडी या प्रथमा मता[4] ॥ ३० ॥

प्राणः प्राणयते यस्माद्विसर्ग[5] पूरणं प्रति ।
नित्यमापूरयत्येष [6]प्राणिनामुरसि स्थितः ॥ ३१ ॥

निश्वासोच्छ्वासकासैश्च प्राणो जीवसमाश्रितः ।
प्राणनं कुरुते यस्मात् तस्मात् प्राण इति स्मृतः ॥ ३२ ॥

उह्यमानस्तु गान्धार्या नाड्यापानः स्ववेगतः ।
शुक्रमूत्रपुरीषादि गुदस्थोऽपनयेत् सदा ॥ ३३ ॥

1 पीतकृष्णसिते B
2 सुयशसा B
3 श्यामेन B
4 मतः B C
5 विसर्गो E
6 प्राणानाम् F

तस्मादपान इत्युक्तो वायुः प्राणादनन्तरः ।
उह्यमानः समानस्तु समोऽलम्बुसया मतः ॥ ३४ ॥

पीतं भक्षितमाघ्रातं लीढं पित्तकफादिकान् ।
रसान् नानाविधांश्चैव समानयति सर्वतः ॥ ३५ ॥

सर्वदा सर्वगात्रेषु समानस्तेन मारुतः ।
[1]कुहूर्वहति [2]च व्यानं वामपार्श्वे समाश्रितः ॥ ३६ ॥

कुरुते स पुनर्व्यानः कर्माण्येतानि सर्वशः ।
विनामयत्यथाङ्गानि कुर्याद् व्याधिप्रकोपनम् ॥ ३७ ॥

स्मृतिप्रीतिविनाशं च वार्द्धके[3] व्यान उच्यते ।
उदानस्तु सुषुम्नायामुह्यमानस्तथैव च ॥ ३८ ॥

स्पन्दयत्यधरं वक्त्रं नेत्रं गात्रप्रकम्पनम्[4] ।
[5]उद्योजयति कर्माणि उदानस्तेन कीर्तितः ॥ ३९ ॥

पिङ्गलायां तु नागाख्यो [6]वायुरूर्ध्वमुखः स्थितः ।
उद्गारं [7]वमनं हिक्कां तथा वै मेहनं पुनः ॥ ४० ॥

करोति मारुतो नागः प्राणिनां देहमाश्रितः ।
हस्तिजिह्वागतो वायुर्देवदत्त[8] इति स्मृतः ॥ ४१ ॥

[1] तथा A C
[2] चोदानं A; चापानं B
[3] वार्द्धक्ये A B
[4] प्रकोपनम् B C
[5] उद्वेजयति A B
[6] वपुः B
[7] वामनं B C
[8] जयदत्तः E

विजृम्भणं च गात्राणां स्तम्भनं च करोत्यसौ ।
मीलनं कुरुते नित्यं कुमारः पूषणि स्थितः ॥ ४२ ॥

तथा सुयशसि स्थित्वा कृकरः क्षुभितं नयेत् ।
घोषं च कुरुते स्थित्वा कौशिक्यां तु धनंजयः ॥ ४३ ॥

न मुञ्चति सदा चासौ मृतस्यापि कलेवरम् ।
नाडीचक्रं यथावस्थं कथितं चानुपूर्वशः ॥ ४४ ॥

दशारं चक्रमेतत्तु नाड्यो यत्र संस्थिताः ।
चक्रं तु भ्रमते देहे दशस्थानेषु सर्वदा ॥ ४५ ॥

कर्मात्मा जीवसंज्ञोऽस्मिंश्चक्रे भ्रमति शाश्वतम् ।
हृत्पुण्डरीकमध्ये तु सदा संकोचयन् प्रभुः ॥ ४६ ॥

सदाविष्णुर्भवत्येष क्षेत्रज्ञ इति संज्ञितः ।
अणोरणीयानत्यन्तं शालिशूकाग्रपिञ्जरः ॥ ४७ ॥

तस्येश्वरस्य चैश्वर्याचक्रमेतत् प्रवर्तते ।
चक्रमध्येऽस्य संप्रोक्तो हृत्पद्मस्य यथोद्भवः ॥ ४८ ॥

हृत्पद्मस्याष्टपत्रस्य मध्ये वै कर्णिका मता ।
शक्तयस्तत्र तिष्ठन्ति परमेष्ठ्यादयः क्रमात् ॥ ४९ ॥

परमेष्ठी पद्ममध्ये सदाविष्णुं समाश्रितः ।
चतुर्दिक्षु ततः पश्चाच्छेषा वै शक्तयः स्मृताः ॥ ५० ॥

अर्कवह्निहिरण्याभा वर्णतः परिकीर्तिताः ।
नाम्ना चैव पुमान् विश्वो निवृत्तिः सर्व एव च ॥ ५१ ॥

तेषां मध्ये दशावस्थाः प्रभोर्नारायणस्य ह ।
तास्ववस्थासु संलीनः पुरुषस्तु निरामयः ॥ ५२ ॥

एवं स्थिते चक्रपद्मे बहिः प्राणा दश स्थिताः ।
इडायां च सुषुम्नायां प्राणश्चरति वै क्रमात् ॥ ५३ ॥

इडा चान्द्रमसी नाडी सुषुम्ना सूर्यसंभवा ।
इडा नासापुटे वामे सुषुम्ना दक्षिणे स्थिता ॥ ५४ ॥

अयने द्वे च संक्रान्ती विषुवे चेति भेदतः ।
भवन्ति प्राणसंचारक्रमान्नाड्योस्तथोभयोः ॥ ५५ ॥

इडायां वर्तते प्राणो यदा तद् दक्षिणायनम् ।
यदा वसेत् सुषुम्नायां तद् भवेदुत्तरायणम् ॥ ५६ ॥

प्रयाति यस्माद्यं वायुः काले नासापुटात् पुटम् ।
संक्रान्तिरिति [1]स प्रोक्तः क्रमेण प्राणसंक्रमः ॥ ५७ ॥

यदा द्वाभ्यां पुटाभ्यां तु समकालं वहत्यसौ ।
कालं तं [2]विषुवं प्राहुः पुण्यकर्मणि पूजितम् ॥ ५८ ॥

अयने दक्षिणे कुर्यात् स्नानकर्म यथाविधि ।
अयने चोत्तरे कुर्यात् सर्वकर्माणि साधकः ॥ ५९ ॥

संक्रान्त्यां दानकर्माणि ध्यानं तु विषुवे तथा ।
ऊर्ध्वे प्राणस्त्वहः प्रोक्तस्त्वपानो रात्रिरुच्यते ॥ ६० ॥

[1] यत् प्रोक्ताः A B

[2] तद्विषुवत्प्राहुः E

अयुते द्वे सहस्रं च षट् [1]शतान्यधिकानि च ।
अहोरात्रेण वै योगे मात्रासंख्या प्रयुज्यते ॥ ६१ ॥

प्राणायामं समासेन कथयामि यथाविधि ।
उच्चारयेत्तु प्रणवं स्वरेणैकेन योगवित् ॥ ६२ ॥

उदरं पूरयित्वा तु वायुना यावदीप्सितम् ।
प्राणायामो भवत्येष पूरको देहपूरकः ॥ ६३ ॥

विधाय सर्वगात्राणि निश्वासोच्छ्वासवर्जितम् ।
संपूर्णकुम्भवत् तिष्ठेत् प्राणायामः स कुम्भकः ॥ ६४ ॥

मुञ्चेद्वायुं तथैकेन क्रमान्निश्वस्य चैव हि ।
योगी निश्वासकृद्यस्तु वायुमूर्ध्वं विरेचयेत् ॥ ६५ ॥

रेचकस्त्वेष संप्रोक्तः प्राणायामो न संशयः ।
कुम्भकाले भवेदेव सोमग्रहणमुत्तमम् ॥ ६६ ॥

ततो रेचककाले तु सूर्यग्रहणमिष्यते ।
यद्वै हृदयपद्माख्यमूर्ध्वनालमधोमुखम् ॥ ६७ ॥

तद्वै विकासमायाति पूरणेन तु [2]पूरितम् ।
ऊर्ध्ववक्त्रं भवेत् पद्मं कुम्भकेन निरोधितम् ॥ ६८ ॥

रेचकेन समाक्षिप्तं सद्यः प्राणहरं भवेत् ।
भूत्वा तु हृद्गतं पद्ममूर्ध्वस्रोतोऽव्यवस्थितम् ॥ ६९ ॥

[1] तथा A B C

[2] पूजितम् A B

रेचनेनोर्ध्वमायाति ग्रन्थिं भित्त्वा क्षणेन तु ।
भित्त्वार्गलकपालं तु ऊर्ध्वं दीप इवोत्थितः ॥ ७० ॥

अचिरेण समभ्येति तद्विष्णोः परमं पदम् ।
अतः परतरं नैव स्थूलं वा सूक्ष्ममेव वा ॥ ७१ ॥

तत् पदं परमं प्राहुः सदाविष्णुपदं शुभम् ।
तत्पदस्य प्रभुश्चैको नित्यो नारायणः परः ।
तस्मात् सर्वप्रयत्नेन योगी नारायणं स्मरेत् ॥ ७२ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे [1]कालाध्यायः प्रथमः

[1] पञ्चकालकथनं नाम प्रथमोऽध्यायः F

# ऋषिरात्रे द्वितीयोऽध्यायः

सनत्कुमारः—

मुद्राध्यायं प्रवक्ष्यामि सर्वमेव [1]यथातथम् ।
मुष्टिमुद्रा तु मुष्टिः स्यादङ्गुष्ठेन तु पीडिता ॥ १ ॥

स्नानमुद्रेति विज्ञेया सैव [2]मुक्तकनिष्ठिका ।
गन्धमुद्रा तु विज्ञेया विमुक्तानामिका च सा ॥ २ ॥

विमुक्तमध्यमा चैव पुष्पमुद्रेति कीर्तिता ।
ऊर्ध्वां [3]तु मध्यमां कृत्वा संहृत्याङ्गुष्ठमेव च ॥ ३ ॥

तर्जन्यनामिकाभ्यां तु संगृह्य तु कनिष्ठिकाम् ।
अवाङ्मुखेन वामेन संहृताङ्गुलिना सह ॥ ४ ॥

तेनोत्तानेन[4] हस्तेन दक्षिणेन तु तौ यथा[5] ।
दीपमुद्रेति सा प्रोक्ता देवदेवप्रियाधिका ॥ ५ ॥

[6]संहृताग्राङ्गुली या तु कृतव्यतिकराङ्गुलिः ।
सहैवोर्ध्वीकृताङ्गुष्ठा कराभ्यां धूपमुद्रिका ॥ ६ ॥

[1] यथा तथा A [2] मुद्रा B G [3] तन्मध्यमां B G
[4] तेनोक्तेन च G [5] तया B G
[6] G omits from here up to the end of the first half of the verse 11.

मध्यमाङ्गुष्ठशिरसोः संगतिर्याग्रपर्वणा ।
यज्ञोपवीतमुद्रा सा विस्तृतान्याङ्गुलिः क्रमात् ॥ ७ ॥

अङ्गुष्ठानामिकाभ्यां तु तथा वै वस्त्रमुद्रिका ।
तथाङ्गुष्ठकनिष्ठाभ्यां ज्ञेयालंकारमुद्रिका ॥ ८ ॥

अङ्गुष्ठतर्जनीभ्यां तु तथा वैनतमुद्रिका ।
विस्तारिताङ्गुली या तु संहताधोगताङ्गुलिः ॥ ९ ॥

ज्ञेया पृथक् स्थिताङ्गुष्ठा नित्यमाचारमुद्रिका ।
सा चैवोर्ध्वाङ्गुली ज्ञेया रक्षामुद्रेति कीर्तिता ॥ १० ॥

पतिताग्राङ्गुलिर्या तु पूर्वोक्ता वरमुद्रिका ।
ज्ञेया स्वागतमुद्रा सा सर्वासां तु प्रशस्यते ॥ ११ ॥

या संहृतकनिष्ठा तु संख्यामुद्रेति सा स्मृता ।
या चाप्यूर्ध्वीकृताङ्गुष्ठा संहृताङ्गुलिका सकृत् ॥ १२ ॥

सा ज्ञेया प्रतिमामुद्रा सर्वकामप्रसाधनी ।
अङ्गुष्ठबद्धाङ्गुलिका या चोर्ध्वीकृततर्जनी ॥ १३ ॥

सा ज्ञेया तर्जनीमुद्रा सर्वोत्सादकरी शुभा ।
सैव मध्यमया युक्ता द्वन्द्वमुद्रेति कीर्तिता ॥ १४ ॥

सा कनिष्ठिकया युक्ता व्यूहमुद्रेति कीर्तिता ।
नागमुद्रेति विज्ञेया सा वक्राङ्गुलिपर्वका ॥ १५ ॥

या चैव तर्जनीमुद्रा सा वक्राङ्कुशमुद्रिका ।
पञ्चाङ्गुलीनामग्रैस्तु या चाङ्गुष्ठाग्रसंगतिः ॥ १६ ॥

ग्रासमुद्रा तु विज्ञेया चरुहोमे प्रपूजिता[1] ।
कनिष्ठिकानामिकाभ्यामङ्गुलीभ्या . . . . . ॥ १७ ॥

तर्जनीमध्यमाभ्यां तु ऊर्ध्वाभ्यां क्रियते तथा ।
ततश्च संहताभ्यां च पशुमुद्रेति सा स्मृता ॥ १८ ॥

मध्यमानामिकाग्राभ्यामङ्गुष्ठाग्रेण संगतिः ।
विस्तीर्णतर्जनी वापि तथा स्थितकनिष्ठिका ॥ १९ ॥

मृगीमुद्रेति सा ज्ञेया तिलहोमे प्रशस्यते ।
तथाङ्गुष्ठकनिष्ठाभ्यामूर्ध्वाभ्यां क्रियते तु या ॥ २० ॥

चतुर्भिः संहिताग्राभिः शेषाभिर्हस्तमुद्रिका ।
या च स्वागतमुद्रा च किंचिदुक्तपदानि तु ॥ २१ ॥

[2]तानतीतान् पुनर्ज्ञेया . . . . . . . . ।
. . . दानमुद्रेति दानकाले प्रशस्यते ॥ २२ ॥

ऊर्ध्वां तु मध्यमां कृत्वा वह्निमुद्रामनामया ।
तर्जन्यनामिकाभ्यां तु वेष्टयित्वा क्रमेण तु ॥ २३ ॥

तथाङ्गुष्ठकनिष्ठे तु संहृत्य क्रियते तु या ।
लिङ्गमुद्रेति सा ज्ञेया विस्तृता चोर्ध्वतर्जनी ॥ २४ ॥

सैवोर्ध्वानामिका ज्ञेया क्रमाद्वा प्रतिमुद्रिका ।
संहृताभिश्चतसृभिरङ्गुलीभिश्च संहृतिः ॥ २५ ॥

[1] प्रकीर्तिता E

[2] तानीति B

विमुक्ता तर्जनी चैव सृष्टिमुद्रेति कीर्तिता ।
संहृत्य तर्जनीं पश्चादङ्गुष्ठेन पिधाय ताम् ॥ २६ ॥

संहृताभिश्चतसृभिर्ज्ञेया प्रणवमुद्रिका ।
तर्जन्याः पृष्ठभागे तु श्लेषयित्वा तु मध्यमाम् ॥ २७ ॥

अनामिकाकनिष्ठे तु बद्धाङ्गुष्ठेन या कृता ।
[1]साश्लेषमुद्रिका ज्ञेया विक्रमाक्रममध्यमा ॥ २८ ॥

विस्तीर्णाभिः समस्ताभिरङ्गुलीभिस्तु या कृता ।
विस्तीर्णमुद्रा विज्ञेया सैव [2]प्रसृतिमुद्रिका ॥ २९ ॥

अङ्गुष्ठं तु प्रकोष्ठेन श्लेषयित्वा निजेन वा ।
प्रगृह्य वामहस्तेन पर्वमूले क्रिया . . . . ॥ ३० ॥

प्रसृताभिश्च शेषाभिरङ्गुलीभिरवाङ्मुखी ।
सा ज्ञेया ध्वजमुद्रा तु ध्वजदीर्घसमेव तु ॥ ३१ ॥

योर्नीकृत्य च हस्तौ [3]तु श्लेषयेन्मध्यमाद्वयम् ।
तच्चेतरकराग्रेण बीजमुद्रेति सा स्मृता ॥ ३२ ॥

[4]उभौ हस्तौ पुटौ कृत्वा ग्रहणं च परस्परम् ।
अङ्गुलीभिः समस्ताभिर्ब्रह्ममुद्रेति सा स्मृता ॥ ३३ ॥

विस्तीर्णतर्जनी वामे सा दक्षिणकनिष्ठया ।
सह युक्ता मिथः[5] श्लिष्टा विष्णुमुद्रेति कीर्तिता ॥ ३४ ॥

[1] संश्लेष D [2] प्रसृत B [3] चा B
[4] एतौ B G [5] श्रयः B G

सा चैव श्लेषिताङ्गुष्ठा समस्तेन परस्परम् ।
उभयाङ्गुष्ठमुद्रा सा रुद्रमुद्रेति कीर्तिता ॥ ३५ ॥

बहिर्व्यतिकरं कृत्वा समा एव तथाङ्गुलीः ।
[1]कनिष्ठिके तु विस्तीर्य श्लेषिते तु परस्परम् ॥ ३६ ॥

अङ्गुष्ठाग्रेण वामेन तर्जन्यग्रं तु दक्षिणे ।
तथा वामे च वामे च स्पृष्टाशुगतिमुद्रिका ॥ ३७ ॥

मध्यमाभ्यां बहिर्या तु अनामान्वितसंपुटा[2] ।
कृतव्यतिकरौ चाग्रे तर्जनीभ्यां तु वेष्टिता ॥ ३८ ॥

समदीर्घकनिष्ठा तु दीर्घाग्रश्लिष्टमध्यमा ।
[3]समदीर्घकनिष्ठा सा[4] विदिता सिंहमुद्रिका ॥ ३९ ॥

ऊर्ध्वाङ्गुष्ठद्वया या च तद्व्यतिकराङ्गुलिः ।
स सर्वाभिः संहताभिः श्लिष्टा तोरणमुद्रिका ॥ ४० ॥

करौ तु संपुटौ कृत्वा [5]व्यत्यस्तौ विस्तृताङ्गुली ।
श्लेषयेद् दक्षिणाङ्गुष्ठं शनैर्वामकनिष्ठया ॥ ४१ ॥

वामाङ्गुष्ठं तथा योज्यं या दक्षिणकनिष्ठया ।
कृता सा चक्रमुद्रा स्यात् [6]सर्वकर्मप्रसाधनी ॥ ४२ ॥

प्रकोष्ठौ श्लेषयित्वा तु [7]क्रमाद्द्वे कूर्परं पुनः ।
दीर्घाभ्यां समयुक्ताभ्यां मध्यमाभ्यां परस्परम् ॥ ४३ ॥

[1] कनिष्ठिकेति A B [2] संपुनः B [3] A C omit this line.
[4] ता विधिना B [5] व्यत्यासो विस्तृताङ्गुलिः B G
[6] सर्वकर्मणि साधनी B G [7] क्रमाद्द्वेकोपरं B E

बहिर्व्यतिकराभिस्तु [1]नम्राग्राभिः कृता तु या ।
शेषाङ्गुलीभिरन्याभिर्गदामुद्रेति सा स्मृता ॥ ४४ ॥

अन्तर्व्यतिकराभिर्या सा सर्वाङ्गुलिभिः क्रमात् ।
कृतोर्ध्वदक्षिणाङ्गुष्ठा मुखमुद्रेति सा स्मृता ॥ ४५ ॥

[2]संहृत्य चाङ्गुलीः सर्वास्तर्जन्यौ व्यतिकृत्य च ।
अङ्गुष्ठाभ्यां स्पृशेदग्रं सा मुद्रा स्वस्तिका मता ॥ ४६ ॥

[3]अङ्गुष्ठाग्रं तथा स्पृष्ट्वा मध्यमाग्रेण साधकः ।
वक्रिकां मध्यमां कृत्वा धनुर्मुद्रेति सा स्मृता ॥ ४७ ॥

[4]मणिबन्धौ नयेत् कायं करव्यत्यासतः क्रमात् ।
विस्तीर्य चाङ्गुलीः सर्वाः शक्तिमुद्रेति सा स्मृता ॥ ४८ ॥

कनिष्ठां दक्षिणां वेष्टय क्रमाद्वामकनिष्ठया ।
तथा दक्षिणतर्जन्या [5]वामानामाग्रमेव च ॥ ४९ ॥

अनामामध्यमाङ्गुष्ठान्यूर्ध्वीकृत्य तु दक्षिणे ।
श्लेषयेद्वामतर्जन्या कूटमुद्रेति सा स्मृता ॥ ५० ॥

तत्र मध्ये करतले दक्षिणे वाममध्यमाम् ।
शाययेच्छनकैस्तिर्यग् ज्ञेया [6]शयनमुद्रिका ॥ ५१ ॥

कृत्वा पराङ्मुखौ हस्तौ श्लेषयित्वा कनिष्ठिके ।
तर्जन्या सहितं दीर्घं वामाग्रेण पिधाय तु ॥ ५२ ॥

[1] नामाग्राभिः B
[2] संहृत्य B C
[3] B omits this *pāda*.
[4] मणिबन्धेन यतु E
[5] वामयानाग्र B
[6] प्रायन B

अधोमुखौ तथाङ्गुष्ठौ कृत्वा शेषास्तु वक्रिताः ।
कृता तु या पुनर्मुद्रा ज्ञेया गरुडसंनिभा ॥ ५३ ॥

[1]करव्यतिकरं कृत्वा ऊर्ध्वीकृत्याप्यनामिके[2] ।
क्रमेण पृष्ठसंश्लिष्टे तर्जन्योस्तु विधाय च ॥ ५४ ॥

अङ्गुष्ठाभ्यां कनिष्ठे तु व्यत्यासेनाग्र एव च ।
वेष्टयित्वा तु या कार्या व्योममुद्रेति सा स्मृता ॥ ५५ ॥

पृष्ठव्यतिकरं कृत्वा अङ्गुलीभिः परस्परम् ।
हस्तौ पुनः परावृत्य कृत्वाङ्गुष्ठावधोगतौ ॥ ५६ ॥

ललाटेन भुवं गत्वा जानुभ्यां धरणीं गतः ।
साधकः कुरुते यां तु [3]सर्पमुद्रेति सा स्मृता ॥ ५७ ॥

करौ तु संपुटौ कृत्वा दीर्घीकृत्याङ्गुलीः सह ।
अङ्गुष्ठेनाप्यथाङ्गुष्ठं वाममन्येन वेष्टयेत् ॥ ५८ ॥

महामुद्रेति सा ज्ञेया [4]मुक्ताङ्गुष्ठाङ्गुलिः स्मृता ।
अन्तर्व्यतिकरं कृत्वा विस्तीर्य च करद्वयम् ॥ ५९ ॥

ऊर्ध्वीकृत्य तथाङ्गुष्ठौ मालामुद्रेति सा स्मृता ।
अन्तर्व्यतिकरं कृत्वा [5]संहृत्याङ्गुलिकाः सह ॥ ६० ॥

ऊर्ध्वीकृत्य तथाङ्गुष्ठौ श्लिष्टौ च सहितावुभौ ।
क्रियते या पुनर्मुद्रा सा स्यान्मुसलमुद्रिका ॥ ६१ ॥

1 अत्र A B G 2 अनामिकाम् B 3 सर्वं B
4 उक्ता B 5 संहृत्य B.

बद्ध्वा वामकनिष्ठां तु दक्षिणस्य कनिष्ठया ।
कृतव्यतिकरे पश्चादङ्गुष्ठाभ्यामनामिके ॥ ६२ ॥

मध्यमे चापि विस्तीर्य कृतव्यतिकरे तथा ।
तर्जन्योः श्लेषयेत् पश्चादग्राभ्यां[1] तु तयोः पुनः ॥ ६३ ॥

एवं कृता तु या मुद्रा श्रीवृक्षेति प्रकीर्तिता ।
तर्जन्यौ च तथाङ्गुष्ठौ वक्रीकृत्य परस्परम् ॥ ६४ ॥

[2]संहृत्य चाङ्गुलिश्लेषाच्छिरोभिः श्लेषयेत् पृथक् ।
वृत्तं वलयवत् तस्मात् कृता वलयमुद्रिका ॥ ६५ ॥

ऊर्ध्वीकृत्याङ्गुलीः सर्वाः संहिताग्राः सहैव तु ।
अङ्गुष्ठं च तथा कृत्वा सम्यगभ्युद्यते करे ॥ ६६ ॥

[3]कुण्डमुद्रेति सा ज्ञेया परावृत्तविवर्जिता ।
सैव चोर्ध्वीकृताङ्गुष्ठा [4]पृष्ठप्रहृतराङ्गुलिः ॥ ६७ ॥

ज्ञेया परममुद्रेति अवक्राङ्गुलिभिः सह ।
वामाङ्गुष्ठं तथा चोर्ध्वं दक्षिणाङ्गुलिभिः सह ॥ ६८ ॥

गृहीत्वोर्ध्वीकृताङ्गुष्ठा ज्ञेया तोमरमुद्रिका ।
विस्तीर्य च तलं वाममङ्गुलीभिः सह क्रमात् ॥ ६९ ॥

दक्षिणाङ्गुलिभिः पश्चात् तद्यथा परिगृह्य वै ।
ऊर्ध्वीकृत्य तथाङ्गुष्ठौ क्रियते या तु साधकैः ॥ ७० ॥

[1] अग्राद्यां B
[2] संहृत्याङ्गुलिनिश्लेषात् G
[3] कुन्द A B G
[4] पूर्वप्रहृतथा B D

हयशीर्षकमुद्रेति कीर्तिता सा यथाविधि ।
संहृत्य चाङ्गुलीः सर्वा अन्तर्व्यतिकरक्रमात् ॥ ७१ ॥

निवेश्य तत्र चाङ्गुष्ठौ[1] सुश्लिष्टमणिबन्धकौ[2] ।
क्रमेण यागता मुद्रा ज्ञेया वामनमुद्रिका ॥ ७२ ॥

संहृत्यानामिकामध्ये योज्यं मध्यमपर्वणि ।
परस्परं यथायोगं दीर्घीकृत्य कनिष्ठिके ॥ ७३ ॥

तर्जन्यौ वक्रिताग्रे तु श्लेषयित्वा परस्परम् ।
मध्यमावलये पश्चादङ्गुष्ठाभ्यां पिधाय[3] च ॥ ७४ ॥

क्रियते या पुनर्मुद्रा शक्रमुद्रेति सा स्मृता ।
अग्निमुद्रेति विज्ञेया सैवोर्ध्वीकृततर्जनी ॥ ७५ ॥

सा चैवोर्ध्वीकृताङ्गुष्ठा ज्ञेया निर्ऋतिमुद्रिका ।
सा संहृतकनिष्ठा तु ज्ञेया वरुणमुद्रिका ॥ ७६ ॥

[4]सा चोर्ध्वानामिका ज्ञेया वायुमुद्रेति कीर्तिता ।
सा चोर्ध्वीकृतमुद्रा तु सोममुद्रेति कीर्तिता ॥ ७७ ॥

तलव्यतिकरं कृत्वा सर्वाः संहृत्य चाङ्गुलीः ।
दीर्घीकृत्याथ तर्जन्यौ श्लिष्टाग्रे तु परस्परम् ॥ ७८ ॥

अङ्गुष्ठाभ्यां [5]पिधायाथ सा च निर्माल्यमुद्रिका ।
गोपुच्छाकृतिवत् कृत्वा उत्तानिततलं करम् ॥ ७९ ॥

[1] अङ्गुष्ठं B [2] बन्धना B ; बन्धनम् C [3] विधाय A B
[4] या B E [5] विधायाथ B

सुश्लिष्टाङ्गुलिका या सा ज्ञेया [1]वसनमुद्रिका ।
दीर्घश्लिष्टोभयाङ्गुष्ठा तथा श्लिष्टकनिष्ठया ॥ ८० ॥

[2]अन्तर्यांताङ्गुलीभिस्तु श्लिष्टाभिर्मध्यपर्वसु ।
क्रियते या पुनर्मुद्रा शक्तिमुद्रेति सा स्मृता ॥ ८१ ॥

बहिर्व्यतिकराभिस्तु चतस्रः क्रमयोगतः ।
अङ्गुलीभिश्च दीर्घाभिः कालमुद्रेति सा स्मृता ॥ ८२ ॥

वामे तु दक्षिणं न्यस्य विस्तृते तु तले तलम् ।
उत्तानिता तथोत्तानैं कृता सा लोकमुद्रिका ॥ ८३ ॥

करौ च [3]विस्तृतौ कृत्वा [4]व्यस्तौ वा चाप्यवाङ्मुखौ ।
मणिबन्धेन संबद्धौ नृत्तमुद्रेति कीर्तिता ॥ ८४ ॥

वक्रितानामिकायां तु [5]विस्तारिततलाङ्गुलिः ।
किंचिद्व्यतिकराङ्गुष्ठा गीतमुद्रेति सा स्मृता ॥ ८५ ॥

अङ्गुष्ठतर्जनीभ्यां तु सहिताभ्यां च मूलतः ।
विश्लेषश्चापि शेषाणां सहितानां सहैव तु ॥ ८६ ॥

अवाङ्मुखतला या च वाद्यमुद्रेति सा स्मृता ।
अङ्के वामं तु विस्तीर्य करमुत्तानितं पुनः ॥ ८७ ॥

दक्षिणं च तथा कृत्वा तस्योपरि निवेश्य च ।
संकोचिताङ्गुली या तु योगमुद्रेति सा स्मृता ॥ ८८ ॥

[1] वामन A; वमन B [2] अन्तर्वाता B [3] विहृतौ A
[4] व्यक्तौ A [5] ततो विस्तारिताङ्गुलिः B

तत्त्वमुद्रेति सा ज्ञेया हृदये संनिवेशिता ।
ज्ञानमुद्रेति सा ज्ञेया स्थानस्य तु विशेषतः ॥ ८९ ॥

अङ्गुष्ठेन तु संवेष्ट्य कनिष्ठानामिके क्रमात् ।
मध्यमातर्जनीभ्यां तु वक्रिताभ्यामधोमुखम् ॥ ९० ॥

दक्षिणे च तथा वामे चान्योन्यश्लेषणं तु यत् ।
तत् कर्ममुद्रा विज्ञेया गवाक्षसदृशान्तरा ॥ ९१ ॥

उभयोः करयोर्मध्यं मध्यमाभ्यां तु संस्पृशेत् ।
उत्तानितकरो भूत्वा न्यासमुद्रेति सा स्मृता ॥ ९२ ॥

अङ्गुष्ठाभ्यामुभाभ्यां तु तर्जन्योरुभयोरपि ।
मध्ये स्पृष्ट्वा सुविस्तीर्य मन्त्रमुद्रेति सा स्मृता ॥ ९३ ॥

ऊर्ध्वां तु तर्जनीं कृत्वा तस्योपरि तले न्यसेत् ।
विस्तारिताङ्गुलीश्चापि पाशमुद्रेति सा स्मृता ॥ ९४ ॥

वामाङ्गुलीस्तु संहृत्य दक्षिणाङ्गुलिभिस्तु या[1] ।
वेष्टयेच्चापि [2]साङ्गुष्ठं सा वै कलशमुद्रिका ॥ ९५ ॥

तर्जन्या सहिताः सर्वा विश्लेषिततलाङ्गुलीः ।
तत्र विस्तीर्य [3]साङ्गुष्ठास्तर्जन्याश्लेषयेत् ततः ॥ ९६ ॥

[1] विस्तृता B [2] साङ्गुष्ठा B [3] तथाङ्गुष्ठौ B

तिस्रश्चतसृषु न्यस्य तथैव तु करद्वयम् ।
ज्ञेया कवचमुद्रा सा सर्वरक्षाविधायिनी ॥ १७ ॥

मुद्राणामपि सर्वासां विनियोगविधिक्रमः ।
स बृहस्पतिरात्रे तु द्रष्टव्यः क्रमयोगतः ॥ १८ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् ऋषिरात्रे
[1]मुद्रालक्षणं नाम द्वितीयोऽध्यायः

[1] मुद्राध्यायो B

# ऋषिरात्रे तृतीयोऽध्यायः

सनत्कुमारः—

योगाध्यायं प्रवक्ष्यामि योगिनां कर्मसिद्धये ।
आहारमेव योगस्य साधनं परिचक्षते ॥ १ ॥

वक्ष्यामि च यथायोगं तस्मादाहारमादितः ।
आहारास्त्रिविधाः प्रोक्तास्तन्त्रेऽस्मिन्नृषिभिः पुरा ॥ २ ॥

सात्त्विका राजसाश्चैव तामसाश्चेति वै त्रिधा ।
स्निग्धाश्च मधुरा हृद्या आहाराः सात्त्विका मताः ॥ ३ ॥

स्निग्धाश्चतुर्विधाः प्रोक्ता मधुराः षड्विधास्तथा ।
हृद्याश्चाष्टविधाः प्रोक्ता आहारक्रमयोगतः ॥ ४ ॥

स्निग्धाश्च स्नेहसिद्धाश्च स्नेहाः स्नेहयुता इति ।
[1]स्निग्धाः स्वभावतः स्निग्धा नित्यमेवाप्यकृत्रिमाः ॥ ५ ॥

[2]स्नेहिनः सहजाः सर्वे विशेषेण तिलादयः ।
स्नेहसिद्धाश्च ये चान्ये कृसरापूपपायसाः ॥ ६ ॥

एवमाद्यास्तथा चान्ये स्नेहसिद्धा इति स्मृताः ।
स्नेहास्तु [3]केवलस्नेहाः सर्पिस्तैलादयस्तु ये ॥ ७ ॥

[1] स्निग्धाश्च भावतः B [2] स्नेहानि B [3] केवलाः B

स्नेहयुक्ता इति प्रोक्ताः सह स्नेहेन मिश्रिताः ।
स्निग्धाश्चतुर्विधाः प्रोक्ता मधुरान् षड्विधाञ्छृणु ॥ ८ ॥

स्वभावाः कृत्रिमाश्चापि तथा त्रिमधुरा अपि ।
मिश्रिताश्चापि सिद्धाश्च रसान्तरयुता अपि ॥ ९ ॥

स्वभावमधुरा [1]ये तु शर्करामाक्षिकादयः ।
ते स्वभावा इति ज्ञेया ये चान्येऽप्येवमादयः ॥ १० ॥

कृत्रिमा इति विज्ञेयाः कृत्रिमेण कृतास्तु ये ।
नालिकेररसक्षीरवारिसर्पींषि चैव हि ॥ ११ ॥

[2]तानि त्रिमधुराः स्युर्वै ये चान्येऽप्येवमादयः ।
मिश्रिता मधुरैर्ये तु रसैः सक्त्वादयस्तु ये ॥ १२ ॥

मिश्रिता इति विज्ञेया ये चान्येऽप्येवमादयः ।
ये सिद्धा मधुरद्रव्यैर्गुडान्नाद्यास्तथैव च ॥ १३ ॥

ते सिद्धा इति विज्ञेया ये चान्येऽप्येवमादयः ।
रसेष्वपि च सर्वेषु ये चैव मधुरा रसाः ॥ १४ ॥

कषायाम्लादिसंयुक्ता रसा रसयुतास्तु ये ।
मधुरा इति संप्रोक्ता हृद्यानष्टविधाञ्छृणु ॥ १५ ॥

भक्ष्ये भोज्ये च पेये च लेह्ये चूष्ये तथैव च ।
आमे पक्के रसे चैव हृद्यमष्टविधं स्मृतम् ॥ १६ ॥

[1] एते D; ये ते B

[2] सद्यानमधुरास्याम्भः B

आहाराः सात्त्विकाः प्रोक्ता राजसान् कथयामि वः ।
[1]कट्वम्ललवणास्तीक्ष्णा उष्णरूक्षविदाहिनः ॥ १७ ॥

आहारा राजसास्त्वेते सप्तधा परिकीर्तिताः ।
तथा तिक्तकषायाश्च रसान्तरगता अपि ॥ १८ ॥

क्रिमिदुष्टा गन्धदुष्टा वर्णदुष्टास्तथैव च ।
तथा पर्युषिताश्चापि क्लिन्नाश्चामेध्यमेव च ॥ १९ ॥

उच्छिष्टं विरसं चैव आहारास्तामसा मताः ।
आहारैः सात्त्विकैरेव योगी योगविधिं चरेत् ॥ २० ॥

आमे तु सात्त्विकाहारे नरः शुद्धो भवेत् सदा ।
सत्त्वे तु राजसाहारे नरः शुद्धो भविष्यति ॥ २१ ॥

[2]विस्फारितस्तु देहेन[3] तामसाहारभुङ् नरः ।
शुद्धकायो भवेत् पश्चात् क्रियायोग्यो भविष्यति ॥ २२ ॥

तस्मात् सर्वप्रयत्नेन सात्त्विकाहारभुग्भवेत् ।
तत्राप्यत्यशनो नैव[4] हीनभुग्वा[5] कदाचन ॥ २३ ॥

[6]युक्ताहारो भवेद्योगी तेन योगी भविष्यति ।
आसनानि प्रवक्ष्यामि योगिनस्तु यथातथम् ॥ २४ ॥

स्वस्तिकं पद्मकं चैव [7]विस्तीर्णं भद्रकं तथा ।
तथा योगासनं चैव दण्डासनमथापि वा ॥ २५ ॥

1 बह्वाम्ल B D
2 निष्फुरिते B
3 देहे तु B
4 भाति B
5 हीनभागः A B
6 उक्ताहारः B
7 स्वास्तीर्णं E F

जङ्घं चैवार्धजङ्घं च पार्श्वमुत्कुटिकासनम् ।
दशासनानि संप्रोक्तान्यस्मिंस्तन्त्रे मुनीश्वरैः ॥ २६ ॥

जङ्घाव्यतिकरं कृत्वा स्पृशेत् करतलेन तु ।
दक्षिणेन तथा वामां[1] वामेनैव तु दक्षिणाम्[2] ॥ २७ ॥

कृतं सुश्लिष्टमेवं तु स्वस्तिकं चासनं भवेत् ।
तथा व्यतिकरे कृत्वा जङ्घे चैव क्रमेण तु ॥ २८ ॥

तले तु विन्यसेदूर्वोरुपरिष्टाद्यथाक्रमम् ।
कृतव्यत्यासमेतत्तु पद्मासनमिहोच्यते ॥ २९ ॥

अन्योन्याभिमुखौ पादावूरू[3] [4]प्रादेशमात्रकम् ।
जानुनी किंचिदुन्नम्य कण्ठे विस्तीर्णमेव तत् ॥ ३० ॥

सुश्लिष्टौ तावुभौ कुर्यात् तलौ तद्भद्रकं भवेत् ।
उन्नम्य जानुनी जङ्घे व्यत्यस्य च परस्परम् ॥ ३१ ॥

उभौ निवेश्य पादौ च सम्यग्भूमितले क्रमात् ।
संवेष्ट्य देहजङ्घोरू पर्यङ्केन सहैव तु ॥ ३२ ॥

ऋज्वासनं यथायोगं योगासनमिहोच्यते ।
जङ्घे तोरणवत् कृत्वा बन्धं पर्यङ्कबन्धने ॥ ३३ ॥

ऋज्वासनं यथापूर्वं दण्डासनमिहोच्यते ।
जङ्घामध्ये कटीचक्रं कृत्वा पर्यङ्कबन्धनम् ॥ ३४ ॥

1 वामं B
2 दक्षिणम् B
3 ऊरौ A
4 स्यादेश A

विस्तीर्य जानुनी किंचित् तस्मिन् [1]दण्डासनक्रमे ।
आस्यते [2]यत् स्थिराङ्गेन जङ्घासनमिहोच्यते ॥ ३५ ॥

एकजङ्घां स्थिरीकृत्य बन्धनस्थां यथाक्रमम् ।
भूमावेकां निवेश्याथ ऊरू श्लिष्टामरुन्धता[3] ॥ ३६ ॥

आस्यते योगिभिर्यत्तदर्धजङ्घासनं भवेत् ।
संवेष्ट्य चोर्ध्वां जङ्घां तु तथा चान्यां विचक्षणः ॥ ३७ ॥

ऊर्ध्वीकृत्य च बद्धैकां भूमौ चान्यां निवेश्य च ।
आस्यते योगिभिर्यत्तत्[4] पार्श्वासनमिहोच्यते ॥ ३८ ॥

उन्नम्य जानुनी चोभे पादाभ्यामेव भूतले ।
आस्यते योगिभिर्यत्तद् विद्यादुत्कुटिकासनम् ॥ ३९ ॥

आस्यते यत्र देशे तु तान् देशान् कथयामि वः ।
गिरयः सर्वदा श्रेष्ठा गिरीणां तु हिमालयः ॥ ४० ॥

गङ्गाप्रदेशो यस्तत्र तस्माद्बदरिकाश्रमः ।
तदलाभे च शेषाश्च पर्वतान् कथयामि वः ॥ ४१ ॥

विन्ध्यसह्यौ महेन्द्रश्च ततः श्रीकण्ठको गिरिः ।
माल्यवान् मलयश्चैव किष्किन्धो नाम पर्वतः ॥ ४२ ॥

श्रीगिरिश्चित्रकूटश्च [5]नवैते पर्वताः स्मृताः ।
एतेषामप्यलाभे तु शैलाः सर्वे तु पूजिताः ॥ ४३ ॥

[1] दण्डासने A B [2] यः A [3] अरुन्दता B
[4] युक्तं B [5] दशैते A B

नद्यस्तु सर्वदा श्रेष्ठास्तासां गङ्गा प्रशस्यते ।
तत्रापि पुष्करं श्रेष्ठं पुष्करात् पुरुषोत्तमम्[1] ॥ ४४ ॥

प्रयागस्तु ततस्तस्मात् तदलाभेऽन्यसंग्रहः ।
ततस्तु यमुना देवी सिन्धुर्गोदा सरस्वती ॥ ४५ ॥

शरावती विपाशा च शतद्रुर्नर्मदा तथा ।
कावेरी ताम्रपर्णी च दशैताः क्रमशः स्मृताः ॥ ४६ ॥

एतासामप्यलाभे तु शस्ताश्चान्यास्तु सिन्धवः ।
नदीनामपि सर्वासां दक्षिणं तीरमुत्तमम् ॥ ४७ ॥

तीराणामपि सर्वेषामन्तर्द्वीपः प्रशस्यते ।
नदीनामप्यलाभे तु निर्जनं वनमुत्तमम् ॥ ४८ ॥

वनानामपि सर्वेषां नैमिशारण्यमुत्तमम् ।
काम्यकं दण्डकारण्यं जनस्थानं महावनम् ॥ ४९ ॥

वनान्यन्यानि शस्तानि यानि पुण्यानि चैव हि ।
ह्रदानामपि सर्वेषां सदैवं ह्रदमुत्तमम् ॥ ५० ॥

चन्द्रपुष्करिणी चैव सरः पञ्चाप्सरस्तथा ।
पम्पा चैव विशाला च आगस्त्यं ह्रदमेव च ॥ ५१ ॥

ततो ब्रह्मसरश्चैव प्रशस्तान्यपराणि च ।
[2]आश्रमाश्चैव पुण्यानि देवतायतनानि च ॥ ५२ ॥

सर्वाण्यपि च तीर्थानि शुभान्यायतनानि च ।
स्थानानि च प्रशस्तानि योगासनविधिं प्रति ॥ ५३ ॥

[1] पुरुषोत्तमः B E [2] आश्रमाणि B D

तत्राराध्य च देवेशं नारायणमनामयम् ।
क्षेत्रज्ञं तं महाविष्णुमणीयांसमणोरपि ॥ ५४ ॥

विष्णुं जिष्णुं सुरश्रेष्ठं वासुदेवं सनातनम् ।
कर्मयोगी भवेत् पूर्वं कर्मणानेन साधकः ॥ ५५ ॥

तेन तुष्टः सदाविष्णुर्ज्ञानयोगं प्रयच्छति ।
तेन ज्ञानेन पूतात्मा पञ्चरात्रकृतश्रमः ॥ ५६ ॥

पञ्चस्थानार्चनं कृत्वा पञ्चकालविशेषवित् ।
तत्र च प्रत्ययं लब्ध्वा विष्णुनानुग्रहीकृतः[1] ॥ ५७ ॥

आसनं विधिवत् कृत्वा योगं युञ्जीत योगवित् ।
यत्नं वायुजये कुर्यान्नाडीशोधनपूर्वकम् ॥ ५८ ॥

नाडीचक्रप्रकारस्तु कालाध्याये प्रकीर्तितः ।
षडङ्गान्यपि योगस्य तथा पद्मोद्भवे किल ॥ ५९ ॥

कथितानि यथायोगं वायुरोधं ब्रवीमि वः ।
पूरकं कुम्भकं चैव रेचकं चेति वै क्रमात् ॥ ६० ॥

[2]एषां मात्राक्रमश्चैव प्रोक्तः पद्मोद्भवे किल ।
इडया पूर्यते वायुः पिङ्गल्या कुम्भके खलु ॥ ६१ ॥

मात्रायोगक्रमेणैव रेच्यते तु सुषुम्नया ।
[3]पिधाय पूर्यते वायुरङ्गुष्ठेन तु दक्षिणम् ॥ ६२ ॥

[1] कृतम् A B [2] तदां E [3] विधाय A B

[1]नासापुटं तु वामेन पुटेन क्रमयोगतः ।
कुम्भकं केवलं कुर्यात् कृत्वा नासापुटं पुनः ॥ ६३ ॥

रेचयेद्दक्षिणेनैव [2]पिधाय च तथा पुनः ।
मात्रातृतीयकं न्यूनं विषमं कुरुते मरुत् ॥ ६४ ॥

तथा क्रमविपर्यासे प्रयोगस्य विपर्ययात् ।
पूरणे सर्वनाड्यस्तु पूर्यन्ते क्रमयोगतः ॥ ६५ ॥

कुम्भके चैव रुध्यन्ते मुच्यन्ते रेचके पुनः ।
मात्रया पूर्यते पूर्वमिडा प्रथमया ततः ॥ ६६ ॥

सा द्वितीयतृतीयाभ्यां पिङ्गला पूर्यते तथा ।
चतुर्थ्यैव सुषुम्ना तु मात्रया परिपूर्यते ॥ ६७ ॥

पञ्चम्या मात्रया चैव गान्धारी परिपूर्यते ।
षष्ठ्या चैव तु सप्तम्या पूषा च परिपूर्यते ॥ ६८ ॥

अष्टम्या हस्तिजिह्वा च नवम्या चाप्यलम्बुसा ।
दशम्या [3]सुयशाश्चैव एकादश्या तु कौशिकी[4] ॥ ६९ ॥

द्वादश्या तु कुहूश्चैव पूर्यते क्रमयोगतः ।
भ्रमन्ति चक्रवत् सर्वा [5]नाड्यो वायुपूरिताः ॥ ७० ॥

नाडीभ्रमणवेगेन नाभिदेशाद्धुताशनः ।
उत्थितो निर्दहेद्दोषान् सर्वानेव शरीरगान् ॥ ७१ ॥

[1] नासापुटे A
[2] विधाय A B
[3] सुयशा चैव B
[4] कौशिनी B F
[5] A B omit this and the next *pāda-s*.

नाडयः शुद्धिमायान्ति शोधिता वह्निमारुतैः ।
रेचकं तु ततः कुर्यान्मात्राकालमवेत्य च ॥ ७२ ॥

द्वाभ्यामेव तु मात्राभ्यां कुहूर्मुच्येत वायुना ।
तृतीयया चतुर्थ्या च कौशिकी[1] परिमुच्यते ॥ ७३ ॥

पञ्चम्या चाथ षष्ठ्या च [2]सुयशाः परिमुच्यते ।
सप्तम्या च तथाष्टम्या मुच्यतेऽलम्बुसा ततः ॥ ७४ ॥

नवम्या च दशम्या च हस्तिजिह्वा तु मुच्यते ।
एकादश्या तु द्वादश्या त्रयोदश्या तथैव च ॥ ७५ ॥

चतुर्दश्या च मात्राभिः पूषा हि परिमुच्यते ।
पञ्चदश्याथ षोडश्या गान्धारी परिमुच्यते ॥ ७६ ॥

सप्तदश्याष्टदश्या च इडैव परिमुच्यते ।
ततश्चैकोनविंशत्या विंशत्या च तथैव च ॥ ७७ ॥

मात्राभिर्मुच्यते चापि पिङ्गला च त्रिकेण च ।
मात्राभ्यामथ शेषाभ्यां सुषुम्ना परिमुच्यते ॥ ७८ ॥

प्राणादयः स्थितास्तासु क्रमान्नाडीषु वायवः ।
क्षोभमायान्ति पूरे तु भ्रमन्त्येव तु कुम्भके ॥ ७९ ॥

रेचके तु क्रमादेते उन्मूल्यन्ते न संशयः ।
उन्मूलनक्रमस्तेषां जयायैव तु जायते ॥ ८० ॥

1 कौशिनी B F

2 सुयशा B

नागः कुमारः कृकरो देवदत्तो धनंजयः ।
जितास्तु पूरके चैव पञ्च चैते न संशयः ॥ ८१ ॥

प्राणादिषु लयं यान्ति यथासंख्यक्रमेण तु ।
कुम्भके च जिता एव चत्वारोऽपानपूर्वकाः ॥ ८२ ॥

प्राण एव लयं यान्ति प्राणो जपसमाश्रयः ।
मनो बुद्धिरहंकार इन्द्रियाण्यपि सर्वशः ॥ ८३ ॥

प्राणमेव समायान्ति सहैव मरुदादिना ।
तावदेव प्रवृत्तिः स्यान्निवृत्तिस्तावदेव तु ॥ ८४ ॥

योगाभ्यासेन योगी तु जीवोन्मीलनमाचरेत् ।
उन्मीलितस्तथा जीवः कर्म चैति च तत्र च ॥ ८५ ॥

हृत्पद्मं रेचके फुल्लं वायुना निश्चलीकृतम् ।
अन्तस्तत् प्रविशेत् काले क्षेत्रज्ञो यत्र वै स्थितः ॥ ८६ ॥

कुम्भकेन निरुद्धं तत् पद्ममूर्ध्वमुखं भवेत ।
सुषुम्ना इति सूर्यांशुरन्तः सुषिरसंयुतः ॥ ८७ ॥

तन्मध्ये चामृता नाम धारा चन्द्रामृतस्य तु ।
स्थिता रक्तस्य शुक्ला तु भित्त्वा सूर्यस्य मण्डलम् ॥ ८८ ॥

सुषुम्ना च शिरोमध्यं भित्त्वा हृत्पद्ममाश्रिता ।
सर्वतः परिगृह्यैतत् तन्निध्यानपरो भवेत् ॥ ८९ ॥

स्थितः सर्वेषु देहेषु एक एव रवेः करः ।
तस्मिन् करे संनिवेश्य जीवं[1] योगी समाधिना ॥ ९० ॥

[1] जीवः A

विन्यस्य तं भ्रुवोर्मध्ये ध्यायेन्नारायणं प्रभुम् ।
ध्यात्वा चामृतधारायां तन्मध्ये विनिवेश्य च ॥ ९१ ॥

सुषुम्नान्तमतिक्रम्य ऊर्ध्वं वै सूर्यमण्डलम् ।
ततश्चन्द्रमसं गत्वा तन्मध्ये च स्थितः प्रभुः ॥ ९२ ॥

ततः परतरं देवं सदाविष्णुं समाश्रयेत् ।
स एव निष्कलो देवः स च नारायणः प्रभुः ॥ ९३ ॥

वासुदेवं जगद्बीजं कूटस्थमचलं विदुः ।
परात् परतरः सोऽयं स एव तमसः परः[1] ॥ ९४ ॥

तस्मात् परतरं नास्ति स्थूलं वा सूक्ष्ममेव वा ।
तमाहुः पुरुषं नित्यं तद्विष्णोः परमं पदम् ॥ ९५ ॥

तद्विष्णुपदमासाद्य न भूय इह जायते ।
एवं वायुजयं कृत्वा योगी योगविचक्षणः ॥ ९६ ॥

अभ्यासाद्विष्णुसायुज्ये यत्नं परममास्थितः ।
अभ्यासात् प्रत्ययाः सर्वे जायन्ते मुक्तिहेतवः ॥ ९७ ॥

स्वप्ने चैव स्वदेहे च देवे चैवं मनस्यपि ।
इन्द्रियेषु च सर्वेषु जायन्ते प्रत्ययाः पृथक् ॥ ९८ ॥

दर्शनं चैव संयोगः संभाषणमतः परम् ।
अतीतानागतोक्तिश्च तथा तत्त्वनिवेदनम् ॥ ९९ ॥

स्वप्नप्रत्ययकाले तु पञ्चावस्थाः प्रकीर्तिताः ।
केवलं दर्शनं विष्णोः प्रथमा सा दशा स्मृता ॥ १०० ॥

[1] परम् B

द्वितीया तेन संयोगस्तृतीया[1] भाषणं भवेत् ।
[2]अतीतानागतोक्तिश्च तुरीया तत्त्वपङ्क्तयः ॥ १०१ ॥

अकाले खे प्रदृश्यन्ते पञ्चमी सा दशा स्मृता ।
प्रथमायां दशायां तु मरणं यदि जायते ॥ १०२ ॥

भयंकरस्तु दैत्यानां भवेद्गरुडवाहनः ।
द्वितीयायां दशायां तु मरणं यदि जायते ॥ १०३ ॥

शङ्खचक्रधरो भूत्वा विष्णुलोके महीयते ।
तृतीयायां दशायां तु मरणं यदि जायते ॥ १०४ ॥

समानैश्वर्ययुक्तस्तु विष्णोर्विष्णुपदं व्रजेत् ।
चतुर्थ्यां च दशायां तु मरणं यदि जायते ॥ १०५ ॥

सर्वलोकाधिपः श्रीमान् सुरैश्वर्यपदं व्रजेत् ।
पञ्चम्यां च दशायां तु मरणं यदि जायते ॥ १०६ ॥

महाविष्णुपुरं प्राप्य द्वारपालो भविष्यति ।
[3] . . . . . . . .
मनःप्रत्ययकालेऽपि पञ्च चैव दशाः स्मृताः ॥ १०७ ॥

परोक्षदर्शनं चैव भविष्यच्चिन्तनं तथा ।
अतीन्द्रियेषु च ज्ञानं सर्वशास्त्रार्थदर्शनम् ॥ १०८ ॥

ऐकाग्र्यं च तथा विष्णौ दशाः पञ्च प्रकीर्तिताः ।
परोक्षे यस्य यत् कर्म शुभं वा यदि वाशुभम् ॥ १०९ ॥

[1] क्रीडानामयुतानि च A B
[2] A B lack this line.
[3] Gap in all MSS.

प्रत्यक्षमिव दृश्येत प्रथमा सा दशा स्मृता ।

[1] . . . . . . . . .

सर्वेषामपि वेदानां शास्त्राणामपि सर्वशः ॥ ११० ॥

सर्वत्र दर्शनं यच्च चतुर्थी तु दशा स्मृता ।
एकान्तचिन्तना देवे नान्यचिन्ता कदाचन ॥ १११ ॥

स्मृतिशेषे तु देवानामेकान्तत्वव्यवस्थया ।
जाग्रत्स्वप्नेऽपि काले तु पञ्चमी सा दशा स्मृता ॥ ११२ ॥

प्रथमायां दशायां तु मरणं यदि जायते ।
महाविष्णुपदं प्राप्य भवेद्धर्मरतः सदा ॥ ११३ ॥

द्वितीयायां दशायां तु मरणं यदि जायते ।
महाविष्णुपदं प्राप्य भवेच्च पुरपालकः ॥ ११४ ॥

तृतीयायां दशायां तु मरणं यदि जायते ।
महाविष्णुपदं प्राप्य महाविष्णुसमो भवेत् ॥ ११५ ॥

[1] . . . . . . . . .

इन्द्रियाणि दश प्राहुः कर्मबुद्धीन्द्रियाख्यया ।
तेषां तु कर्म संयोगः स्वैः स्वैस्तु विषयैरपि ॥ ११६ ॥

एकैवात्र दशा प्रोक्ता दिव्यभोगेन योजिता ।
अस्यां दशायामुत्क्रान्तिः सदाविष्णुपदं नयेत् ॥ ११७ ॥

[1] Gap in all MSS.

पञ्चप्रत्ययकाले तु एकविंशतिका दशाः ।
नित्यमेव दशाश्चेमाः प्रत्ययेषु पृथक् पृथक् ॥ ११८ ॥

योगिनो यस्य जायन्ते स जीवन्मुक्त उच्यते ।
एत एव भविष्यन्ति सदा वै कर्मयोगिनः ॥ ११९ ॥

तस्माद्योगी भवेन्नित्यं नारायणमनामयम् ।
योगाभ्यासेन यास्यन्ति तद्विष्णोः परमं पदम् ॥ १२० ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे योगविधिर्नाम तृतीयोऽध्यायः

## ऋषिरात्रे चतुर्थोऽध्यायः

सनत्कुमारः—

अथातः संप्रवक्ष्यामि तप्यते तु यथा तपः ।
पूर्वं देशं प्रवक्ष्यामि तपोवृद्धिश्च यत्र तु ॥ १ ॥

प्रयागो ब्रह्मदुर्गं च कुरुक्षेत्रं गया तथा ।
ब्रह्मावर्तं भृगुपथं पुरुषोत्तमसंज्ञितम् ॥ २ ॥

देवतीर्थं महातीर्थं चन्द्रपुष्करिणी तथा ।
देवह्रदः पञ्चनदं तथा पञ्चाप्सरःसरः ॥ ३ ॥

तथा [1]श्रीकण्ठकं चैव चन्द्रतीर्थं महाबलम् ।
अगस्त्यतीर्थं श्रीसानुर्ब्रह्मकुण्डं [2]तथेश्वरम् ॥ ४ ॥

गोकर्णं कन्यकातीर्थं ततः सेतुमुखं तथा ।
सालग्रामं सरिद्द्वीपमग्नितीर्थं तथैव च ॥ ५ ॥

सर्वे पुण्याश्रमाश्चापि पुण्यनद्यस्तथैव च ।
पुण्यारण्यानि सर्वाणि पुण्यतीर्थानि चैव ह ॥ ६ ॥

पुण्याश्चैव तथा शैलाः पुण्यान्यायतनानि च ।
आश्रमाणां तु सर्वेषामुत्तमं बदराश्रमम् ॥ ७ ॥

[1] श्रीकलकं B [2] तथेश्वरः B

नदीनामपि सर्वासां गङ्गा चैव प्रशस्यते ।
अरण्यानां च सर्वेषां पश्चिमद्वारमुत्तमम् ॥ ८ ॥

तेषामपि च सर्वेषां नदीतीरस्थमुत्तमम् ।
शैलानामपि सर्वेषामुत्तमो हिमवान् गिरिः ॥ ९ ॥

तथैवायतनानां तु विष्णवायतनमुत्तमम् ।
विष्णवालयानां सर्वेषां पश्चिमद्वारमुत्तमम् ॥ १० ॥

तेषामपि च सर्वेषां नदीतीरस्थमुत्तमम् ।
नदीतीरगतानां तु जलधेस्तीरजं परम् ॥ ११ ॥

तेषामपि च सर्वेषां पुष्पोद्यानगतं शुभम् ।
नदीमध्यगतानां तु पर्वतस्थं विशिष्यते ॥ १२ ॥

तत्र देशे तपः कुर्याद्यत्र भागवतो जनः ।
कालयोगं प्रवक्ष्यामि येन कालेन तप्यते ॥ १३ ॥

मासाश्च द्वादश प्रोक्ताः संक्रान्तिस्तेषु शस्यते ।
अयनं शस्यते तस्यां तस्मात्तु विषुवं परम् ॥ १४ ॥

विषुवात्तु व्यतीपातस्तस्माद्वै विष्णुपञ्चमी ।
उपवासे प्रशस्तानि सर्वे एते न संशयः ॥ १५ ॥

प्रायश्चित्तक्रमारम्भे मुख्यभूतान्यमूनि च ।
कृच्छ्रमूलं तपो ज्ञेयं कृच्छ्रसंज्ञां वदाम्यतः ॥ १६ ॥

कृच्छ्रं चाप्यतिकृच्छ्रं च तथा कृच्छ्रातिकृच्छ्रकम् ।
तप्तकृच्छ्रं च यत् प्रोक्तं ततः सांतपनं तथा ॥ १७ ॥

चान्द्रायणं पराकं चाप्येतान्यन्यानि सर्वशः ।
कृत्वा तानि यथायोगं तपः पश्चात् समाचरेत् ॥ १८ ॥

नित्यनैमित्तिकान्यत्र प्रायश्चित्तानि कर्माणि ।
नित्यानि नित्यकृत्यानि तथान्यानीतराणि तु ॥ १९ ॥

जपं कुर्यात् तपः कुर्वञ्जपमूलं तपो विदुः ।
पयश्चर्या भवेत् पूर्वं मूलचर्या तथैव च ॥ २० ॥

ततश्च फलचर्या तु शाकचर्या तथैव च ।
यवचर्या पर्णचर्या जलचर्या तथैव च ॥ २१ ॥

ततस्तु वायुचर्या च तपोऽष्टकमुदाहृतम् ।
अत्र चेदं प्रवक्ष्यामि पयश्चर्यादिकं क्रमात् ॥ २२ ॥

नियमी केवलश्चापि मिश्रकश्चाप्यमिश्रकः ।
चत्वारस्तत्र संप्रोक्ताः पयोव्रतचरा नराः ॥ २३ ॥

पूर्वोक्तेन प्रमाणेन कुडवादिव्यवस्थया ।
नातिरिक्तं न च न्यूनमन्वहं च पयः पिबेत् ॥ २४ ॥

नियमी स तु विज्ञेयः शेषाणां तु विशिष्यते ।
नित्यं चानियमेनैव यथालाभं पयः पिबेत् ॥ २५ ॥

न्यूनं वाप्यतिरिक्तं वा स केवल उदाहृतः ।
दध्ना घृतेन मूत्रेण गोमयेनापि मिश्रितम् ॥ २६ ॥

यथालाभं तु पिबति मिश्रकः स उदाहृतः ।
पयो वा दधि वा सर्पिर्मूत्रं वा गोमयं तु वा ॥ २७ ॥

केवलं तु यथालाभममिश्रं भक्षयेत्तु यः ।
स चामिश्र इति प्रोक्तः पयोव्रतचरो नरः ॥ २८ ॥

दग्धः [1]स्निग्धस्तथानग्निर्यथालाभ इति क्रमात् ।
मूलव्रतचराः प्रोक्ताश्चत्वारस्तत्र संज्ञिताः ॥ २९ ॥

केवलं चाग्निदग्धं तु मूलं यश्चापि भक्षयेत् ।
न किंचिद्भक्षयेदन्यत् स दग्ध इति कीर्तितः ॥ ३० ॥

सिद्धं पयसि वान्यस्मिन्नुदके वापि केवले ।
[2]भक्षयेद्यस्तु वै योगी स स्निग्धः परिकीर्तितः ॥ ३१ ॥

आममेव सदा मूलं भक्षयेद्यस्तु नित्यशः ।
सोऽनग्निरिति संप्रोक्तः शेषाणामेष शस्यते ॥ ३२ ॥

आमं वाप्यथ दग्धं वा स्निग्धं वा मिश्रितं तु वा ।
भक्षयेद्यस्तु मूलं वै यथालाभः स उच्यते ॥ ३३ ॥

पक्कश्च तरुणश्चैव [3]युक्त आम इति क्रमात् ।
चत्वारस्तत्र संप्रोक्ताः फलव्रतचरा नराः ॥ ३४ ॥

भक्षयेद्यस्तु वै [4]नित्यं सुपक्कानि फलानि तु ।
स पक्क इति विज्ञेयः फलव्रतचरो नरः ॥ ३५ ॥

तरुणान्यपि पक्कानि अग्निपक्कानि चैव हि ।
फलानि भक्षयेद्यस्तु तरुणः स उदाहृतः ॥ ३६ ॥

[1] स्निग्धः स्वनाभश्च A B
[2] B omits this line.
[3] पक्कापक्कं तथैव च B D
[4] Corrupt reading in B D

अग्निपक्वमथामं वा पक्वं वा तरुणं तु वा ।
मिश्रितं भक्षयेद्यस्तु स युक्त इति संज्ञितः ॥ ३७ ॥

आममेव तु चाश्नीयादपक्वं तरुणं तु वा ।
आम इत्युच्यते सोऽयं फलव्रतचरो नरः ॥ ३८ ॥

[1]पाचकः पूरकश्चैव निष्ठुरश्च प्रकीर्णकः ।
चत्वारस्तत्र संप्रोक्ताः शाकव्रतचरा नराः ॥ ३९ ॥

पक्वं तु केवलं शाकं योऽश्नीयात् स्नेहवर्जितम् ।
स [2]पाचक इति ज्ञेयः शाकव्रतचरो नरः ॥ ४० ॥

घृतेन दध्ना पयसा मिश्रितं यस्तु भक्षयेत् ।
क्रमेण चाग्निना पक्वं पूरकः समुदाहृतः ॥ ४१ ॥

आमं तु केवलं शाकं भक्षयेत् पशुवच्च यः ।
स निष्ठुर इति प्रोक्तः शाकव्रतचरो नरः ॥ ४२ ॥

मिश्रितं भक्षयेद्यस्तु शाकं मूलफलादिभिः ।
पक्वापक्वैर्यथायोगं स प्रकीर्णक उच्यते ॥ ४३ ॥

यावकः सक्तुकश्चैव गोनिष्क्रान्नः समूत्रकः ।
चत्वारस्तत्र संप्रोक्ता यवव्रतचरा नराः ॥ ४४ ॥

यवैर्वेणुयवैश्चापि यवागूं यः पिबेत् सदा ।
स यावक इति प्रोक्तो यवव्रतचरो नरः ॥ ४५ ॥

[1] साधकः B

[2] साधकः B

यवसक्तुं पिबेद्यस्तु घृताक्तं वापि केवलम् ।
तोयेन पयसा वापि सक्तुकः स उदाहृतः ॥ ४६ ॥

गोनिष्क्रान्तयवैर्यस्तु यवागूं पायसं तु वा ।
भुङ्क्ते घृताप्लुतां शश्वद् गोनिष्क्रान्तः स उच्यते ॥ ४७ ॥

गोमूत्रे चैव संसिद्धां यवागूं वान्नमेव वा ।
स्नेहवर्जं तु यो भुङ्क्ते समूत्रक उदाहृतः ॥ ४८ ॥

पर्णी चैव स्वयंपाकी प्रवरः [1]प्लविकस्तथा ।
चत्वारस्तत्र संप्रोक्ताः पर्णव्रतचरा नराः ॥ ४९ ॥

पर्णानि भक्षयेद्यस्तु केवलान्यपि सर्वशः ।
पर्णी चेति स विज्ञेयः पर्णव्रतचरो नरः ॥ ५० ॥

पाण्डु तत्र च संत्यक्तं स्वयमेव महीरुहैः ।
भक्षयेद्यः सदा पर्णं स्वयंपाकी स उच्यते ॥ ५१ ॥

शुष्कैरेव सदा पर्णैर्गात्रां यश्चापि वर्तयेत् ।
[2]प्रवरश्चोच्यते सोऽयं पर्णव्रतचरो नरः ॥ ५२ ॥

[3]
. . . . . . . . .

तोये चैव सदा स्थित्वा तोयपानेन यश्चरेत् ।
स मासक इति प्रोक्तस्तोयव्रतचरो नरः ॥ ५३ ॥

एतेनैव तु यः स्थित्वा नियमेन दिने दिने ।
आत्मन्येवागतं तोयं पिबेन्नान्यत् कदाचन ॥ ५४ ॥

[1] प्लवकस्तथा E [2] पर इत्युच्यते B [3] Gap in all MSS.

स गात्रिक इति प्रोक्तस्तोयव्रतचरो नरः ।
रसिको गान्धिकश्चैव शुद्धः संकीर्णकस्तथा ॥ ५५ ॥

चत्वारस्तत्र संप्रोक्ता वायुव्रतचरा नराः ।
रसयुक्तस्तु यो वायुः फलादिभ्यः समुत्थितः ॥ ५६ ॥

तं त्रिः षड् भक्षयेद्यस्तु रसिकः स उदाहृतः ।
[1]भूसेरासारसंयोगे गन्धो यः सुरभिः स्मृतः ॥ ५७ ॥

वायुतस्तं समानीतं भक्षयेद्यस्तु गान्धिकः ।
शुद्धं तु केवलं वायुं भक्षयेद्यस्तु साधकः[2] ॥ ५८ ॥

स शुद्ध इति संप्रोक्तो वायुव्रतचरो नरः ।
संकीर्णं मिश्रितं यस्तु भक्षयेद्वायुमुद्वहन् ॥ ५९ ॥

स संकीर्ण इति प्रोक्तो वायुव्रतचरो नरः ।
एते भागवताः प्रोक्ता द्वात्रिंशद्व्रतचारिणः ॥ ६० ॥

अनेन तापसाः सर्वे द्वात्रिंशद्भेदमाश्रिताः ।
मुनित्वान्मुनयो जाता नारायणपरायणाः ॥ ६१ ॥

ग्रीष्मे पञ्चाग्निमध्यस्थाः प्रावृष्यपि शिलाशयाः ।
शरद्यातपिनः केचिद्धेमन्ते जलशायिनः ॥ ६२ ॥

शिशिरे खशयाः केचिद्वसन्ते स्थानमाश्रिताः ।
पादेनैकेन तिष्ठन्ति केचिद्वैखानसा नराः ॥ ६३ ॥

[1] द्रुमे E

[2] गान्धिकः B

. . . . . . केचिच्च यतयोऽभवन् ।
संजाता नैष्ठिकाः केचित् केचिद्भागवतव्रताः ॥ ६४ ॥

अनन्यदेवताभक्ताः पञ्चकालमुपासकाः ।
अष्टाक्षरपराः केचिद् द्वादशाक्षरतत्पराः ॥ ६५ ॥

केचित्तु विष्णुगायत्र्या परावरपरा नराः ।
नारसिंहपराः केचित् षडक्षरपरायणाः ॥ ६६ ॥

पञ्चोपनिषदाः केचिन्नवाक्षरपरायणाः ।
तपसा प्राप्यते सर्वं तपसा दृश्यते परम् ।
एवं हि तपसा लब्ध्वा तपोध्यानपरो भवेत् ॥ ६७ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे तपोऽध्यायश्चतुर्थः

## ऋषिरात्रे पञ्चमोऽध्यायः

सनत्कुमारः—

[1] . . . . . . . . . । 
. . . . पुष्पयागं तथैव च ॥ १ ॥

पञ्चवर्णानि पुष्पाणि . . . . ।
शुद्धवर्णानि चैतानि मिश्रितान्यपराणि तु ॥ २ ॥

वृन्तं कर्णिकया छित्त्वा पर्णान्यपि च सर्वशः ।
ऊहापोहविधानज्ञः क्रियायोगविचक्षणः ॥ ३ ॥

कुर्यात् तन्मण्डले पुष्पं यथावर्णानुपूर्वशः ।
पीतैस्तु कर्णिका कार्या पीतरक्तैस्तु केसरः[2] ॥ ४ ॥

कर्णिकावलयं कुर्याद्रक्तैर्वा हरितैस्तु वा ।
यत्तु केसरान्तर्वलयं श्वेतैस्तत् परिकल्पयेत् ॥ ५ ॥

दलानां पूर्वभागं तु श्वेतरक्तविमिश्रितैः ।
रक्तैस्तु केवलैः कुर्याद्दलान्तानि विचक्षणः ॥ ६ ॥

संधिरेखा दलानां तु श्यामैस्तु परिकल्पयेत् ।
दलान्तर्वलयं कुर्याद्धरितैः कुसुमैः शुभैः ॥ ७ ॥

[1] Gap in all MSS. [2] केसराः B

नाभिरेव ततः पश्चात् सितैः कुर्याद्विचक्षणः ।
मध्यरेखां ततः पश्चात् सितैः कुर्याद्विचक्षणः ॥ ८ ॥

अन्तरेखां ततः कुर्याद्रक्तैस्तु कुसुमैः शुभैः ।
अन्तरान्तररेखास्तु हरितैः कल्पयेद्बुधः ॥ ९ ॥

नेम्यादिवलयं कृष्णैर्नेम्यन्तवलयं सितैः ।
नेमिं पीतैस्तु कुर्वीत रक्तैर्वापि विचक्षणः ॥ १० ॥

पञ्चावरणमेतत्तु मण्डलं परिकीर्तितम् ।
दलादौ दलसंधौ च दलान्ते च यथाक्रमम् ॥ ११ ॥

तत्त्वविन्यासयोगेन स्थितमावरणत्रयम् ।
अरादौ चाप्यरान्ते च स्थितमावरणद्वयम् ॥ १२ ॥

कथयामि यथायोगं बहिरावरणत्रयम् ।
बहिरर्गलरेखां तु पीतैः पूर्वां तु कल्पयेत् ॥ १३ ॥

द्वितीयां पीतवर्णैस्तु कल्पयेच्च विचक्षणः ।
तृतीयां हरितैः कुर्यात् सर्वा वा हरितैरपि ॥ १४ ॥

एभिः पद्मानि सर्वाणि पूर्वोक्तक्रमयोगतः ।
मण्डलस्य प्रमाणं च नामभेदविधिस्तथा ॥ १५ ॥

तत्त्वानामपि नामानि संख्यायाः क्रम एव च ।
बहिरावरणभेदश्च दैवतानि च सर्वशः ॥ १६ ॥

द्वाराणि मण्डलस्यापि द्वाराणां क्रम एव च ।
तोरणानां क्रमश्चापि यागमण्डपलक्षणम् ॥ १७ ॥

[1]कलशानां तु विन्यासः पताकानां च लक्षणम् ।
कथितं ब्रह्मरात्रे तु विशेषं कथयामि वः ॥ १८ ॥

तिलहोमं पद्महोमं मधुहोमं च वर्जयेत् ।
अधिवासं न कुर्यात्तु नववस्त्रादिसंग्रहम् ॥ १९ ॥

दक्षिणानां प्रदानं च न शिष्यशिरवेष्टनम् ।
न शिरःस्पर्शनं चापि विद्यते तु कदाचन ॥ २० ॥

शेषं सर्वं तु [2]पूर्वोक्तं दीक्षा चापि तथाविधा ।
समिद् घृतं चरुश्चापि द्रव्यं वै होमकर्मणि ॥ २१ ॥

सहस्राहुतयश्चापि कार्याश्चैव पृथक् पृथक् ।
पायसं कृसरं चापि हरिद्रान्नं गुडौदनम् ॥ २२ ॥

अपूपानि च सर्वाणि फलानि विविधानि च ।
निवेद्यं च प्रयोज्यानि बहिरावरणे क्रमात् ॥ २३ ॥

प्रथमावरणे दद्याद् गुडान्नं तु विचक्षणः ।
द्वितीयावरणे दद्यात् पायसं च विचक्षणः ॥ २४ ॥

हरिद्रान्नं बहिर्दद्याद् बलिं पारिषदप्रियम् ।
अर्पयित्वाप्यपूपानि सर्वत्र विनियोजयेत् ॥ २५ ॥

शरावे दधिमिश्रं तु शुद्धान्नं तु निवेदयेत् ।
फलान्यपि च सर्वाणि सर्वेषां तु निवेदयेत् ॥ २६ ॥

1 कलशस्य E    2 पूर्वोक्तां दीक्षां चापि तथाविधाम् E

प्राच्यां तु प्राङ्मुखो भूत्वा निवेद्यानि निवेदयेत् ।
आग्नेये प्राङ्मुखश्चैव दक्षिणे दक्षिणामुखः ॥ २७ ॥

प्रत्यङ्मुखो निर्ऋत्यां तु प्रतीच्यां [1]च तथा पुनः ।
प्रत्यङ्मुखस्तु वायव्ये उदीच्यां चाप्युदङ्मुखः ॥ २८ ॥

प्राङ्मुखश्च तथेशाने पूजयेच्च विचक्षणः ।
एवं द्वितीयावरणे तृतीयावरणेऽपि च ॥ २९ ॥

दले चाभिमुखे दद्यान्निवेद्य सर्वमेव तु ।
विधिना चार्चयित्वैवं शिष्यं हस्तेऽपि दक्षिणे ॥ ३० ॥

संगृह्य दक्षिणेनैव पुष्पाञ्जलिममन्विनः ।
नीत्वा प्रदक्षिणं शिष्यं मण्डलं तु प्रवेशयेत् ॥ ३१ ॥

आराधयित्वा तेनापि गन्धपुष्पादिभिः क्रमात् ।
व्रतानि शिक्षयित्वाथ शिष्यमापादयेन ततः ॥ ३२ ॥

प्रथमावरणे चैव ब्राह्मणस्य प्रवेशनम् ।
द्वितीयावरणे चैव क्षत्रियस्य प्रवेशनम् ॥ ३३ ॥

तृतीयावरणे चापि वैश्यस्यापि प्रवेशनम् ।
बहिरेव स्थितिः प्रोक्ता स्त्रीशूद्राणां तु सर्वदा ॥ ३४ ॥

न मण्डलप्रवेशस्तु स्त्रीशूद्राणां विधीयते ।
मोहात् प्रवेशयेदेतानाचार्योऽज्ञानतोऽपि वा ॥ ३५ ॥

[1] तु E

पतन्ति नरके घोरे निष्कृतिश्च न विद्यते ।
तस्मात् सर्वप्रयत्नेन स्त्रीशूद्रान् न प्रवेशयेत् ॥ ३६ ॥

वैदिकं तान्त्रिकं चैव तथा वैदिकतान्त्रिकम् ।
मन्त्रत्रयं क्रमेणोक्तं दीक्षितानां तु मण्डले ॥ ३७ ॥

सर्वेषां समयाचाराः साधारणविधानतः ।
केचिच्च तान्त्रिकैर्मन्त्रैः केचिद्वैदिकतान्त्रिकैः ॥ ३८ ॥

वैदिकैरेव केचिच्च पूजयन्ति सदाहरिम् ।
प्रायशो दीक्षितानां तु तान्त्रिकं बलवत्तरम् ॥ ३९ ॥

तस्मात् सर्वप्रयत्नेन तान्त्रिकं न तु वर्जयेत् ।
[1]स्त्रीशूद्रौ दीक्षयेन्नित्यं वायव्ये चैव मण्डले ॥ ४० ॥

आग्नेये तु तथा वैश्यं माहेन्द्रे क्षत्रियं तथा ।
वारुणे ब्राह्मणं चापि विधिना दीक्षयेन्नरः ॥ ४१ ॥

वायव्य एव [2]शूद्रश्च स्त्री चापि प्रविशेत् क्रमात् ।
वायव्ये चापि चाग्नेये वैश्यो दीक्षामवाप्नुयात् ॥ ४२ ॥

तयोस्तु चापि माहेन्द्रे क्षत्रियः प्रविशेत् ततः ।
एतेष्वपि च सर्वेषु वारुणे चापि नित्यशः ॥ ४३ ॥

ब्राह्मणः प्रविशेद्दीक्षां फलानन्त्यं समश्नुते ।
उक्तः खलु विशेषस्तु ब्रह्मरात्रे पुरा किल ॥ ४४ ॥

[1] स्त्रीशूद्रान् E F

[2] शूद्रस्य B

नारायणाभिधाने तु मण्डले चान्यथा क्रमः ।
तत्र द्विजातयो योग्या दीक्षाकर्मणि सर्वदा ।
न शूद्रास्तत्र सर्वे च मण्डलेष्वधिकारिणः[1] ॥ ४५ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे पुष्पयागाध्यायः पञ्चमः

[1] अधिकारतः E F

## ऋषिरात्रे षष्ठोऽध्यायः

सनत्कुमारः—

बलिदानक्रमं वक्ष्ये येन तुष्यन्ति देवताः ।
बलिपात्रं भवेन्मुख्यं तत्र तिष्ठन्ति देवताः ॥ १ ॥

सौवर्णं राजतं वापि तथा ताम्रमयं तु वा ।
पात्रमेवात्र संप्रोक्तं यथावित्तानुसारतः ॥ २ ॥

वृत्तं वा चतुरश्रं वा बलिपात्रं तु कारयेत् ।
पद्मपत्रं लिखेत् सम्यक् कर्णिकाकेसरान्वितम् ॥ ३ ॥

तद् द्वादशदलं वृत्ते चतुरश्रेऽष्टपत्रकम् ।
यद् द्वादशदलं तत्र दले द्वादश देवताः ॥ ४ ॥

मासाश्च द्वादश प्रोक्ता विष्ण्वाद्याः क्रमयोगतः ।
रुद्रादित्यास्तु वसवश्चाश्विनौ मरुतस्तथा ॥ ५ ॥

नागाश्चाप्सरसश्चैव गन्धर्वाः किंनरा अपि ।
माहेन्द्रसंहितायां तु द्रष्टव्यास्ते यथादिशम् ॥ ६ ॥

अत्र वै कर्णिकायां तु मध्ये नारायणः स्थितः ।
स्थाने तिष्ठन्ति सर्वत्र सर्वेऽथ बलिपात्रगाः ॥ ७ ॥

[1]अन्ये तु पात्रपर्यन्ते विष्णुपारिषदाः स्मृताः ।
वासुदेवः स्थितो देवः कर्णिकायां सुरेश्वरः ॥ ८ ॥

1 इुनेतु G

अष्टपत्रे ततः पद्मे स्थिता देवाः समूर्तयः ।
वासुदेवस्तथाग्नेये नैर्ऋते कर्षणस्तथा ॥ ९ ॥

प्रद्युम्नश्चापि वायव्ये अनिरुद्धस्तथोत्तरे ।
शान्तिरैन्द्रे स्थिता देवी श्रीः स्थिता[1] दक्षिणे दले ॥ १० ॥

सरस्वती पश्चिमे तु रतिश्चाप्युत्तरे स्थिता ।
ततो दलावसाने तु अष्टौ विद्येश्वरास्तथा[2] ॥ ११ ॥

प्राच्यामादिवराहस्तु नारसिंहस्तु दक्षिणे ।
पश्चिमे श्रीधरश्चैव उत्तरे हयशीर्षकः ॥ १२ ॥

आग्नेये भार्गवो रामो नैर्ऋते राम एव च ।
वायव्ये वामनश्चैव वासुदेवस्तथैश्वरे[3] ॥ १३ ॥

ततः पारिषदाः सर्वे पर्यन्ते तु व्यवस्थिताः ।
बलिपात्रविधिश्चोक्तो बलिद्रव्यं वदामि वः ॥ १४ ॥

व्रीहयश्च यवा मुद्गाः प्रियङ्गुतिलवेणुकाः ।
श्यामाकाश्चापि नीवाराः प्रशस्ता बलिकर्मणि ॥ १५ ॥

फलं दशगुणं प्रोक्तमेतेषामुत्तरोत्तरम् ।
एतानि चैव संगृह्य समर्थी भूतले शुचौ ॥ १६ ॥

आलिप्ते चैव मृद्दीयात् गोचर्मणि शुभेऽपि वा ।
पादेन मर्दयेन्नापि [4]न स्पृशेन्नाप्यदीक्षितैः ॥ १७ ॥

1 संस्थिता B
2 स्थिताः E F G
3 तथोत्तरे B
4 स्पर्शने चापि F; स्पर्शयेन्नापि B

भूतले मण्डलं कृत्वा पिष्टचूर्णैरलंकृते ।
विकिरेदातपे पत्रे प्रणम्याञ्जलिमुद्रया ॥ १८ ॥

शुष्केषु चैव धान्येषु प्रक्षाल्योलूखलं शुभम् ।
प्रक्षाल्य मुसलं चापि क्रमेणाचम्य दीक्षितः ॥ १९ ॥

अञ्जल्या प्रक्षिपेद्व्रीहीन् स्मृत्वा विष्णुमुलूखले ।
भूमावुलूखलं न्यस्य लिप्तायां गोमयेन तु ॥ २० ॥

पिष्टचूर्णविचित्रायां प्राङ्मुखो वाप्युदङ्मुखः ।
मूलमन्त्रेण मुसलं तनो मुसलमुद्रया ॥ २१ ॥

गृहीत्वा प्रक्षिपेत् तत्र [1]त्रिकृत्वो मूलविद्यया ।
रक्षामुद्रां ततः कृत्वा वैष्णवीभिस्तु कुट्टयेत् ॥ २२ ॥

शूर्पेण तन्नियुक्तेन त्वपनीय तुषादिकम् ।
उलूखले ततः कृत्वा त्वचामप्यपनुत्तये ॥ २३ ॥

शूर्पेण धुनुयादत्र कणादीनपनीय तु ।
बलिकर्मणि गृह्णीयात् तदलाभे वदाम्यतः ॥ २४ ॥

दीक्षितानां गृहे वापि वैष्णवानां गृहेऽपि वा ।
[2]व्रीहीनदुष्टानानीय गन्धवार्याद्यदूषितान् ॥ २५ ॥

अतोयनिम्नानक्लिन्नान् प्रीतिदत्तान् प्रगृह्य वै ।
पूर्वोक्तेन विधानेन शोधयित्वा महीतले ॥ २६ ॥

[1] त्रिष्कृत्वः B E G

[2] धान्यान् B

तथैव पूर्ववत् कृत्वा बलिकर्मणि योजयेत् ।
तदलाभे विधिं पश्चात् प्रवक्ष्याम्यनुपूर्वशः ॥ २७ ॥

वैष्णवानां गृहे रम्ये दीक्षितानां विशेषतः ।
तण्डुलान् वै प्रगृह्णीयाद्विष्णुना चापि साधकः ॥ २८ ॥

अकणानतुषानेव क्रिमिकीटविवर्जितान् ।
केशपाषाणहीनांश्च नखाङ्गारादिवर्जितान् ॥ २९ ॥

अक्लिन्नानप्यनिम्नांश्च अभग्नानलवूनपि ।
गृह्णीयान्मूलमन्त्रेण स्पृष्ट्वा प्रसृतिमुद्रया ॥ ३० ॥

कणैस्तु भवति व्याधिस्तुषैर्दारिद्र्यसंभवः ।
क्रिमिभिः पुत्रनाशः स्यात् कीटैर्बन्धुक्षयो भवेत् ॥ ३१ ॥

केशैस्तु दारनाशः स्यात् पाषाणैरशनेर्वधः ।
नखेन चापमृत्युश्चाप्यङ्गारैरग्निनाशनम् ॥ ३२ ॥

क्लिन्नैः प्राप्नोति चोद्बन्धं निम्नैस्तोयभयं[1] भवेत् ।
भग्नैस्तु देहभङ्गः स्याल्लवुभिश्चावसादनम् ॥ ३३ ॥

पापस्पृष्टैरनारोग्यं विधिहीनैर्विधिक्षयः ।
कर्तुः कारयितुर्वापि भवत्येव न संशयः ॥ ३४ ॥

तण्डुलैस्तु बलिः प्रातर्मध्याह्ने चरुणैव तु ।
पुष्पैरेव बलिः सायं सर्वदाप्येभिरेव वा ॥ ३५ ॥

1 स्तेयभयं A

प्रा . . . . पुष्पैः . . . . . . . . ।
प्रातर्वै ब्रह्ममुद्रां तु दर्शयित्वा विचक्षणः ॥ ३६ ॥

तण्डुलान् क्षालयेत् तोयैर्ब्रह्मबीजेन साधकः ।
पात्रे तु प्रक्षिपेत् पश्चान्मूलमन्त्रेण मन्त्रवित् ॥ ३७ ॥

चुल्ल्यामारोपयेत् पश्चाद्बीजेन परमेष्ठिना ।
[1]अर्चयेच्च सुपुष्पैस्तु तन्मन्त्रेण ततः क्रमात् ॥ ३८ ॥

अत्र पुष्पद्वयं वर्ज्यं रक्तं कृष्णं तथाशुभम् ।
अर्चयित्वा यथायोगं ततस्तु पुरुषात्मना ॥ ३९ ॥

वैष्णवैस्तु ततः कुर्यात् क्रमेण स्वस्तिवाचनम् ।
स्वस्तयेऽस्तु सदा विष्णुः स्वस्तयेऽस्तु चतुर्मुखः ॥ ४० ॥

स्वस्तयेऽस्तु सदा वह्निः स्वस्तयेऽस्तु यमः सदा ।
स्वस्तयेऽस्तु निर्ऋत्याख्यः स्वस्तये वरुणोऽस्तु नः ॥ ४१ ॥

स्वस्तयेऽस्तु सदा वायुः स्वस्तयेऽस्तु धनेश्वरः ।
स्वस्तयेऽस्तु सदेशानः स्वस्तयेऽस्तु मरुद्गणः ॥ ४२ ॥

स्वस्तये सन्तु वसवो रुद्राश्च स्वस्तये तथा ।
आदित्याः स्वस्तये सन्तु मुनयः स्वस्तये तथा ॥ ४३ ॥

गन्धर्वाः स्वस्तये सन्तु स्वस्तये सन्तु किंनराः ।
स्वस्तये सन्तु नागाश्च स्वस्तये सन्तु पन्नगाः ॥ ४४ ॥

[1] अर्चयेद्वा B

स्वस्तये सन्तु विश्वेशाः स्वस्तयेऽप्सरसः सदा ।
स्वस्तये सन्तु नद्यश्च स्वस्तये सन्तु सागराः ॥ ४५ ॥

स्वस्तये सन्तु शैलाश्च वेदाश्च स्वस्तये तथा ।
स्वस्तये मातरः सन्तु पितरः स्वस्तये तथा ॥ ४६ ॥

देवपारिषदाः सर्वे स्वस्तये सन्तु नः सदा ।
स्वस्ति भागवतानां तु स्वस्ति चाप्यग्रजन्मनाम् ॥ ४७ ॥

स्वस्ति वै वैष्णवानां तु स्वस्ति चैव गवामपि ।
स्वस्ति वै स्थावराणां तु जङ्गमानां तथैव च ॥ ४८ ॥

स्वस्ति चैवाथ मन्त्राणां स्वस्ति वै कर्मणामपि ।
बलिं नयामि देवस्य विष्णोस्तस्मै नमो नमः ॥ ४९ ॥

इति स्वस्त्ययनं चोक्त्वा बलिमुत्थापयेत् ततः ।
दर्शयेत् प्रतिमामुद्रां विश्वबीजेन साधकः ॥ ५० ॥

ततो निवृत्तिबीजेन शिरसि स्थापयेद्बलिम् ।
ततः सर्वात्मबीजेन मङ्गलानि समुद्धरेत् ॥ ५१ ॥

ततः शङ्खं च चक्रं च स्वस्तिकं कलशं तथा ।
श्रीवृक्षं चामरं चापि सिंहं गरुडमेव च ॥ ५२ ॥

एतैस्तु मङ्गलैः सार्धं धूपं दीपं ध्वजं तथा ।
भद्रं चैव वितानं च गृहीत्वा तु परिभ्रमेत् ॥ ५३ ॥

आचार्यस्त्वग्रतो भूत्वा पुष्पतोयसमन्वितम् ।
दिक्ष्वष्टासु क्षिपेत् पूर्वं ततः पुष्पबलिं क्रमात् ॥ ५४ ॥

दीपं धूपं पुरस्ताच्च मङ्गलान्यभितः क्रमात् ।
पुरस्तात् केतनं चापि पार्श्वे चामरमेव च ॥ ५५ ॥

भद्रं पश्चात् ततः सर्वे पश्चाद्याति यथाक्रमम् ।
प्रथमं गरुडस्थाने गायन् गीतमिदं पुनः ॥ ५६ ॥

वाहनाय महाविष्णोस्ताक्ष्यायामिततेजसे ।
गरुडाय नमस्तेऽस्तु सर्वसर्पेन्द्रमृत्यवे ॥ ५७ ॥

शक्रस्थाने ततो गायेत् स्थित्वा गीतमिदं पुनः ।
दैत्यदर्पविनाशाय सहस्राक्षाय धीमते ॥ ५८ ॥

कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो ।
वह्निस्थाने ततः स्थित्वा वह्निमन्त्रमिमं जपेत् ॥ ५९ ॥

मुखं यः सर्वदेवानां येन हव्यं तु नीयते ।
येन प्रवर्तते सर्वं नमस्तेऽस्तु हविर्भुजे ॥ ६० ॥

दक्षिणां दिशमासाद्य यममन्त्रमिमं पठेत् ।
येन संह्रियते सर्वं येन धर्मश्च रक्ष्यते ॥ ६१ ॥

यस्माद्बिभेति लोकोऽयं प्रेतनाथ नमोऽस्तु ते ।
निर्ऋतिस्थानमासाद्य ततो मन्त्रमिमं पुनः ॥ ६२ ॥

राक्षसा यातुधानाश्च पिशाचाश्च श्रयन्ति यम् ।
तस्मै निर्ऋतिरुद्राय रक्षसां पतये नमः ॥ ६३ ॥

वरुणस्थानमासाद्य ततो मन्त्रमिमं पठेत् ।
येन संरक्ष्यते सर्वं यस्मिन् सर्वं प्रलीयते ॥ ६४ ॥

अमोघपाशहस्ताय तदपांपतये नमः ।
वायुस्थानं समासाद्य वायुमन्त्रमिमं पठेत् ॥ ६५ ॥

ध्रियन्ते च ह्रियन्ते च येन प्राणादयः क्रमात् ।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते ॥ ६६ ॥

धनदस्थानमासाद्य ततो मन्त्रमुदाहरेत् ।
यत्प्रसादाज्जगत् सर्वं धनेन परिपूर्यते ॥ ६७ ॥

यक्षगुह्यकनाथाय धननाथ नमोऽस्तु ते ।
ईशानस्थानमासाद्य मन्त्रमेतमुदाहरेत् ॥ ६८ ॥

येन कालाग्निना लोको युगान्तेषु प्रदह्यते ।
तस्मै ते ब्रह्मणः पुत्र विरूपाक्ष नमोऽस्तु ते ॥ ६९ ॥

एक एवं परिक्रम्य प्रथमावरणे क्रमात् ।
. . . . सोम आत्मनः ॥ ७० ॥

पितृदेवा मनोजाताः क्रियायै ते नमो नमः ।
प्रद्युम्नस्य मुखाज्जाता या यस्याश्च यमः सुनः ॥ ७१ ॥

पितृदेवा मनोजाताः कान्त्यै तुभ्यं नमो नमः ।
अनिरुद्धमुखाज्जाता तस्यै सृष्ट्यै नमो नमः ॥ ७२ ॥

नरप . . . जातास्तु लक्ष्म्यै तस्यै नमो नमः ।
जाता चतुर्मुखाद्यस्या अग्निष्वात्ताः सुताः पुनः ॥ ७३ ॥

मानसा देवपितरस्तस्यै तुष्ट्यै[1] नमो नमः ।
नरसिंहमुखाज्जाता या यस्याः सोमपाः सुताः ॥ ७४ ॥

[1] सृष्ट्यै B

मानसा देवपितरो विद्यायै ते नमो नमः ।
जाता या हि वराहात्तु यस्या ब्रह्मर्षयः सुताः ॥ ७५ ॥

मानसा देवपितरः [1]शान्त्यै तुभ्यं नमो नमः ।
यस्मिन् वसति देवे श्रीः सा सदा पद्मधारिणी ॥ ७६ ॥

लोकपालाधिनाथाय श्रीधराय नमोऽस्तु ते ।
यस्मादध्यैष्ट वेदांस्तु ब्रह्मा पूर्वं चतुर्मुखः ॥ ७७ ॥

देवानां पतये तुभ्यं हयवक्त्र नमोऽस्तु ते ।
इति प्रदक्षिणीकृत्य द्वितीयावरणे ततः ॥ ७८ ॥

प्रदक्षिणं ततः कुर्यात् तृतीयावरणे क्रमात् ।
चक्रस्थानं समासाद्य इमं मन्त्रमुदीरयेत् ॥ ७९ ॥

सहस्रारं हरेश्चक्रं दर्शनेन सुदर्शनम् ।
दैत्यशोणितदिग्धाङ्गं तं नमामि सुदर्शनम् ॥ ८० ॥

बलिपीठं ततः प्राप्य इमं मन्त्रमुदीरयेत् ।
ये समस्तं जगद्व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः ॥ ८१ ॥

विष्णुपारिषदास्त्वस्मिन् गृह्णन्तु बलिमुत्तमम् ।
इत्युक्त्वा बलिमन्त्रेण बलिं तत्र तु निक्षिपेत् ॥ ८२ ॥

पश्चादथात्मरक्षार्थं मन्त्रमेतमुदाहरेत् ।
दानवोरःस्थलोदीर्णशोणितारुणपाणये ॥ ८३ ॥

वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ।
इत्युक्त्वा दर्शयित्वा तु सिंहमुद्रां विचक्षणः ॥ ८४ ॥

[1] कान्त्यै B

प्रवेश्य मङ्गलादीनि पश्चात् कर्मकरो भवेत् ।
ततो मध्याह्नकाले तु शुचिः स्नात्वा कृताञ्जलिः ॥ ८५ ॥

तण्डुलांश्च समानीय विष्णुमुद्रां प्रदर्शयेत् ।
स्थाल्यां द्वादश मुष्टींस्तु क्षिपेद् द्वादशनामभिः ॥ ८६ ॥

शेषाणि मूलमन्त्रेण तस्यां स्थाल्यां तु निक्षिपेत् ।
चरुपात्रं भवेत् ताम्रं तदलाभे तु मृन्मयम् ॥ ८७ ॥

तण्डुलान् क्षालयेत् पश्चाद्बीजेन परमेष्ठिना ।
वह्निं समेनयेत् पश्चाद्बीजेन पुरुषात्मना ॥ ८८ ॥

वह्निमारोपयेत् पश्चाद्विश्वबीजेन साधकः ।
ततो निवृत्तिबीजेन [1]निधानादवतारयेत् ॥ ८९ ॥

ततः सर्वात्मबीजेन बलिपात्रे च निक्षिपेत् ।
सर्पिर्दधिपयोयुक्तां कुर्यात् प्रतिकृतिं ततः ॥ ९० ॥

चतुरश्रं त्रिकोणं वा [2]तथा वृत्तमथापि वा ।
चतुरश्रे कृते सम्यक् स्वर्गवृद्धिर्भविष्यति ॥ ९१ ॥

अन्तरिक्षचराणां तु त्रिकोणे वृद्धिरुच्यते ।
भूमिगानां भवेद्वृद्धिर्वृत्ते नैवात्र संशयः ॥ ९२ ॥

वृत्तं चतुर्विधं चात्र साधकाः परिचक्षते ।
धारालिङ्गं तु यत् प्रोक्तं [3]तच्च दैवं प्रचक्षते ॥ ९३ ॥

1 निधार्यात् B 2 वासं A B 3 तत्र B

द्वादशाङ्गुलमुत्सेधं विस्तारे षोडशाङ्गुलम् ।
अतिरिक्तमथोत्सेधे पैशाचं तत् प्रचक्षते ॥ ९४ ॥

उत्सेधं च तथा न्यूनमधस्तात् परिचक्षते ।
[1]ततोऽतिरिक्तं भूतानां [2]ततो न्यूनं तु राक्षसम् ॥ ९५ ॥

वृत्त तत्तद्भवेत् कुर्यात् परावृत्तं तथासुरम् ।
अत्युष्णं राजसं ज्ञेयमतिशीतं तु तामसम् ॥ ९६ ॥

पैशाचे [3]बलिदाने तु पिशाचबलिरुच्यते ।
पिशाचबलिदानेन[4] निष्फलं तत् कृतं भवेत् ॥ ९७ ॥

तामसे [3]बलिदाने तु [5]भवन्त्यल्पायुषो नराः ।
भूतालये [3]बलिदाने तु ग्रहा गृह्णन्ति देहिनः ॥ ९८ ॥

राक्षसे [3]बलिदाने तु राष्ट्रनाशो भविष्यति ।
पैशाचे [3]बलिदाने तु भवेद्धर्मक्षयः सदा ॥ ९९ ॥

आसुरे [3]बलिदाने तु देवाः कुप्यन्ति सर्वदा ।
देवकोपेन सर्वेषां भवेयुर्व्याधिमृत्यवः ॥ १०० ॥

राजसे [3]बलिदाने तु जायन्ते रोगिणो नराः ।
तामसे [3]बलिदाने तु पापवृद्धिर्भविष्यति ॥ १०१ ॥

तस्मात् सर्वप्रयत्नेन सर्वाण्येतानि वर्जयेत् ।
कृत्वा प्रतिकृतिं चैव लिङ्गमुद्रां तु दर्शयेत् ॥ १०२ ॥

1 तेभ्यो A
2 नाभेः B
3 बलियाने तु B
4 यानेन B
5 भविष्यन्त्यायुषो नरः B

[1]अर्चयेच्च यथापूर्वं गन्धपुष्पादिभिः क्रमात् ।
दर्शयेत् तच्च देवाय मन्त्रेणानेन साधकः ॥ १०३ ॥

बलिं वहामि देवेश सदाविष्णो भवत्प्रियम् ।
तवैवानुज्ञया देव तस्मादनुगृहाण माम् ॥ १०४ ॥

क्रमेण दर्शयित्वैवं कृत्वा च स्वस्तिवाचनम् ।
[2]समभ्यर्च्य च देवेशं मूलमन्त्रेण साधकः ॥ १०५ ॥

पूर्ववन्मङ्गलैः सार्धं निर्गम्याथ कृताञ्जलिः ।
पूर्ववद्गरुडस्थाने पठेद्द्वै मन्त्रमुत्तमम् ॥ १०६ ॥

[2]त्वया समुद्धृता देव धरणी सधराधरा ।
तस्मा आदिवराहाय [2]देवानां पतये नमः ॥ १०७ ॥

देवानां च तथा स्थाने राममन्त्रमुदीरयेत् ।
[2]दैत्याः शरापदेशेन दग्धा यत्कोपवह्निना ॥ १०८ ॥

सौम्याग्नेयगुणायाथ तस्मै रामाय ते नमः ।
दक्षिणां दिशमासाद्य मन्त्रमेनमुदाहरेत् ॥ १०९ ॥

प्रदीप्ताङ्गारनेत्राय प्रस्फुरत्सटशालिने ।
दानवान्तकर श्रीमन् नरसिंह नमोऽस्तु ते ॥ ११० ॥

रामस्थानं समासाद्य जपन्मन्त्रमुदीरयेत् ।
सुखेन स्थापिता येन रावणस्य विनिग्रहात् ॥ १११ ॥

[1] Gap from here up to the end of verse 110 in G
[2] B omits this *pāda*.

[1]शक्रादयः सुराः सर्वे तस्मै रामाय ते नमः ।
श्रीधरस्थानमासाद्य मन्त्रमेतमुदाहरेत् ॥ ११२ ॥

यत्प्रसादाश्रया बुद्धिः सर्वेषां मन्त्रवादिनाम् ।
तस्मै सर्वाधिनाथाय श्रीधराय नमो नमः ॥ ११३ ॥

वामनस्थानमासाद्य मन्त्रमेतमुदाहरेत् ।
बलिर्नियमितो येन विक्रमाणां त्रयेण वै ॥ ११४ ॥

भूत्वोग्रवपुषा तस्मै वामनाय नमो नमः ।
लोकस्थितिविधानाय स्थितो यश्चोत्तरार्णवे ॥ ११५ ॥

वेदानां पतये तस्मै हयवक्त्र नमोऽस्तु ते ।
क्षत्रियव्यपदेशेन दानवा येन पातिताः ॥ ११६ ॥

धर्मवृद्धिर्यमाश्रित्य तस्मै शार्ङ्गभृते नमः ।
एवमेतत् परिक्रम्य प्रथमावरणं ततः ॥ ११७ ॥

द्वितीयावरणं चापि मातृस्थानमुपेत्य च ।
पठित्वा पूर्ववन्मन्त्रान् यथावत् क्रमयोगतः ॥ ११८ ॥

तृतीयावरणे पश्चात् क्रमेणैव परिभ्रमेत् ।
पीठस्थानं समासाद्य इमं मन्त्रमुदीरयेत् ॥ ११९ ॥

मुख्यानां विष्णुलोकानां ये च दौवारिकाः स्मृताः ।
सर्वेषां पार्षदाश्चापि नमस्तेभ्यः पुनः पुनः ॥ १२० ॥

[1] G omits from here up to the end of verse 115.

इत्युक्त्वा बलिपीठे तु बलिलिङ्गं तु विन्यसेत् ।
दर्शयेद् बलिमुद्रां च क्रमात् प्रत्यङ्मुखः स्थितः ॥ १२१ ॥

व्योममुद्रामथाकाशे दर्शयेत्तु विचक्षणः ।
विलोक्याथ दिशः सर्वाः परिभ्रम्य प्रदक्षिणम् ॥ १२२ ॥

ध्यात्वा पारिषदान् सर्वानिमं मन्त्रमुदीरयेत ।
सर्वेऽपि चात्र रूपेण बलिनो बलिकाङ्क्षिणः ॥ १२३ ॥

अनुपारिषदाश्चापि बलिं गृह्णन्तु सर्वशः ।
इत्युक्त्वा तोयमुत्क्षिप्य रक्षामुद्रां तु पूर्ववत् ॥ १२४ ॥

जप्त्वावलोकयेद्देवं मूलमन्त्रेण मन्त्रवित् ।
मङ्गलानि प्रवेश्याथ कर्मशेषं समापयेत् ॥ १२५ ॥

ततः सायंतने प्राप्ते स्नात्वाचम्य कृताञ्जलिः ।
स्रजं वा स्तबकं वापि केवलं पद्ममेव वा ॥ १२६ ॥

आदाय पात्रे विन्यस्य तत्त्वमुद्रां तु दर्शयेत् ।
मालां तु मूलमन्त्रेण विन्यसेत्तु विचक्षणः ॥ १२७ ॥

स्तबकं विष्णुगायत्र्या पद्मं तु परमेष्ठिना ।
पुष्पमुद्रां ततः पश्चाद् दर्शयेत्तु विचक्षणः ॥ १२८ ॥

अर्चयित्वा यथापूर्वं कृत्वा च स्वस्तिवाचनम् ।
षडक्षरेण मन्त्रेण बलिमुद्वासयेत् ततः ॥ १२९ ॥

उन्नम्य विष्णुगायत्र्या शिरसि स्थापयेत् ततः ।
दर्शयेत् तत्त्वमुद्रां तु ध्यायन् विष्णुमवस्थितः १३० ॥

यथापूर्वं तु निष्क्रम्य मङ्गलैः सह मन्त्रवित् ।
स्थित्वा तु गरुडस्थाने पठेन्मन्त्रं च पूर्ववत् ॥ १३१ ॥

ततः प्राचीं दिशं प्राप्य मन्त्रमेतमुदाहरेत् ।
जगन्निर्माणसंहारस्थित्यनुग्रहकारिणे ॥ १३२ ॥

देवानां पतये तस्मै पुरुषाय नमो नमः ।
आग्नेयीं दिशमासाद्य मन्त्रमेतमुदाहरेत् ॥ १३३ ॥

येन तप्तं तपश्चोग्रं येन नम्रीकृतो हरिः ।
धर्मप्रभव देवेश नमस्तस्मै नमो नमः[1] ॥ १३४ ॥

दक्षिणां दिशमासाद्य मन्त्रमेतमुदाहरेत् ।
ब्रह्मा यस्य प्रसादेन [2]सृष्टिं वहति शाश्वतीम् ॥ १३५ ॥

मुक्तिकामो नमस्तेऽस्तु सत्यायामिततेजसे ।
नैर्ऋतीं दिशमासाद्य मन्त्रमेतमुदाहरेत् ॥ १३६ ॥

येन तप्तं तपो घोरं चिरं बदरिकाश्रमे ।
यद्ध्यानं जगत् तस्मै नमो नारायणाय ते ॥ १३७ ॥

वारुणीं दिशमासाद्य मन्त्रमेतमुदाहरेत् ।
येन बिम्बमिदं प्राप्तं यस्मिन् विश्वमिदं व्रजेत् ॥ १३८ ॥

तस्मै न्यस्तसमस्ताय अच्युताय नमो नमः ।
वायवीं दिशमासाद्य मन्त्रमेतमुदाहरेत् ॥ १३९ ॥

[1] नमोऽस्तु ते B E

[2] तृप्तिं G

कृता धैर्यस्थितिर्येन दैत्यविप्रकृताय वै ।
पुरा पद्मोद्भवायाथ तस्मै ते हरये नमः ॥ १४० ॥

उदीचीं दिशमासाद्य मन्त्रमेतमुदाहरेत् ।
आनन्दं परमं योगी पौरुषं येन नीयते ॥ १४१ ॥

बीजभूताय जगतामनिरुद्ध नमोऽस्तु ते ।
ऐशानीं दिशमासाद्य मन्त्रं चैतमुदाहरेत् ॥ १४२ ॥

यत्प्रसादाज्जगत् सर्वं सदा च परिवर्धितम् ।
[1]धर्मस्थितिः कृता येन तस्मै कृष्णाय ते नमः ॥ १४३ ॥

प्रथमावरणं त्वेवं परिभ्रम्य क्रमेण वै ।
द्वितीयावरणात् पश्चात् पूर्ववत् संपरिभ्रमेत् ॥ १४४ ॥

तृतीयावरणे चापि परिभ्रम्य क्रमेण वै ।
विष्वक्सेनपदं प्राप्य बलिवाचनमारभेत् ॥ १४५ ॥

मङ्गलान्ते द्विजास्तत्र वदेयुर्वै तथास्त्विति ।
जगन्निर्माणसंहारस्थित्यनुग्रहकारिणः[2] ॥ १४६ ॥

देवानामीश्वरा देवा मङ्गलं प्रदिशन्तु नः ।
विष्णुर्ब्रह्मा च रुद्रश्च प्रचण्डश्चण्ड एव च ॥ १४७ ॥

गरुत्मान् विनतापुत्रो मङ्गलं प्रदिशन्तु नः ।
इन्द्रश्चाग्निर्यमश्चैव निर्ऋतिर्वरुणस्तथा ॥ १४८ ॥

[1] ब्रह्म A B G [2] कारिणी B

वायुर्वैश्रवणेशानौ मङ्गलं प्रदिशन्तु नः ।
वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च ॥ १४९ ॥

विद्या कान्तिश्च सर्वास्ता मङ्गलं प्रदिशन्तु नः ।
शङ्खश्चक्रं गदा पद्मं मुसलं खड्ग एव च ॥ १५० ॥

धनुश्च वनमाला च मङ्गलं प्रदिशन्तु नः ।
शान्तिश्चापि तथा श्रीश्च तथा चैव सरस्वती ॥ १५१ ॥

रतिश्चापि तथा देव्यो मङ्गलं प्रदिशन्तु नः ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ १५२ ॥

शङ्कुकर्णः सर्पनेत्रः सुमुखः सुप्रतिष्ठितः ।
विष्णुदौवारिकाश्चैते[1] मङ्गलं प्रदिशन्तु नः ॥ १५३ ॥

अष्टोत्तरसहस्रं तु विष्णुपारिषदेश्वराः ।
अनुपारिषदाश्चापि मङ्गलं प्रदिशन्तु नः ॥ १५४ ॥

भूलोकाद्याश्च ये लोकाः सप्त संपरिकीर्तिताः ।
सागराश्च तथा सप्त मङ्गलं प्रदिशन्तु नः ॥ १५५ ॥

ये वै वराहलोकाद्या विष्णुलोकाः प्रकीर्तिताः ।
दिक्षु सर्वासु तिष्ठन्तो मङ्गलं प्रदिशन्तु नः ॥ १५६ ॥

वेदाश्चाप्युपवेदाश्च सेतिहासाः कथा अपि ।
षडङ्गानि च शास्त्राणि मङ्गलं प्रदिशन्तु नः ॥ १५७ ॥

[1] दौवारिकाश्चैव B

गङ्गा च यमुना चैव [1]तथा गोदा सरस्वती ।
नर्मदा चैव[2] कावेरी [3]मङ्गलं प्रदिशन्तु नः ॥ १५८ ॥

[4]शङ्खः पद्मो महापद्मः कार्कोटगुलिकादयः ।
वासुकिस्तक्षकश्चापि मङ्गलं प्रदिशन्तु नः ॥ १५९ ॥

यक्षरक्षोग्रहा नागा गन्धर्वाप्सरसां गणाः ।
ग्रहा विद्याधराश्चापि ये दिव्या ये च मानुषाः ॥ १६० ॥

दिव्यन्तरिक्षभूताश्च मङ्गलं प्रदिशन्तु नः ।
धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः ॥ १६१ ॥

प्रत्यूषश्च प्रभातश्च मङ्गलं प्रदिशन्तु नः ।
यज्ञाश्च पञ्च यज्ञाश्च पाकयज्ञास्तथैव च ॥ १६२ ॥

सर्वे एते महायज्ञा मङ्गलं प्रदिशन्तु नः ।
कुमारी च [5]कुमारश्च गणेशश्च विनायकः ॥ १६३ ॥

सिद्धाश्च किंनराश्चापि मङ्गलं प्रदिशन्तु नः ।
मृगव्याधश्च शर्वश्च निर्ऋतिश्चाज एकपात् ॥ १६४ ॥

अहिर्बुध्न्यः पिनाकी च वह्निनाथेश्वरस्तथा ।
स्थाणुर्भवश्च कापाली मङ्गलं प्रदिशन्तु नः ॥ १६५ ॥

[1] गोदावरि B [2] सिन्धु B [3] तुङ्गभद्रा तथैव च B

[4] B adds the following half verse bef[ore] this line:
काश्यादिसर्वक्षेत्राणि मणिकर्णादिपुष्कराः

[5] कुमारीश्च A B G

धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यत्वष्टृविष्णवः ॥ १६६ ॥

एते तु द्वादशादित्या मङ्गलं प्रदिशन्तु नः ।
[1]यवक्रीतश्च रेभश्च[2] अर्वाग्वसुपराग्वसू ॥ १६७ ॥

कक्षीवान् नारदः [3]कण्वो मङ्गलं प्रदिशन्तु नः ।
. . . . . उन्मुग्धः प्रजयोऽगस्त्य एव च ॥ १६८ ॥

दृढायुश्चोर्ध्वबाहुश्च तृणसोमोऽग्निरेव च ।
सप्तैते धर्ममुनयो मङ्गलं प्रदिशन्तु नः ॥ १६९ ॥

[4]ऋषिद्रुश्च महद्रुश्च परित्राजस्तथैव च ।
सारस्वतश्चैकतश्च पीतश्च क्रीत एव च ॥ १७० ॥

मुनयो [5]वरुणश्चैते मङ्गलं प्रदिशन्तु नः ।
काश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽङ्गिरास्तथा ॥ १७१ ॥

कौशिको भार्गवश्चैव मङ्गलं प्रदिशन्तु नः ।
आवहो विवहश्चैव उद्वहः संवहस्तथा[6] ॥ १७२ ॥

[7]प्रवहः परिवाहश्च तथैव च परावहः ।
सप्तैते मरुतः सर्वे मङ्गलं प्रदिशन्तु नः ॥ १७३ ॥

धरा पद्मा महापद्मा वसुर्वसुमती तथा ।
सरसा सुरसा चैव मङ्गलं प्रदिशन्तु नः ॥ १७४ ॥

1 भवक्रीतश्च B G 2 रेफाश्च B 3 कण्डुः A
4 ऋष्यद्रुश्च B; ऋषिर्भृगुः G 5 वरुणरयेते B
6 सुवहस्तथा B 7 विवाहः B

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।
[1]विन्ध्यश्च पारियात्रश्च मङ्गलं प्रदिशन्तु नः ॥ १७५ ॥

श्वेतकेतुश्च व्यासश्च वाल्मीकिः सुयशास्तथा ।
और्वशेयश्च शक्तिश्च तथा चैव पराशरः ॥ १७६ ॥

सप्तैते दिव्यमुनयो मङ्गलं प्रदिशन्तु नः ।
अनेन बलिदानेन प्रीताः सर्वे इमे चिरम् ॥ १७७ ॥

बलियज्ञे यथा दृष्टास्तुष्टास्तुष्टिं दिशन्तु नः ।
विष्वक्सेनाधिनाथाय विश्वकर्मविधायिने ॥ १७८ ॥

विश्वपारिषदेशाय विष्वक्सेनाय ते नमः ।
इत्युक्त्वा मूलमन्त्रेण बलिं तमवतारयेत् ॥ १७९ ॥

पुष्पं तु वा क्षिपेत् पश्चाद् विष्वक्सेनस्य मूर्धनि ।
ततो निर्माल्यमुद्रां च मन्त्रेणानेन कारयेत् ॥ १८० ॥

नमो विश्वसृजे तुभ्यं विष्वक्सेनाय शार्ङ्गिणे ।
अनया मुद्रया देव प्रीतस्त्वनुगृहाण माम् ।
इत्युक्त्वा [2]बलिदानज्ञो बलिकर्म समापयेत् ॥ १८१ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे बलिविधानं नाम षष्ठोऽध्यायः

[1] सिद्धश्च A B G

[2] बलिविधानज्ञः E

## ऋषिरात्रे सप्तमोऽध्यायः

ऋषिच्छन्दोविधिं वक्ष्ये मन्त्राणां दैवतं च यत् ।
येनोद्धृतस्तु यो मन्त्र ऋषिस्तस्य स एव च ॥ १ ॥

वासुदेव इति प्रोक्तो यो जातस्त्वात्मनात्मनि ।
मूर्तीनामादिभूतः स संकर्षणमजीजनत् ॥ २ ॥

[1]स एव ब्रह्मसंज्ञस्तु सर्वलोकहितंकरः ।
चकार प्रणवोद्धारमृषिस्तस्य स उच्यते ॥ ३ ॥

दैवतं चापि गायत्रं छन्दस्तस्य तु कथ्यते ।
भगवान् यः सदाविष्णुर्देवदेवः प्रकीर्तितः ॥ ४ ॥

तेनैव वासुदेवेन उद्धृतः सकलेष्टदः ।
अष्टाक्षरो महामन्त्रस्तस्मादेषोऽधिदैवतम् ॥ ५ ॥

कूटस्थो वासुदेवस्तु द्वादशाक्षरदैवतम् ।
यश्च नारायणाख्यः स कूटस्थोऽक्षरसंज्ञितः ॥ ६ ॥

अष्टाक्षरस्य मन्त्रस्य दैवतं परमं मतम् ।
अष्टाक्षरो ह्यनुष्टुप् स्याज्जगती द्वादशाक्षरी ॥ ७ ॥

[1] Verses 3-5, corrupt readings in A B

ब्रह्मा तु विष्णुगायत्र्या ऋषिः संपरिकीर्तितः ।
गायत्रं तु भवेच्छन्दो विष्णुर्देवः सनातनः ॥ ८ ॥

चतुर्णां चक्रमन्त्राणामृषिर्वै शिव उच्यते ।
छन्दश्चापि च गायत्रं कालचक्रं तु दैवतम् ॥ ९ ॥

षडक्षरस्य मन्त्रस्य ऋषिः संकर्षणः प्रभुः ।
छन्दश्चापि च गायत्रं दैवतं वै सुदर्शनम् ॥ १० ॥

आदित्य एव मन्त्राणां पञ्चोपनिषदामृषिः ।
छन्दश्चापि तु गायत्रं [1]पारमेष्ठ्ये प्रकीर्तितम् ॥ ११ ॥

दैवतं च सदाविष्णुः सर्वलोकनमस्कृतः ।
गायत्रमेव च्छन्दस्तु वासुदेवश्च दैवतम् ॥ १२ ॥

[2]पुरुषस्येति विज्ञेयं मन्त्रतत्त्वविचक्षणैः ।
उष्णिक् छन्दस्तु विश्वस्य देवः संकर्षणः स्मृतः ॥ १३ ॥

निवृत्तेश्चापि गायत्रं प्रद्युम्नश्चाधिदैवतम् ।
उष्णिक् छन्दस्तु सर्वस्य अनिरुद्धस्तु दैवतम् ॥ १४ ॥

पञ्चतन्मात्रमन्त्राणामृषिरादित्य उच्यते ।
छन्दो बृहत्यतिश्चैषां तद्दैवं कथयामि वः ॥ १५ ॥

शब्दतन्मात्रमन्त्रस्य दैवमाकाश उच्यते ।
स्पर्शतन्मात्रमन्त्रस्य दैवतं वायुरुच्यते ॥ १६ ॥

[1] पारमेष्ठ्यं E

[2] A B D E omit this line.

रूपतन्मात्रमन्त्रस्य दैवमग्निरुदाहृतः ।
रसतन्मात्रमन्त्रस्य दैवमाप उदाहृताः ॥ १७ ॥

गन्धतन्मात्रमन्त्रस्य दैवतं पृथिवी मता ।
ऋषिर्धाता नवाक्षर्या बृहती छन्द उच्यते ॥ १८ ॥

दैवं ब्रह्मण्यदेवाख्यो महाविष्णुः सनातनः ।
सदापराजितायास्तु ऋषिः प्रद्युम्न उच्यते ॥ १९ ॥

. . . . . छन्दो दैवतं विष्णुरुच्यते ।
पञ्चाङ्गानामृषिश्चापि विष्वक्सेन उदाहृतः ॥ २० ॥

छन्दश्चापि तथा पङ्क्तिर्दैवतं कथयामि वः ।
हृदयस्याधिदैवं तु क्षेत्रज्ञश्चापि कथ्यते ॥ २१ ॥

अस्त्रस्य परमं दैवं भवेच्छक्रः शचीपतिः ।
पञ्चाङ्गानां तु सर्वेषामेक एव तु दैवतम् ॥ २२ ॥

दुर्गापराजितायास्तु अनिरुद्ध ऋषिः स्मृतः ।
छन्दश्चापि त्वतिच्छन्दो दैवतं च कुमारिका ॥ २३ ॥

नारसिंहस्य सर्वस्याप्यनिरुद्ध ऋषिः स्मृतः ।
छन्दश्चैवाप्यतिच्छन्दो नारसिंहस्तु दैवतम् ॥ २४ ॥

महासुदर्शनस्यापि ऋषिर्दक्षप्रजापति[1]: ।
छन्दश्चैवाप्यतिच्छन्दो दैवतं च सुदर्शनम् ॥ २५ ॥

[1] दक्षः प्रजापतिः B

ऋषिस्तु शङ्खमन्त्रस्य विष्वक्सेनः प्रतापवान् ।
सुप्रतिष्ठं भवेच्छन्दः पाञ्चजन्यस्तु दैवतम् ॥ २६ ॥

ऋषिः कृष्णो गदामन्त्रे पङ्क्तिश्छन्दस्तथैव च ।
देवता च गदा देवी या च कौमोदकी स्मृता ॥ २७ ॥

ऋषिस्तु पद्ममन्त्रस्य स्वयं ब्रह्मा चतुर्मुखः ।
छन्दश्चापि भवेदुष्णिग् देवता चापि पङ्कजम् ॥ २८ ॥

ऋषिर्मुसलमन्त्रस्य संकर्षण इति स्मृतः ।
छन्दश्चापि तु गायत्रं दैवतं मुसलं भवेत् ॥ २९ ॥

ऋषिस्तु खड्गमन्त्रस्य स्वयमेव जनार्दनः ।
गायत्रं तु भवेच्छन्दो नारदश्चास्य दैवतम् ॥ ३० ॥

ऋषिर्वै वासुदेवस्तु धनुर्मन्त्रस्य शाश्वतः ।
छन्दश्च सुप्रतिष्ठं तु शार्ङ्गं चैव तु दैवतम् ॥ ३१ ॥

ऋषिर्वै नारदो ज्ञेयो मालामन्त्रस्य शाश्वतः ।
अनुष्टुप् च भवेच्छन्दो मालादेवी तु दैवतम् ॥ ३२ ॥

मूर्तयो मूर्तिमन्त्राणामृषयः परिकीर्तिताः ।
एवं वै देवतास्तेषां सूक्ष्मरूपेण ये स्थिताः ॥ ३३ ॥

यो वासुदेवमन्त्रस्तु तस्योष्णिक् छन्द उच्यते ।
तथा संकर्षमन्त्रस्य च्छन्दः समभिधीयते ॥ ३४ ॥

ततः प्रद्युम्नमन्त्रस्य गायत्रं छन्द उच्यते ।
ततोऽनिरुद्धमन्त्रस्य उष्णिक् छन्द उदाहृतम् ॥ ३५ ॥

देवीनामपि मन्त्राणामृषयो मूर्तयः स्मृताः ।
देव्यस्तु दैवतं तेषां छन्दस्तु कथयामि वः ॥ ३६ ॥

प्रतिष्ठा शान्तिमन्त्रस्य च्छन्दः समभिधीयते ।
श्रीमन्त्रस्य प्रतिष्ठैव च्छन्दः समभिधीयते ॥ ३७ ॥

ततः सरस्वतीमन्त्रे गायत्रं छन्द उच्यते ।
रतिमन्त्रे प्रतिष्ठैव च्छन्दः समभिधीयते ॥ ३८ ॥

ऋषिश्च सूर्यमन्त्राणां चतुर्णामज एकपात् ।
छन्दः षडक्षरस्यापि गायत्रं छन्द उच्यते ॥ ३९ ॥

त्रयाणामपि शेषाणामुष्णिक् छन्द उदाहृतम् ।
[1]षडक्षरस्य दैवं तु ऋचीको नाम दैवतम् ॥ ४० ॥

ऋषिर्धात्रर्ककर्कीशमहाश्वेनाश्च वै क्रमात् ।
त्रयाणामपि शेषाणां दैवतं समुदाहृतम् ॥ ४१ ॥

चत्वार ऋषयश्चैते रवेरेकाक्षरस्य च ।
छन्दश्चैवाप्यतिच्छन्दो दैवतं रविरेव च ॥ ४२ ॥

ऋषिर्वराहमन्त्रस्य[2] अनिरुद्ध उदाहृतः ।
छन्दश्चैवाप्यनुष्टुप् च दैवमादिवराहकः ॥ ४३ ॥

छन्दश्चापि तु गायत्रं दैवतं वामनो भवेत् ।
ऋषिर्माधवमन्त्राणां मार्कण्डेयः प्रकीर्तितः ॥ ४४ ॥

[1] B omits three lines from here.　　[2] वाराहमन्त्रस्य E

छन्दस्तु विष्णुमन्त्रस्य सुप्रतिष्ठा प्रकीर्तिता ।
मधुसूदनमन्त्रस्य उष्णिक् छन्द उदाहृतम् ॥ ४५ ॥

ततो वामनमन्त्रस्य गायत्रं छन्द उच्यते ।
हृषीकेशस्य मन्त्रस्य उष्णिक् छन्द उदाहृतम् ॥ ४६ ॥

पद्मनाभस्य मन्त्रस्य उष्णिक् छन्द उदाहृतम् ।
ततः केशवमन्त्रस्य गायत्रं छन्द उच्यते ॥ ४७ ॥

नारायणस्य मन्त्रस्य च्छन्द उष्णिगुदाहृतम् ।
ततो माधवमन्त्रस्य गायत्र छन्द उच्यते ॥ ४८ ॥

ततो गोविन्दमन्त्रस्य गायत्रं छन्द उच्यते ।
एतेषामपि मन्त्राणां द्वादशैते च देवताः ॥ ४९ ॥

ततस्तु मातृमन्त्राणामृषिर्वै नर उच्यते ।
एष वै दैवतं तेषां छन्दस्तु कथयामि वः ॥ ५० ॥

वागीश्वर्यास्तु गायत्रं छन्दः समभिधीयते ।
क्रियायाः [1]सुप्रतिष्ठा तु च्छन्द उक्ता सनातनी ॥ ५१ ॥

प्रतिष्ठैव तु कीर्त्यास्तु लक्ष्म्याश्चापि प्रकीर्तिता ।
सृष्ट्याश्चापि प्रतिष्ठैव च्छन्दः समभिधीयते ॥ ५२ ॥

विद्यायाः सुप्रतिष्ठा तु च्छन्द उक्ता सनातनी ।
कान्त्याश्चापि प्रतिष्ठा तु च्छन्दः समभिधीयते ॥ ५३ ॥

एतेषां दैवतं चापि सप्त वैष्णवमातरः ।
विष्वक्सेनस्य मन्त्रस्य ऋषिस्तार्क्ष्य उदाहृ... ॥ ५४ ॥

[1] सुप्रतिष्ठं तु E

उष्णिक् छन्दस्तु संप्रोक्तं विष्वक्सेनस्तु दैवतम् ।
चण्डप्रचण्डयोर्मन्त्रे ऋषिर्वैवस्वतः स्मृतः ॥ ५५ ॥

छन्दस्तु चण्डमन्त्रस्य सुप्रतिष्ठा उदाहृता ।
छन्दः प्रचण्डमन्त्रस्य गायत्र समुदाहृतम् ॥ ५६ ॥

ऋषिर्ब्रह्मा समुद्दिष्टो गारुडे चतुरक्षरे ।
प्रतिष्ठा छन्द उद्दिष्टा गरुडश्चाधिदैवतम् ॥ ५७ ॥

नीलकण्ठस्त्वृषिः प्रोक्तो गारुडे च त्रियक्षरे ।
छन्दश्चापि तु गायत्रं गरुत्मान् दैवतं परम् ॥ ५८ ॥

भूतयक्षग्रहाणां तु मन्त्राणामृषिरच्युतः ।
छन्दश्चैवाप्यतिच्छन्दः श्रीधरश्चाधिदैवतम् ॥ ५९ ॥

कुमुदादिममन्त्राणां नि . . . द्वाराणि रक्षिणाम् ।
ऋषिर्गरुत्मान् विज्ञेयश्छन्दस्तु कथयामि वः ॥ ६० ॥

ततः कुमुदमन्त्रस्य गायत्रं छन्द उच्यते ।
कुमुदाक्षस्य मन्त्रस्य उष्णिक् छन्द उदाहृतम् ॥ ६१ ॥

पुण्डरीकस्य मन्त्रस्य उष्णिक् छन्द उदाहृतम् ।
वामनस्य तु मन्त्रस्य उष्णिक् छन्द उदाहृतम् ॥ ६२ ॥

शङ्कुकर्णस्य मन्त्रस्य उष्णिक् छन्द उदाहृतम् ।
सर्पनेत्रस्य मन्त्रस्य उष्णिक् छन्द उदाहृतम् ॥ ६३ ॥

सुमुखस्य तु मन्त्रस्य गायत्रं छन्द उच्यते ।
सुप्रतिष्ठस्य मन्त्रस्य अनुष्टुप् छन्द उच्यते ॥ ६४ ॥

एतेषामपि मन्त्राणां देवा दौवारिकास्त्वमी ।
सर्वेषामग्निमन्त्राणामृषिर्ब्रह्मा प्रकीर्तितः ॥ ६५ ॥

छन्दश्चापि तु गायत्रं गायत्र्याः समुदाहृतम् ।
शेषाणामपि मन्त्राणां त्रिष्टुप् छन्द उदाहृतम् ॥ ६६ ॥

दैवतं च भवेदग्निर्जातवेदा इति स्मृतः ।
प्रजापतिर्विराडाख्य ऋषि . . . . . रपि ॥ ६७ ॥

गायत्रं तु भवेच्छन्दो दैवतं हव्यवाडभूत ।
शेषाणां विष्णुमन्त्राणामादित्य ऋषिरुच्यते ॥ ६८ ॥

छन्दश्चापि तु गायत्रं महाविष्णुश्च दैवतम् ।
अनुक्तानां तु मन्त्राणां हनूमानृषिरुच्यते ॥ ६९ ॥

छन्दश्चापि तु गायत्रं सदाविष्णुश्च दैवतम् ।
संहितासु च सर्वासु द्रष्टव्यो वर्णविस्तरः ॥ ७० ॥

मन्त्रं तु साधकः कृत्वा ऋषिर्भूत्वा स्वयं ततः ।
जन्मनैवमुपासीन बलियज्ञादिभिः क्रमात् ॥ ७१ ॥

अनेन विधिवन्मन्त्रः शक्तिमन्त्रो भवत्युत ।
कुर्वन्ति कार्यसिद्धिं च प्रसीदति . . . . ॥ ७२ ॥

मन्त्रवीर्यबलैर्युक्तः साधकश्चापि जायते ।
तस्मात् सर्वप्रयत्नेन ऋषिच्छन्दोऽपिदैवतम् ।
विदित्वा साधकः सम्यक् सर्वकर्माणि साधयेत् ॥ ७३ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम्
ऋषिरात्रे छन्दोविधिर्नाम सप्तमोऽध्यायः

# ऋषिरात्रे अष्टमोऽध्यायः

सनत्कुमारः—

प्रायश्चित्तानि वक्ष्यामि समयादिव्यतिक्रमे ।
ये वै समयिनां धर्माः समयास्ते प्रकीर्तिताः[1] ॥ १ ॥

तान् सर्वान् समयान् वक्ष्ये रक्ष्यन्ते ये च दीक्षितैः ।
दीक्षाकाले त्वथाचार्यैर्वक्तव्याः समयाः खलु ॥ २ ॥

अर्चनाद्यास्ततः सर्वे विहाराहारसंयुताः ।
एककालो द्विकालश्च त्रिकालश्च तथा परः ॥ ३ ॥

षट्कालश्च यथायोगः [2]पञ्चमीकाल एव च ।
षड्विधाश्चात्र संप्रोक्ताः पुरुषोत्तमपूजकाः ॥ ४ ॥

नित्योऽनियतकालश्च द्विविधस्त्वेककालकः ।
षट्कालेषु तु चैकस्मिन्नर्चनानि करोति यः ॥ ५ ॥

स नित्य इति संप्रोक्तो नित्ययुक्तो दृढव्रतः ।
एकस्मिन्नेव काले तु योऽर्चयेन्नियमं विना ॥ ६ ॥

प्रोक्तोऽनियतकालः स पूर्वाह्णे तु विशिष्यते ।
सायंप्रातःक्रमश्चैव मध्याह्नो रात्रिरेव च ॥ ७ ॥

[1] इति कीर्तिता: B

[2] पञ्चम: E

प्रत्यूषश्च प्रदोषश्च तथानियम एव च ।
चतुर्विधास्तु संप्रोक्ता दीक्षितास्तु द्विकालका: ॥ ८ ॥

यश्च प्रातश्च सायं च नियमेनैव पूजयेत् ।
सायंप्रात:क्रमश्चेति नाम्ना स परिकीर्तितः ॥ ९ ॥

मध्याह्ने मध्यरात्रे च नियमाद्यस्तु पूजयेत् ।
मध्याह्नरात्र इत्युक्तो नाम्ना सोऽयमुपासकः ॥ १० ॥

प्रत्यूषे च प्रदोषे च नियमाद्यस्तु पूजयेत् ।
स प्रत्यूषप्रदोषश्च स्वनाम्ना परिकीर्तितः ॥ ११ ॥

यस्तु कालद्वये कुर्यात् पूजामनियमेन तु ।
स चानियम इत्युक्तो नाम्ना चैषां तु पश्चिमः ॥ १२ ॥

आह्निको रात्रिकश्चेति त्रिकालो द्विविधो मतः ।
अह्नि त्रिकालपूजां तु कुरुते यः स आह्निकः ॥ १३ ॥

रात्रौ त्रिकालपूजां तु कुरुते यः स रात्रिक. ।
षट्कालः स यथायोगं षट्सु कालेषु योऽर्चयेत् ॥ १४ ॥

उपासकेन्द्र इत्युक्तो नाम्ना षट्कालिको नरः ।
दिने वाप्यथ रात्रौ वा एककालमथापि वा ॥ १५ ॥

द्विकालं वा त्रिकालं वा षट्कालमथवा पुनः ।
द्रव्यसंयोगकाले वा संभवे सति कर्मणाम् ॥ १६ ॥

श्रद्धया पूजयेद्यस्तु यथायोगः स उच्यते ।
यस्तु वै विष्णुपञ्चम्यां देवं कृत्वाधिवासनम् ॥ १७ ॥

पूजयेद्विधिना यः स पञ्चमीकाल उच्यते ।
तत्र स्थण्डिलयाजी च तथा मण्डलयाजकः ॥ १८ ॥

स्थण्डिले योऽर्चयेद्देवं पञ्चम्यां विधिपूर्वकम् ।
स तु स्थण्डिलयाजीति नाम्ना च परिकीर्त्यते ॥ १९ ॥

मण्डले पूजयेद्यस्तु स च मण्डलयाजकः ।
एते द्वादशभेदेन प्रोक्ता नित्यमुपासकाः ॥ २० ॥

एतेषां फलसंपत्तिः क्रमयोगेन [1]कथ्यते ।
अब्दैर्द्वादशभिर्युक्तो नित्यः सिद्धिमवाप्नुयात् ॥ २१ ॥

अष्टाब्दैः सिद्धिमायाति सायंप्रातःक्रमो नरः ।
षड्भिरब्दैः समभ्येति मध्याह्नोरात्रिको नरः ॥ २२ ॥

अब्दैश्चतुर्भिः संयाति तं प्रत्यूषप्रदोषकः ।
दशभिर्वत्सरैः सिद्धिं [2]प्राप्नोत्यनियमो नरः ॥ २३ ॥

आह्निकः सिद्धिमायाति द्वाभ्यामेव न संशयः ।
रात्रिको वत्सरेणैव सिद्धिं प्राप्नोत्यसंशयम ॥ २४ ॥

षट्कालिकस्तु षण्मासात् सिद्धिमाप्नोत्यसंशयम् ।
अष्टाब्दैः सिद्धिमायाति यथायोगो न संशयः ॥ २५ ॥

ततः स्थण्डिलयाजी तु वत्सरात् सिद्धिमाप्नुयात् ।
षण्मासात् सिद्धिमभ्येति यस्तु मण्डलयाजकः ॥ २६ ॥

[1] वक्ष्यते E

[2] याति चानियमः B

अर्चने लङ्घिते चैषां प्रायश्चित्तमतः[1] शृणु ।
[2]काले तु लङ्घिते पश्चादष्टोत्तरसहस्रकम् ॥ २७ ॥

जप्त्वाष्टाक्षरमन्त्रं तु तस्माद् दोषात् प्रमुच्यते ।
एकदा लङ्घने कृत्वाप्युपवासं तथा जपेत् ॥ २८ ॥

अर्चनां द्विगुणां कृत्वा तस्माद् दोषात् प्रमुच्यते ।
जपं च प्रत्यहं चैव अष्टोत्तरसहस्रकम् ॥ २९ ॥

एकं वाप्युपवासं च यावत् पक्षस्य लङ्घने[3] ।
जपं तु प्रत्यहं तावदुपवासत्रयं तथा ॥ ३० ॥

मासस्य लङ्घने [4]प्राप्ते हुत्वाज्यसमिधः क्रमात् ।
सहस्रं मूलमन्त्रेण चरुहोमं घृतं पुनः ॥ ३१ ॥

आराधयित्वा देवेशं तस्मात् पापात् प्रमुच्यते ।
[5]षण्मासलङ्घने कुर्याज्जपं शतसहस्रकम् ॥ ३२ ॥

उपवासत्रयं कुर्याद्धुत्वा चैव यथाविधि ।
पलाशसमिधश्चापि घृतस्य च चरोरपि ॥ ३३ ॥

तिलानां चापि पद्मानां शतसाहस्रिकं पृथक् ॥
हुत्वाराध्य सदाविष्णुं तस्माद् दोषात् प्रमुच्यते ॥ ३४ ॥

[6]लङ्घने वत्सरस्याथ शरदः स्मृतिसंयुतः[7] ।
वर्णलक्षं जपेत् पश्चात् पुनः संस्कारमर्हति ॥ ३५ ॥

1 प्रायश्चित्तान्यतः B E
2 कालं B E
3 लङ्घनम् B E
4 प्रोक्तं B
5 तेषामलङ्घने B
6 लङ्घनेन सरस्याथ B
7 संवृतः B

अशक्ताश्चापि ये चान्ये प्रायश्चित्तविधिं प्रति ।
पुनर्दीक्षाप्रवेशेन सर्वे शुध्यन्ति मानवाः ॥ ३६ ॥

अकामकृतमज्ञानान्मासं समयिनां भवेत् ।
पापमामरणं तेषां यागेनैकेन शुध्यति ॥ ३७ ॥

तस्मात् सर्वप्रयत्नेन यागं कुर्याद्विचक्षणः ।
सूतके प्रेतके चैव कर्मकाले तथाध्वनि ॥ ३८ ॥

दुर्भिक्षे राष्ट्रसंघाते विपत्त्यामप्युपप्लवे ।
ततो निरोधकाले तु व्याधितो विपरीकृते ॥ ३९ ॥

भयार्ते विक्लबे शून्ये राजदण्डस्य पातने ।
चित्तोन्मादनकालेऽपि व्रतलोपो न विद्यते ॥ ४० ॥

विहाराहारदोषेषु प्रायश्चित्तं वदामि वः ।
उपेत्य विष्णुपञ्चम्यां स्त्रियं मोहेन साधकः ॥ ४१ ॥

अष्टाक्षरसहस्रं तु मनुं त्वन्तर्जले जपेत् ।
अष्टाक्षरशतेनाथ उपस्थाय दिवाकरम् ॥ ४२ ॥

सहस्रं तु जपेत् पश्चाद् दर्भपाणिः समाहितः ।
ध्यात्वा तु परमं विष्णुं तस्मात् पापात् प्रमुच्यते ॥ ४३ ॥

अयने चैव संक्रान्त्यां विषुवे संध्ययोरपि ।
दिवा चापि स्त्रियं गत्वा अहोरात्रमुपोषितः ॥ ४४ ॥

जप्त्वा सहस्रं तावत्तु हुत्वा चाज्यसमिच्चरुम् ।
कृत्वाथ विष्णुमुद्रां च तस्मात पापात् प्रमुच्यते ॥ ४५ ॥

यन्त्रे गोष्ठेऽथ याने वा वृक्षमूले चतुष्पथे ।
सभायां च [1]प्रपायां च तीर्थेष्वावसथेषु वा ॥ ४६ ॥

जलेऽध्वनि तटे चैव देवतायतनेषु च ।
गत्वा स्त्रियं तु मोहेन स्नात्वानश्नन् दिनत्रयम् ॥ ४७ ॥

कृत्वा त्रिषवणस्नानमार्द्रवासा उपोषितः ।
मूलमन्त्रायुतं जप्त्वा हुत्वा तान् समिदादिकान् ॥ ४८ ॥

दत्त्वा भगवते गां च तस्मात् पापात् प्रमुच्यते ।
विष्ण्वालये स्त्रियं मोहाद्यदि गच्छति मानवः ॥ ४९ ॥

सबीजं लिङ्गमुत्कृत्य हस्ते कृत्वाप्युदङ्मुखः ।
यावच्छरीरपातः स्यात् तावत्तां दिशमाव्रजेत् ॥ ५० ॥

विष्णवे वाथ सर्वस्वं दद्याद्भागवताय वा ।
अग्निं वा प्रविशेद्विष्णुं ध्यात्वा तोयं तु वा विशेत् ॥ ५१ ॥

कुर्यात् तदर्चनां[2] वापि यावत् प्राणविमोक्षणम् ।
उक्तं वा गुरुणा कुर्यात् तस्मात् पापात् प्रमुच्यते ॥ ५२ ॥

विधवां कन्यकां शिष्यां परस्त्रियमथापि वा ।
तथा प्रव्रजितां चापि गत्वा मोहेन मानवः ॥ ५३ ॥

मासं शाकव्रतो भूत्वा मन्त्रमष्टाक्षरं जपेत् ।
कृत्वा त्रिषवणस्नानं तस्मात् पापात् प्रमुच्यते ॥ ५४ ॥

[1] प्रभायां B

[2] द्वादश E; दर्शना B

पितृव्यां [1]मातुलानीं वा अथो नप्तृस्त्रियं तथा ।
गत्वा मातृस्वसारं च मूलव्रतपरायणः ॥ ५५ ॥

कृत्वा त्रिषवणस्नानमार्द्रवासा जितेन्द्रियः ।
मासमेकं जपेन्मन्त्रमष्टाक्षरमतन्द्रितः ॥ ५६ ॥

कपिलां विष्णवे दत्त्वा तस्मात् पापात् प्रमुच्यते ।
आचार्यस्य स्त्रियं मोहाद्राजस्त्रियमथापि वा ॥ ५७ ॥

उपैति चेत् स्वकं देहं गृध्रेभ्यस्तु निवेदयेत् ।
ध्यात्वा देवं महाविष्णुमष्टाक्षरपरायणः ॥ ५८ ॥

यावत् प्राणविमुक्तिः स्यात् तावद्विष्णुमनुस्मरेत् ।
गृध्रग्रस्तशरीरोऽसौ तस्मात् पापात् प्रमुच्यते ॥ ५९ ॥

गत्वा दुहितरं पौत्रीं स्वसारं स्वस्त्रियां तु वा ।
पैतृष्वसेयीं मातुश्च स्वसारं मातरं तु वा ॥ ६० ॥

लिङ्गमुत्कृत्य चानश्नन् सागराभिमुखो व्रजेत् ।
सागरं प्रविशेत कामं यावत् प्राणविमोक्षणम् ॥ ६१ ॥

तावदष्टाक्षरं जप्त्वा तस्मात् पापात् प्रमुच्यते ।
गत्वा मोहेन पतितामपीदं व्रतमाचरेत् ॥ ६२ ॥

कामेन गत्वा चण्डालीं चातुर्मास्यव्रतं चरेत् ।
मासमेकं तु पयसा मासमेकं घृतेन च ॥ ६३ ॥

[1] मातुलस्याथ B

मासमेकं तु मूलेन मासमेकं तु सक्तुना ।
वर्तयन्नियतात्मा च मूलमन्त्रपरायणः ॥ ६४ ॥

पुनर्दीक्षां प्रविश्याथ तस्मात् पापात् प्रमुच्यते ।
गत्वा रजस्वलां मोहान्मासं वै यावकाशनः ॥ ६५ ॥

मूलमन्त्रजपं कृत्वा तस्मात् पापात् प्रमुच्यते ।
असेव्यस्त्रियमासेव्य तदेव व्रतमाचरेत् ॥ ६६ ॥

भूमौ वाथ जले वाथ सिक्त्वा रेतस्त्वयोनिषु ।
गोमूत्रयावकाहारो मासमष्टाक्षरं जपेत् ॥ ६७ ॥

त्रिरात्रोपोषितो भूत्वा स्पर्शयेद् गां च विष्णवे ।
समित्सहस्रं हुत्वाथ तस्मात् पापात् प्रमुच्यते ॥ ६८ ॥

वर्धकीं नर्तकीं वाथ कुलटां वृषलीं तु वा ।
गत्वा मासं यावकाशी मूलमन्त्रायुतं जपेत् ॥ ६९ ॥

समिदादिहुतं कृत्वा तस्मात् पापात् प्रमुच्यते ।
सूतान्नं प्रेतकान्नं च भुक्त्वा मोहेन दीक्षितः ॥ ७० ॥

त्रिरात्रोपोषितो भूत्वा मूलमन्त्रायुतं जपेत् ।
लशुनं गृञ्जनं मद्यं भुक्त्वा पर्युषितं तथा ॥ ७१ ॥

स्नात्वानश्नन्नहोरात्रं तिष्ठेदासनवर्जितः[1] ।
अष्टाक्षरसहस्रं तु जपेत् पीत्वा सुवर्चलाम् ॥ ७२ ॥

[1] आसीत् पुनः सदा B

भुक्त्वाप्यदीक्षितस्यान्नमुपोष्य विधिनैव तु ।
अष्टाक्षरसहस्रेण जप्तेन तु शुचिर्भवेत् ॥ ७३ ॥

तुम्बीं कोशातकं चैव[1] च्छत्राकं कोद्रवं तथा ।
शार्ङ्गिष्ठमारनालं च भुक्त्वानश्नंस्त्र्यहं क्षिपेत् ॥ ७४ ॥

पञ्चगव्यं ततः पीत्वा पूतो भवति साधकः ।
मत्स्यकूर्मवराहाणां जग्ध्वा मांसानि साधकः ॥ ७५ ॥

त्रियहं पञ्चगव्येन त्रियहं पयसा पुनः ।
त्रियहं ब्रह्मकूर्चेन त्रियहं यावकेन तु ॥ ७६ ॥

वर्तयित्वायुतं जप्त्वा पूतो भवति साधकः ।
निर्माल्यं भक्षयित्वा चाप्युच्छिष्टमगुरोरपि ॥ ७७ ॥

मासं पयोव्रतो भूत्वा जप्त्वा चाष्टाक्षरं सदा ।
ब्रह्मकूर्चं ततः पीत्वा पूतो भवति साधकः ॥ ७८ ॥

भुक्त्वा चानुपनीतेन भुक्त्वा चैव स्त्रिया सह ।
भुक्त्वाप्यदीक्षितेनापि तदेव व्रतमाचरेत् ॥ ७९ ॥

बिडालकाकोच्छिष्टं तु पक्षिदष्टं च नीरसम् ।
क्रिमिकेशादिदुष्टं च भुक्त्वा तद्व्रतमाचरेत् ॥ ८० ॥

आकाशस्थं च हस्तस्थमासनस्थं तथैव च ।
शयनस्थं च कांस्यस्थं पद्मपत्रगतं तथा ॥ ८१ ॥

[1] चापि B

परहस्तस्थितं भुक्त्वा तदेव व्रतमाचरेत् ।
श्वचण्डालादिभिर्दृष्टमाघ्रातावक्षुतं तथा ॥ ८२ ॥

पादस्पृष्टं तथाक्रान्तं भुक्त्वा तद्व्रतमाचरेत् ।
उत्थाय च पुनर्भुक्त्वा तथा वान्तविमिश्रितम् ॥ ८३ ॥

दष्टपीतावशिष्टं च भुक्त्वा तद्व्रतमाचरेत् ।
दृष्ट्वा च कुक्कुटं श्वानं चण्डालं च रजस्वलाम् ॥ ८४ ॥

पतितं चैव पाषण्डं देवनिर्माल्यभक्षकम् ।
अन्त्यजं वापि भुञ्जानो व्रतमेतत् समाचरेत् ॥ ८५ ॥

यो नार्चयेदप्यतिथिं तथा भागवतान् जनान् ।
कालप्राप्तान् स्वयं भुक्त्वा तदेव व्रतमाचरेत् ॥ ८६ ॥

विहाराहारसमयस्त्वर्चनासमयस्तथा ।
समासादत्र संप्रोक्त आचारसमयः परः ॥ ८७ ॥

तस्यापि लङ्घने वक्ष्ये प्रायश्चित्तं यथाविधि ।
आदित्याभिमुखो भूत्वा मूत्रोच्चारं विसृज्य च ॥ ८८ ॥

स्नात्वानश्नन्नहःशेषमार्द्रवासा जितेन्द्रियः ।
अष्टाक्षरसहस्रं तु जप्त्वा पूतो भविष्यति ॥ ८९ ॥

रात्रावुदङ्मुखश्चापि दिवा वा दक्षिणामुखः ।
कुर्यान्मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ ९० ॥

प्रत्यर्कं प्रति गां वापि प्रति सोमोदकं तु वा ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ ९१ ॥

सृष्टमूत्रपुरीषस्तु दृष्ट्वा ज्योतिर्गणान् दिशि ।
तथाग्निं चन्द्रसूर्यौ च तदेव व्रतमाचरेत् ॥ ९२ ॥

अकृत्वा व्यवधानं तु कृत्वा मूत्रपुरीषकम् ।
दग्धे कृष्टेऽपि च क्षेत्रे तदेव व्रतमाचरेत् ॥ ९३ ॥

कृतोच्चारस्तु संभाष्य यावदाचमनक्रमम् ।
सृष्टमूत्रपुरीषश्च तदेव व्रतमाचरेत् ॥ ९४ ॥

प्रविश्यान्तर्जले कृत्वा पायुशोधं तु साधकः ।
गोमयेनापि वा कृत्वा तदेव व्रतमाचरेत् ॥ ९५ ॥

गोमये वाथ गोष्ठे वा वृक्षे वा कूप एव वा ।
कृत्वा मूत्रपुरीषं तु तदेव व्रतमाचरेत् ॥ ९६ ॥

चत्वरे वृक्षमूले वा शून्यागारेऽपि वा पुनः ।
कृत्वा मूत्रपुरीषं तु तदेव व्रतमाचरेत् ॥ ९७ ॥

स्वच्छायायां तथान्यस्य च्छायायां वा[1] कदाचन ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ ९८ ॥

मूत्रे वाथ पुरीषे वा श्वभ्रे वा यत्र कुत्रचित् ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ ९९ ॥

पात्रे वा धान्यकोष्ठे[2] वा क्षेत्रे वा देवसंनिधौ ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ १०० ॥

[1] तु B [2] गोष्ठ B.

सभायां वा प्रपायां वा वह्न्यगारे महापथे ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ १०१ ॥

तोये वा तोयतीरे वा तुषे भस्मनि वा पुनः ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ १०२ ॥

अन्तर्द्वीपे तथा नद्यामुद्यानोपवनेषु च ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ १०३ ॥

कुलीरवासे वल्मीके मूषिकाबिल एव वा ।
कृत्वा मूत्रं पुरीषं वा तदेव व्रतमाचरेत् ॥ १०४ ॥

आचामेत् कृतशौचस्तु अकृत्वा पादधावनम् ।
तथाप्यनुपवीतं च तदेव व्रतमाचरेत् ॥ १०५ ॥

प्रक्षाल्य केवलौ पादौ हस्तौ वापि मृदा विना ।
अनाचान्तस्तथाभूतस्तदेव व्रतमाचरेत् ॥ १०६ ॥

विनाघमर्षणं स्नात्वा विसृज्यौपासनं तथा ।
विना भानोरुपस्थानं तदेव व्रतमाचरेत् ॥ १०७ ॥

सहासनं तु संसेव्य अन्यभक्तैरदीक्षितैः ।
तथा पाषण्डिभिर्व्रात्यैस्तदेव व्रतमाचरेत् ॥ १०८ ॥

सह शय्यां ततः कृत्वा तादृग्भूतैर्नराधमैः ।
सर्वैर्माहेश्वरैश्चापि तदेव व्रतमाचरेत ॥ १०९ ॥

पाण्डराङ्गं ततः स्पृष्ट्वा पाषण्डिनमथापि वा ।
तथा देवलकं चापि तदेव व्रतमाचरेत् ॥ ११० ॥

श्वानं वाप्यथ चण्डालं दस्युमन्तिमवर्णजम् ।
प्रतिलोमं ततः स्पृष्ट्वा तदेव व्रतमाचरेत् ॥ १११ ॥

अभिन्नाचारसमयैः शपथादिव्यतिक्रमे ।
प्रायश्चित्तविधानं तु कथयामि यथातथम् ॥ ११२ ॥

शपथो द्विविधः प्रोक्तः शपथः शाप एव च ।
कृत्वा तु शपथं मोहाद् वृथा वै देवतां प्रति ॥ ११३ ॥

आराध्य देवतास्तद्वन्मासं शाकव्रतान्वितः ।
अष्टाक्षरमहोरात्रं जप्त्वा पापात् प्रमुच्यते ॥ ११४ ॥

तथैव देवतां शप्त्वा तथा भागवतानपि ।
आचार्यं च तथा नारीं तदेव व्रतमाचरेत् ॥ ११५ ॥

राजानं च महाभूतमश्वत्थं गां यतिं द्विजम् ।
उपाध्यायं तथा शप्त्वा तदेव व्रतमाचरेत् ॥ ११६ ॥

मातरं पितरं पुत्रं मातुलं श्वशुरं तथा ।
पितामहं पितृव्यं च शप्त्वा तद्व्रतमाचरेत् ॥ ११७ ॥

जलं नदीं समुद्रांश्च सरस्तीर्थानि पर्वतान् ।
आत्मानं च तथा शप्त्वा तदेव व्रतमाचरेत् ॥ ११८ ॥

नागान् यक्षान् ग्रहान् सिद्धान् किंनरानपि देवताः ।
गन्धर्वाप्सरसश्चैव शप्त्वा तद्व्रतमाचरेत् ॥ ११९ ॥

उक्तस्तु देवताशापे प्रायश्चित्तविधिः परः ।
कुत्सने वैष्णवानां च प्रायश्चित्तं वदामि वः ॥ १२० ॥

अष्टाक्षरपराः सर्वे वैष्णवा इति कीर्तिताः ।
तेषां तु कृत्स्ने त्वेष प्रायश्चित्तविधिः परः ॥ १२१ ॥

उपोष्य विधिना पीत्वा ब्रह्मकूर्चं यथाविधि ।
मूलमन्त्रसहस्रं तु जप्त्वाराध्य हरिं [1]गुरुम् ॥ १२२ ॥

अभिवाद्य यथान्यायं तस्मात् पापात् प्रमुच्यते ।
हुंकारं वैष्णवस्योक्त्वा त्वंकारं च गरीयसः ॥ १२३ ॥

अतिक्रम्य [2]गुरुं पश्चात् तदेव व्रतमाचरेत् ।
अवगृह्य न कोपेन वैष्णवं प्रति यत्नतः ॥ १२४ ॥

हस्तेनाप्यथ वस्त्रेण तदेव व्रतमाचरेत् ।
पातयित्वास्य शस्त्राणि तदेव द्विगुणं चरेत् ॥ १२५ ॥

उत्पाद्य शोणितं [3]गात्रे तदेवाष्टगुणं चरेत् ।
हन्तुस्तस्य कदाचित्तु निष्कृतिर्न विधीयते ॥ १२६ ॥

जातिभ्रंशकरे पश्चात् प्रायश्चित्तं वदामि वः ।
पुंसि चापि च मैथुन्यं जिह्वामैथुनमेव च ॥ १२७ ॥

जात्यन्तरगतिश्चैव ब्राह्मणानां च हिंसनम् ।
अथवा [4]गोषु वै गच्छेज्जातिभ्रंशकरं भवेत् ॥ १२८ ॥

जातिभ्रंशकरे त्वत्र व्रतमेतन्निबोधत ।
पयसा मासमेकं तु शाकेनैकं तथापि च ॥ १२९

[1] प्रभुम् B F
[2] कृतं B
[3] गात्रात् B
[4] गवि E

मूलेनैकं यावकेन [1]उदकेन तथापरम् ।
वर्तयेन्नियतात्मा तु मूलमन्त्रपरायणः ॥ १३० ॥

पञ्चगव्यं ततः पीत्वा तस्मात् पापात् प्रमुच्यते ।
जनयित्वा सुतं मोहात् प्रतिलोमान्त्यजातिषु ॥ १३१ ॥

सत्यां प्रव्रजितायां च तदेव व्रतमाचरेत् ।
[2]चण्डाल्यां जातपुत्रस्य निष्कृतिर्न विधीयते ॥ १३२ ॥

पतितानां तु वक्ष्यामि प्रायश्चित्तं सुदुष्करम् ।
सुरापः स्वर्णहर्ता च भ्रूणहा गुरुतल्पगः ॥ १३३ ॥

तत्संयुक्त इति प्रोक्ता महापातकिनो जनाः ।
आसवश्च सुरा चेति सुरा तु द्विविधा भवेत् ॥ १३४ ॥

हिन्तालजं तालजं च तथा वै नारिकेलजम् ।
आसवं त्रिविधं प्राहुः पतनीयं द्विजन्मनाम् ॥ १३५ ॥

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
पतन्ति पानादेतेषां सर्वथा तु द्विजातयः ॥ १३६ ॥

प्रायश्चित्तं सुरापाने प्राणान्तिकमुदाहृतम् ।
विलीनं वा पिबेत् ताम्रं सदाविष्णुमनुस्मरन् ॥ १३७ ॥

[1] B omits उदकेन.

[2] B adds the following verse before this line:

पतितायां सजातायामुक्तायां च पुनर्भुवि ।
उत्पाद्य कामतः पुत्रं तदेव व्रतमाचरेत् ॥

अग्निवर्णां सुरां पीत्वा तप्त्वा सम्यगथाग्निना ।
आप्राणान्तं हरिं ध्यात्वा तस्मात् पापात् प्रमुच्यते ॥ १३८ ॥

यो ब्राह्मणं सुवर्णं च शप्त्वा वाथ च्छलेन वा ।
गृह्णन्ति वञ्चयित्वा वा सुवर्णपतितास्तु ते ॥ १३९ ॥

प्रायश्चित्तं तथैतेषां कथयिष्यामि वः क्रमात् ।
गृहीत्वा मुसलं सम्यगायसीं यष्टिमेव वा ॥ १४० ॥

राज्ञे निवेदयेदेवं सुवर्णपतितोऽस्म्यहम् ।
मां हनानेन राजेन्द्र मुक्तिं तेनाहमाप्नुयाम् ॥ १४१ ॥

इत्युक्त्वा तु स्मरेद्विष्णुमुक्तदोषः कृताञ्जलिः ।
राजा तु प्रहरेन्मूर्ध्नि मुसलेन विशुद्धये ॥ १४२ ॥

मरणेनैव तेनासौ तस्मात् पापात् प्रमुच्यते ।
अथवा द्विगुणं दत्त्वा सुवर्णं विष्णवे पुनः ॥ १४३ ॥

ब्राह्मणाय च तावत्तु दत्त्वा [1]यावद्धृतं धनम् ।
अब्दं पयोव्रतो भूत्वा जपेदष्टाक्षरं सदा ॥ १४४ ॥

जपान्ते प्रविशेद्दीक्षां तस्मात् पापात् प्रमुच्यते ।
हत्वा स्त्रियश्च विप्रांश्च भ्रूणहा जायते नरः ॥ १४५ ॥

प्रायश्चित्तमथास्यापि कथयाम्यनुपूर्वशः ।
अरण्ये पर्वते वापि कुटीं कृत्वा निराश्रयः ॥ १४६ ॥

[1] यस्माद्धृतं B

भिक्षां परिभ्रमेद् ग्रामे ब्रह्महाहमिति ब्रुवन् ।
चरेत् खट्वाङ्गधारी तु तच्छिरःपात्रभोजनः ॥ १४७ ॥

जप्त्वाथाष्टाक्षरं मन्त्रं भूमिशय्यापरायणः ।
द्वादशाब्दं चरित्वैवं तस्मात् पापात् प्रमुच्यते ॥ १४८ ॥

अथवा विषयान् सर्वान् भ्रमेच्छवशिरोध्वजः ।
स्नात्वा तीर्थानि सर्वाणि ब्रह्महाहमिति ब्रुवन् ॥ १४९ ॥

ग्रामैकरात्रवासी तु भैक्षाहारो जितेन्द्रियः ।
[1]चक्रमन्त्रं जपेद्विद्वान् द्वादशाब्दं यथाविधि ॥ १५० ॥

सर्वस्वं दक्षिणां दत्त्वा तस्मात् पापात् प्रमुच्यते ।
अथवा पयसा वापि मूलेन च फलेन वा ॥ १५१ ॥

शाकेन यावकेनापि द्वादशाब्दं चरेद्व्रतम् ।
भ्रूणहाहमिति ख्याप्य स्त्रीवधात् परिमुच्यते ॥ १५२ ॥

बालं चापि तथा हत्वा तदेव व्रतमाचरेत् ।
गुरुदाराभिगमने पूर्वोक्तैव तु निष्कृतिः ॥ १५३ ॥

पतितस्यैव योगे तु प्रायश्चित्तं ब्रवीमि वः ।
सहासनाशनस्वप्नयानाध्ययनकर्मभिः ॥ १५४ ॥

संवत्सरेण पतति पतितेन सहाचरन् ।
सहभोजनयानेन सद्य एव पतत्यसौ ॥ १५५ ॥

[1] यत्र B

संयोगे पतितस्यापि प्रोच्यते निष्कृतिर्मया ।
अब्दं चान्द्रायणं कुर्यादब्दं शाकव्रतं तु वा ॥ १५६ ॥

अब्दं मूलव्रतं वापि चरेदष्टाक्षरं जपेत् ।
व्रतान्ते भोजयेद् विप्रान् दद्यात् सर्वस्वदक्षिणाम् ॥ १५७ ॥

पुनर्दीक्षां प्रविश्याथ तस्मात् पापात् प्रमुच्यते ।
उपपातकिनां वक्ष्ये प्रायश्चित्तं यथाविधि ॥ १५८ ॥

हत्वा नराधिपान् कोपाच्छस्त्रेणान्येन वा पुनः ।
अब्दं चान्द्रायणं कुर्यादष्टाक्षरपरायणः ॥ १५९ ॥

व्रते परिसमाप्ते तु भोजयित्वाथ वैष्णवान् ।
श्वेनाश्वं दक्षिणां दत्त्वा तस्मात् पापात् प्रमुच्यते ॥ १६० ॥

हत्वा वैश्यं तु कोपेन अमीभिर्मतिपूर्वकम् ।
अब्दं शाकव्रतं कुर्यादष्टाक्षरपरायणः ॥ १६१ ॥

ब्राह्मणान् भोजयित्वान्ते पीत्वा चैव सुवर्चलाम् ।
ऋषभं दक्षिणां दत्त्वा तस्मात् पापात् प्रमुच्यते ॥ १६२ ॥

हत्वा शूद्रं तु कोपेन संरम्भान्मतिपूर्वकम् ।
मासं पयोव्रतं कुर्यादष्टाक्षरपरायणः ॥ १६३ ॥

त्रिरात्रोपोषितो भूत्वा व्रतान्ते भोजयेद् द्विजान् ।
ब्रह्मकूर्चं ततः पीत्वा तस्मात् पापात् प्रमुच्यते ॥ १६४ ॥

हत्वा गां गजमश्वं वा व्यालं वा मृगमेव वा ।
वराहं च रुरुं वापि तदेव व्रतमाचरेत ॥ १६५ ॥

सर्पं वा कुक्कुटं वापि श्वानं मर्कटमेव वा ।
मयूरं वाथ [1]काकं वा हत्वा तद्व्रतमाचरेत् ॥ १६६ ॥

शुकं वा [2]पल्लिकां वापि मत्स्यं कूर्मं च तित्तिरिम् ।
मृगं वा जम्बुकं वापि हत्वा तद्व्रतमाचरेत् ॥ १६७ ॥

ऋक्षं वा महिषं वापि व्याघ्रं वा सिंहमेव वा ।
खड्गं कृष्णं शशं वापि हत्वा तद्व्रतमाचरेत् ॥ १६८ ॥

[3]शुकादिशकुनेर्बन्धं कृत्वोक्त्वा पैशुनं नृपे ।
कृत्वा स्तैन्यं तु वा ज्ञानात् तदेव व्रतमाचरेत् ॥ १६९ ॥

वस्त्रस्तेयं ततः कृत्वा लोहस्तेयं तथैव च ।
तथैव [4]त्रपुषः स्तेयं कृत्वा तद्व्रतमाचरेत् ॥ १७० ॥

कृत्वा तु पुस्तकस्तेयं यन्त्रस्तेयं तथैव च ।
स्नेहस्तेयं च गोस्तेयं रत्नस्तेयं तथैव च ॥ १७१ ॥

पक्षिस्तेयं [5]पयःस्तेयं छत्रादिस्तेयमेव च ।
तथैव शयनस्तेयं कृत्वा तद्व्रतमाचरेत् ॥ १७२ ॥

देवस्तेयं ततः कृत्वा निष्कृतिस्तस्य नोच्यते ।
प्रायश्चित्तं तु शिष्याणां वक्ष्यामि गुरुलङ्घने ॥ १७३ ॥

1 काकं वा omitted in B
2 Corrupt reading in B
3 Corrupt reading in B
4 पुरुषस्तेयं B
5 पयःस्तेयं omitted in B

लङ्घयित्वा तु चाज्ञानाद् वर्तते यः स्वतन्त्रतः ।
चान्द्रायणत्रयं कृत्वा अष्टाक्षरपरायणः ॥ १७४ ॥

उपवासत्रयं कृत्वा पश्चादार्द्राम्बरः शुचिः ।
नमस्कृत्य गुरोः पादावभिवन्द्य प्रसादयेत् ॥ १७५ ॥

यावत् तस्य प्रसादः स्यात् तावत् परिचरेद् गुरुम् ।
ततस्त्वाचमनं कुर्यात् तस्मात् पापात् प्रमुच्यते ॥ १७६ ॥

अकृत्वा भगवत्पूजामनुपोष्य च पञ्चमीम् ।
अकृत्वा भैक्षचरणं तदेव व्रतमाचरेत् ॥ १७७ ॥

पुष्पस्तेयं फलस्तेयं कृत्वाप्युक्त्वानृतं गुरोः ।
अकृत्वा समिदाधानं तदेव व्रतमाचरेत् ॥ १७८ ॥

अनिवेद्य गुरोः कृत्वा सर्वकर्माणि दीक्षितः ।
स्नात्वानश्नन्नहःशेषं गुरोर्वचनमाचरेत् ॥ १७९ ॥

आचार्यस्तु तदा शिष्यं शुश्रूषाभिरतं चिरात्[1] ।
अकृत्वा ग्रन्थिसंदर्भमसूयादिविवर्जितः[2] ॥ १८० ॥

कृत्वा मण्डलयागं तु अनुतापसमन्वितम् ।
अनुनीय ततः शिष्यं सिद्धार्थं तु निवेदयेत् ॥ १८१ ॥

अन्यथा पतति क्षिप्रमाचार्यः शिष्यवञ्चकः ।
तस्माद्रहस्यकृच्छ्रं तदाचार्याणां प्रवर्तते ॥ १८२ ॥

[1] चिरम् B [2] असूयादिभिरन्वितः B

पञ्चगव्येन देवेशं स्नापयित्वा यथाविधि ।
दर्शयेद्विष्णुमुद्रां तां सर्वपापप्रणाशनीम् ॥ १८३ ॥

भक्षयित्वाप्यभक्ष्याणि पीत्वा चापेयमेव च ।
कृत्वाकृत्यानि चाचार्यस्तदेव व्रतमाचरेत् ॥ १८४ ॥

प्रगृह्याप्रतिगृह्याणि तथाविक्रेयविक्रयम् ।
कृत्वा शप्त्वा च दीक्षां तु तदेव व्रतमाचरेत् ॥ १८५ ॥

यत् किंचिदशुभं कृत्वा व्रतेनानेन शुध्यति ।
स्नापयेत् पञ्चगव्येन पश्चाद्विष्णुं विचक्षणः ॥ १८६ ॥

इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् ऋषिरात्रे प्रायश्चित्तविधानं नामाष्टमोऽध्यायः

## ऋषिरात्रे नवमोऽध्यायः

सनत्कुमारः—

ब्रह्मकूर्चविधिं वक्ष्ये येन शुध्यन्ति मानवाः ।
पात्रमादौ प्रवक्ष्यामि यत्र गव्यं तु नीयते ॥ १ ॥

सौवर्णं राजतं वापि ताम्रं वा मृन्मयं तु वा ।
पालाशमथवा पत्रं पद्मपत्रमथापि वा ॥ २ ॥

समं फलं तु मृत्पात्रे ताम्रे दशगुणं भवेत् ।
ततः शतगुणं प्रोक्तं राजते फलमुत्तमम् ॥ ३ ॥

सौवर्णे च ततः पात्रे सहस्रगुणमुच्यते ।
पद्ममम्बुजपत्रे तु पालाशे न तु [1]उच्यते ॥ ४ ॥

वृत्तं वा चतुरश्रं वा पात्रं कुर्याद्विचक्षणः ।
शरावं दृतिसंकाशं [2]छेदभेदविवर्जितम् ॥ ५ ॥

[3]छिन्नपात्रे प्रगृह्णन्ति दानवाः फलमुत्तमम् ।
भिन्नपात्रे पिशाचास्तु पर्णपृष्ठेषु राक्षसाः ॥ ६ ॥

अथ मन्त्रान् प्रवक्ष्यामि त्रिविधान् सर्वकर्मसु ।
वैदिकास्तान्त्रिकाश्चैव तथा वैदिकतान्त्रिकाः ॥ ७ ॥

[1] मुच्यते B  [2] भेदभिन्न B  [3] भिन्न B

एतैर्मन्त्रैस्तु कर्तव्याः क्रियाः प्रक्षालनादयः ।
वैदिका ब्राह्मणानां तु मन्त्रा उक्ता विशेषतः ॥ ८ ॥

राज्ञामेव तु संप्रोक्ता मन्त्रा वैदिकतान्त्रिकाः ।
तान्त्रिका वैश्यशूद्राणां सर्वेषां तान्त्रिकं तु वा ॥ ९ ॥

प्रायशो दीक्षितानां तु मन्त्राः शस्तास्तु तान्त्रिकाः ।
एतैर्मन्त्रैस्तु कर्तव्यास्तत्र प्रक्षालनादयः ॥ १० ॥

स्नात्वा कृत्वाक्षरन्यासं ब्रह्ममुद्रां प्रयुज्य च ।
पात्रं तु परिगृह्णीयात् प्रणवेन समाहितः ॥ ११ ॥

प्रक्षालयेत्तु गायत्र्या पात्रं पूतेन वारिणा ।
पञ्चगव्यं समानीय विष्णुमुद्रां प्रकल्पयेत् ॥ १२ ॥

यथायोगं तथैकं च कापिलं च तृतीयकम् ।
सुवर्णकापिलं प्रोक्तं पञ्चगव्यपरिग्रहे ॥ १३ ॥

पञ्चगव्यं यथालाभं यत्र कुत्र [1]कृतं तु यत् ।
यथायोगं [2]समुद्दिष्टं [3]सममेव फलं च यत् ॥ १४ ॥

साधारणाया गोर्यत्र सर्वमेव प्रगृह्यते ।
तदेकमिति संप्रोक्तं फलं दशगुणं भवेत् ॥ १५ ॥

कपिलायास्तु यद्द्रव्यं तत् कापिलमुदाहृतम् ।
सहस्रं तु फलं चास्य सर्वपापप्रणाशनम् ॥ १६ ॥

[1] व्रतं B [2] तथोद्दिष्टं B [3] सर्वमेव B

सुवर्णकपिलायां तु फलमानन्त्यमुच्यते ।
निष्पीड्य सम्यग् गृह्णीयाद् गोमयस्य रसं बुधः ॥ १७ ॥

शकृद्रसात्तु द्विगुणं गोमूत्रं परिचक्षते ।
गोमूत्राद् द्विगुणं प्रोक्तं प्रमाणे दधि वै तथा[1] ॥ १८ ॥

दध्नश्चतुर्गुणं प्रोक्तं प्रमाणेन घृतं तथा ।
घृतादष्टगुणं प्रोक्तं प्रमाणेन पयस्तथा ॥ १९ ॥

गायत्र्या चैव [2]गोमूत्रं [3]गन्धद्वारेति गोमयम् ।
आप्यायस्वेति यजुषा गृह्णीयात् क्षीरमुत्तमम् ॥ २० ॥

दधि पश्चात् प्रगृह्णीयाद् दधिक्राव्णमुच्चरन् ।
घृतं शुक्रमसीत्येवं यजुषाथ समाहरेत् ॥ २१ ॥

वैदिकैर्ग्रहणं ह्येतद् वक्ष्ये वैदिकतान्त्रिकम् ।
सर्वं तु विष्णुगायत्र्या गृह्णीयाच्च पृथक् पृथक् ॥ २२ ॥

अष्टाक्षरेण वा सर्वं कुर्यात् तन्त्रविचक्षणः ।
उभाभ्यां मिश्रिताभ्यां वा विद्याद्वैदिकतान्त्रिकम् ॥ २३ ॥

ग्रहणं तान्त्रिकैर्मन्त्रैः [4]कुर्यादिति यथाक्रमम्[5] ।
गृह्णीयाद् गोमयं पूर्वं बीजेन परमेष्ठिना ॥ २४ ॥

पुंसा चैव तु गोमूत्रं ततो विश्वात्मना दधि ।
घृतं निवृत्तिबीजेन सर्वेण क्षीरमुत्तमम् ॥ २५ ॥

1 मात्रतः B
2 गृह्णीयात् B
3 गन्धद्वारामिति तृचा B.
4 कुर्यामिति B
5 यथातथम् B

उक्तास्तु तान्त्रिका मन्त्राः क्रमयोगं ब्रवीमि वः ।
आलोडयेच्च तत् सर्वं प्रणवेन समाहितः ॥ २६ ॥

[1]कुशवृन्तेन निर्मन्थ्य प्रणवेन तथैव च ।
यैस्तु मन्त्रैर्गृहीतं तु तैरेवाराधनक्रमः ॥ २७ ॥

अष्टाक्षरेण वा सर्वं कुर्यान्मन्त्रविचक्षणः ।
होमं चाराधनं चापि प्राशनं चापि सर्वशः ॥ २८ ॥

अष्टाक्षरेण कर्तव्यं यज्ञस्य फलमिच्छता ।
पञ्चगव्यक्रमश्चैवं ब्रह्मकूर्चं वदामि वः ॥ २९ ॥

एवं कृते पञ्चगव्ये यवचूर्णं कुशोदकम् ।
उभयं योजयेद्यत्र ब्रह्मकूर्चं तु तद्भवेत् ॥ ३० ॥

यवचूर्णद्वयं चात्र कथयन्ति पुराविदः ।
वेणूनां च यवानां च द्विविधं परिचक्षते ॥ ३१ ॥

तयोश्चूर्णं तु गृह्णीयान्मन्त्रेणानेन मन्त्रवित् ।
आपो हि ष्ठेति मन्त्रेण विष्णुगायत्रियापि वा ॥ ३२ ॥

अष्टाक्षरेण वा पश्चाद् द्वादशाक्षरविद्यया ।
[2]शकृद्रसप्रमाणेन चूर्णं तत्र नियोजयेत् ॥ ३३ ॥

कुशोदकद्वयं [3]चोक्तमशुष्कं शुष्कमेव च ।
अशुष्कं तु सदा शस्तं शुष्कं तु तदलाभतः ॥ ३४ ॥

[1] कुशवृन्तं तु B [2] सकृद्रस B [3] प्रोक्तम् B

शुष्कं चापि निपीड्याप्सु गृह्णीयाद्रसमुत्तमम् ।
शुष्कं चाप्युदके दद्याद् गृह्णीयादुदकं तु तत् ॥ ३५ ॥

देवो व इति मन्त्रेण मूलमन्त्रेण वा पुनः ।
गृह्णीयात्तु परं सम्यग् गोमूत्रेण समाप्लुतम् ॥ ३६ ॥

नियोज्य विष्णुगायत्र्या विष्णुमुद्रां तु दर्शयेत् ।
आराधयेत् सदाविष्णुं शास्त्रोक्तक्रमयोगतः ॥ ३७ ॥

[1]चतुर्धा ब्रह्मकूर्चं तु कृत्वा च प्रणवेन तु ।
पूर्वभागेन देवेशं स्नापयेत् प्रथमं पुनः ॥ ३८ ॥

तत् पञ्चोपनिषद्भिस्तु मूलमन्त्रेण चासकृत् ।
तथैव विष्णुगायत्र्या चरुमन्त्रैस्तथैव च ॥ ३९ ॥

ततः षडक्षरेणापि स्नापयित्वा विचक्षणः ।
होमं द्वितीयभागेन मन्त्रैरेभिस्तु कारयेत् ॥ ४० ॥

बलिं तृतीयभागेन बलिमन्त्रेण योजयेत् ।
चतुर्थं प्राशयेत् पश्चान्मूलमन्त्रेण साधकः ४१ ॥

आचम्याथ पुनर्न्यासं कृत्वाष्टाक्षरविद्यया ।
दर्शयेद् ब्रह्ममुद्रां च विष्णुमुद्रां च साधकः ॥ ४२ ॥

मूलमन्त्रं सहस्रं तु जपेद्विष्णुपरायणः ।
विष्णुमुद्रां ततः पश्चाद्दर्शयेत्तु विचक्षणः ॥ ४३ ॥

[1] चतुर्थं B

अनेन विधिना पीत्वा ब्रह्मकूर्चं समाहितः ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ४४ ॥

कृत्वाधिवासं विधिना पौर्णमास्यां तु साधकः ।
मासि मासि पिबेदत्र सर्वपापैः प्रमुच्यते ॥ ४५ ॥

गोघ्नः पितृघ्नो मातृघ्नो भ्रूणहा गुरुतल्पगः ।
सुरापः स्वर्णहर्ता च कृतघ्नः पतितस्तथा ॥ ४६ ॥

निर्घृणः सर्वभूतेषु देवद्रव्योपजीवकः ।
निर्माल्यभुक्तनियमो निर्जपो नित्यलोभकृत् ॥ ४७ ॥

परान्नसेवी पापीयान् सर्वातिक्रान्तसंयुतः ।
सर्वपापयुतो वापि ब्रह्मकूर्चेन शुध्यति ॥ ४८ ॥

फलं दशगुणं चास्य पञ्चगव्येन संयुतम् ।
तस्मात् सर्वप्रयत्नेन पञ्चगव्यं पिबेन्नरः ॥ ४९ ॥

मन्त्रहीनं क्रियाहीनं विपर्यस्तक्रमं तथा ।
तथा प्रमाणहीनं चाप्यतिरिक्तं तथैव च ॥ ५० ॥

अनुपोष्य तथा पीतं निष्फलं तु न संशयः ।
एतन्मन्त्रविदां प्रोक्तमितरेषां कदाचन ॥ ५१ ॥

तस्मात्तु मन्त्रतत्त्वज्ञो दीक्षितो विष्णुमण्डले ।
पिबेत्तु पञ्चगव्यं वा ब्रह्मकूर्चमथापि वा ॥ ५२ ॥

**इति श्रीपाञ्चरात्रे महासंहितायां सनत्कुमारप्रोक्तायाम् ऋषिरात्रे ब्रह्मकूर्चविधिर्नाम नवमोऽध्यायः**

# ऋषिरात्रे दशमोऽध्यायः

सनत्कुमारः—

वक्ष्यामि चायुधाध्यायं शस्त्रलक्षणसंहितम् ।
आयुधानां समुत्पत्तिरादौ चात्र मयोच्यते ॥ १ ॥

ब्रह्मरुद्रेन्द्रपूर्वास्तु देवाः सर्वे महौजसः ।
दैत्यदानवसंघैस्तु पीडिता रक्षसां गणैः ॥ २ ॥

तेषां चैव वधोपायं चिन्तयित्वा जगत्पतिम् ।
महाविष्णुं महात्मानं विष्णुलोकस्थमीश्वरम् ॥ ३ ॥

सिंहासने [1]समासीनं सर्वपारिषदैर्वृतम् ।
विन्यस्तवामपादं तु श्रियस्त्वङ्के सनातनम् ॥ ४ ॥

ततः सिद्धिसरस्वत्योश्चामरव्यग्रहस्तयोः ।
पृष्ठतः स्थितयोस्तत्र विनयानतचक्षुषोः ॥ ५ ॥

स्थिते पुरस्तान्नम्राङ्गे किंचिद्दूरे कृताञ्जलौ ।
भूमौ विन्यस्तनयने विनीते च गरुत्मति ॥ ६ ॥

आलम्बद्दकरायां तु धरायां वामपार्श्वतः ।
स्थितायां ब्रह्मगोत्रायां दिव्ये संहृत्य चक्षुषी ॥ ७ ॥

[1] सहासीनं B

[1]बद्धाञ्जलिपुटे नम्रे किंचिदीशानगोचरे ।
पीतवस्त्रे हरिश्यामे विष्वक्सेने व्यवस्थिते ॥ ८ ॥

नारदे दक्षिणे पार्श्वे दिव्यगेयसमन्विते ।
सातोद्ये च सुखासीने तुम्बुरुप्रमुखैः सह ॥ ९ ॥

श्रियश्च पृष्ठतः किंचिन्नम्रगात्रे कृताञ्जलौ ।
मार्कण्डेये समासीने पुष्पाञ्जलिसमन्विते ॥ १० ॥

द्वारपालकृतानुज्ञाः शरणं जग्मुरञ्जसा ।
दृष्ट्वा तं परमात्मानं सर्वव्यापिनमच्युतम् ॥ ११ ॥

नारायणं पुराणेशं सर्वे प्राञ्जलयः स्थिताः ।
भक्त्या परमया युक्ताः स्तोत्रमेतदुदाहरन् ॥ १२ ॥

त्वं विधाता च धाता च संहर्ता च जगत्पतिः ।
[2]त्वमादिरवसानं च त्वं मध्यं च सनातनः ॥ १३ ॥

त्वं वाक्यं त्वं वाचकस्त्वमव्ययं च प्रजापतिः ।
त्वं भूतस्त्वं [3]भविष्यश्च लोकस्त्वं च समागमः ॥ १४ ॥

त्वं पिता त्वं च देवेश त्वं माता त्वं परं पदम् ।
त्वमाकाशस्त्वमग्निस्त्वं मरुतश्चाप एव च ॥ १५ ॥

त्वमेव पृथिवी देव त्वं तत्त्वानि सनातन ।
[4]त्वं वेदस्त्वं वषट्कारस्त्वमोंकारस्त्वमीश्वरः ॥ १६ ॥

[1] बद्धाञ्जलिपुटानम्रे B
[2] Corruption in B
[3] भविष्यं च B
[4] त्वमेव देवस्त्वं B

[1]देवदेव नमस्तेऽस्तु नमस्तेऽस्तु जगत्पते ।
लोकपाल नमस्तेऽस्तु नमस्तेऽस्तु सदा हरे ।
चतुरात्मंश्चतुर्व्यूह चतुर्भुज नमो नमः ॥ १७ ॥

नमो नमस्तेऽस्तु सनातनाय
नमो नमस्तेऽस्तु पुरातनाय ।
नमो नमस्तेऽस्तु पराक्षयाय
नमो नमस्तेऽस्तु जनार्दनाय ॥ १८ ॥

इत्युक्त्वा त्रिदशाः सर्वे शिरोभिरवनीं गताः ।
नमस्कृत्य हृषीकेशं कार्यमस्मिन् न्यवेदयन् ॥ १९ ॥

निरायुधा वयं देव दानवेन्द्रैर्निपीडिताः ।
आयुधानि प्रसीदाद्य हन्यन्ते यैस्तु दानवाः ॥ २० ॥

इत्युक्तो भगवान् पश्चाद्देवदेवो हरिः प्रभुः ।
आयुधानि ततः पश्चात् स्वशरीरात् ससर्ज सः ॥ २१ ॥

साग्निज्वालं सहस्रारं चक्रं वक्त्रात् ससर्ज ह ।
वामबाहोस्ततः शार्ङ्गं गदां दक्षिणबाहुतः ॥ २२ ॥

खड्गं दक्षिणपादात्तु मुसलं वामपादतः ।
चक्रशार्ङ्गगदाखड्गमुसलेषु स्थितेष्वसौ ॥ २३ ॥

विष्णूनामायुधान्येतान्यदिशत् पुरुषोत्तमः ।
पुनः ससर्ज देवानामायुधान्यपराणि तु ॥ २४ ॥

[1] From here up to the end of the work almost all lines lack many letters in B

त्रिशूलं तु ललाटात्तु व्यसृजत् पुरुषोत्तमः ।
परशुं वामहस्तात्तु शक्तिं दक्षिणहस्ततः ॥ २५ ॥

पाशं च कवचं चैव पादाभ्यामसृजत् प्रभुः ।
शिवायादात् त्रिशूलं तु ब्रह्मणे परशुं तथा ॥ २६ ॥

शक्राय तु ततः शक्तिं पाशं वै वरुणाय च ।
कवचं चैव सूर्याय समन्त्रमदिशत् पुनः ॥ २७ ॥

ततस्त्वस्त्रं च केशान्तादसृजत् परमेश्वरः ।
तोमरं दक्षिणाद् बाहोर्वनमालां तु वामतः[1] ॥ २८ ॥

अङ्कुशं चैकधारं च पार्श्वाभ्यामसृजत् प्रभुः ।
ददौ चक्रं च सोमाय तोमरं वै यमाय च ॥ २९ ॥

कालाय च ददौ प्रासं निर्ऋत्यै चाङ्कुशं तथा ।
एकधारं ततः खड्गं वायवे प्रददौ प्रभुः ॥ ३० ॥

सर्वेभ्यो रोमकूपेभ्यः शरान् सर्वान् समासृजत् ।
सर्वेषामदिशत् तांस्तु शरान् वै क्षुरिका अपि ॥ ३१ ॥

तथादिशच्च सर्वेषां वर्तुलं दण्डमेव च ।
वेदं च धनुरुद्दिश्य धनुर्वेदं चकार सः ॥ ३२ ॥

मन्त्रं च दुष्टसंहारे तस्मिन् वेदे ह्यजीजनत् ।
अध्यैष्टास्माद्धनुर्वेदं ब्रह्मा पूर्वं चतुर्मुखः ॥ ३३ ॥

ब्रह्मणश्च शिवः पश्चाच्छिवात् पश्चाद् बृहस्पतिः ।
बृहस्पतेरथेन्द्रस्तु तस्माद्वैवस्वतो यमः ॥ ३४ ॥

1 तथैव च B

यमाच्च वरुणो राजा वरुणाद्धनदस्ततः ।
धनंदादृषयः सर्वे ऋषिभ्यः सर्वदेवताः ॥ ३५ ॥

देवेभ्यश्चाथ गन्धर्वाः किंनरोरगराक्षसाः ।
एवं परंपरायातं[1] धनुर्वेदं विदुर्बुधाः ॥ ३६ ॥

आयुधान्यपि सर्वाणि विविधानि न संशयः ।
प्रयोगभेदयुक्त्या तु तदस्त्रं शस्त्रमेव च ॥ ३७ ॥

निध्याय[2] मोक्षणाच्चैव हन्यन्ते सर्वशत्रवः ।
[3]धरायां च निपात्यन्ते तदस्त्रमिति कीर्तिनम् ॥ ३८ ॥

येन हस्तगतेनैव हन्यन्ते सर्वशत्रवः ।
तच्छस्त्रमिति संप्रोक्तं [4]क्रमादसिगदादि च ॥ ३९ ॥

सर्वेषामपि चैतेषां धनुरेवोत्तमायुधम् ।
तदाख्यातः समुद्भूतो धनुर्वेदस्तथोच्यते ॥ ४० ॥

चातुर्वर्ण्यं समसर्जादौ क्रमाद्दक्षप्रजापतिः ।
विप्रक्षत्रियवैश्याश्च शूद्रश्चेति प्रभेदतः ॥ ४१ ॥

ब्राह्मणात् क्षत्रकन्यायां जातो मूर्धाभिषिक्तकः ।
स्थापितोऽस्मिन् धनुर्वेदस्त्रिभिरेव द्विजातिभिः ॥ ४२ ॥

आचार्यात्तु धनुर्वेदे धनुःशिक्षा विधीयते ।
पञ्च वै पुरुषाः प्रोक्ता धनुर्वेदे यथाक्रमम् ॥ ४३ ॥

[1] ख्यातं B
[2] निधाय B
[3] आरे चैव B
[4] क्रमादसनमादि च B

स्थितयः पञ्च वै प्रोक्ताः पञ्च चैव धनूंषि च ।
बाणाः पञ्च च संप्रोक्ताः पञ्च वै चापमुष्टयः ॥ ४४ ॥

गुणमुष्टीश्च पञ्चाहुः शास्त्रेऽस्मिञ्च्छस्त्रकोविदाः ।
हंसकः शशकश्चैव चक्री च नदुकस्तथा ॥ ४५ ॥

मालव्य इति संप्रोक्ताः पुरुषाः पञ्च वै क्रमात् ।
आलीढं च तथा स्थानं प्रत्यालीढं तथैव च ॥ ४६ ॥

समपादं च वैशाखं मण्डलं चेति नामतः ।
स्थानानि पञ्च संप्रोक्तान्यस्मिंस्तन्त्रे विशेषतः[1] ॥ ४७ ॥

[2]उच्छूलं ब्रह्मदत्तं च बिम्बसारं च पैशकम् ।
जालकमिति पञ्चाहुर्हस्तं विक्रमयोगतः ॥ ४८ ॥

[3]निषदं दोलकं चैव तालं चारु तथैव च ।
पद्मं चैव समाख्याताः [4]क्रमेणैतास्तु मुष्टयः ॥ ४९ ॥

[5]अन्वावर्तं सनीप्रीतिं (?) ततो वाकनकं ततः ।
[6]व्यूहनं चैकपर्वं च पञ्चैते गुणमुष्टयः ॥ ५० ॥

[1] B terminates chapter 10 with this line and has the following colophon: इति श्रीपाञ्चरात्रे महासंहितायामृषिरात्रे आयुधलक्षणं नाम दशमोऽध्यायः

[2] B begins the 11th chapter with this line.

[3] निषेदं बिलकं चैव तालं चारुं तथैव च A B

[4] क्रमेणेष्टास्तु A B [5] अन्वावर्त्तं E [6] प्रहनं E

व्यायं च विविधं प्राहुः . . . . . तथा ।
कैशिकं सात्त्विकं चैव भरतं स्कन्ध एव च ॥ ५१ ॥

था [3]च वत्सकर्णं च पञ्चैते व्यायसंज्ञिताः ।
पस्थितं तथापूर्वमायतोपस्थितं तथा ॥ ५२ ॥

ते पतनदोषाश्च [4]चत्वारः परिकीर्तिताः ।
. . . . . . . . ॥ ५३ ॥

राती . . . पञ्चैते गतिदोषाः प्रकीर्तिताः ।
रुषांश्च तथा स्थानं मुष्टिं चापि पृथक् पृथक् ॥ ५४ ॥

. . . . . मिति क्रमात् ।
व दोषानपि ज्ञात्वा प्रयोक्तव्या धनुष्क्रिया ॥ ५५ ॥

र्वेदा भगवान् विष्णुर्धनुर्वेदस्य दैवतम ।
ायुधानां च सर्वेषां स एव भगवान् हरिः ॥ ५६ ॥

स्मादाराध्य देवेशं विष्णुं विष्णुपरायणः ।
मेण मण्डलं दृष्ट्वा दीक्षाव्रतपरायणः ॥ ५७ ॥

ा विद्याग्रहणान्नित्यं ब्रह्मचारी जितेन्द्रियः ।
र्चयेद्वै सदाविष्णुं ध्यायन् विष्णुमतन्द्रितः ॥ ५८ ॥

क्त्या परमया युक्तस्त्वष्टाक्षरपरायणः ।
त्वाधिवासं क्रमशो लिखित्वा चक्रमण्डलम् ॥ ५९ ॥

ायं A B [2] कैकसं B [3] पाषाणगण्डं A
त्वारि B [5] Gap in all MSS.

अस्त्रशस्त्राणि तत्रैव अर्चयित्वा तु मण्डले ।
आचार्यमभिवाद्यादौ प्रणम्यास्त्राणि सर्वशः ॥ ६० ॥

लोकपालान् नमस्कृत्य दत्त्वा पुष्पाक्षतानि तु ।
अष्टाक्षरशतं जप्त्वा ध्यात्वा नारायणं प्रभुम् ॥ ६१ ॥

आरभेतास्त्रशिक्षां तु धनुर्गृह्य यथाविधि ।
दत्त्वा भगवते पश्चाद् दक्षिणां च यथाविधि ॥ ६२ ॥

एवमभ्यस्यतो नित्यं धनुर्वेदं यथाक्रमम् ।
शस्त्राण्यस्य प्रसीदन्ति विजयश्च रणे ध्रुवः ॥ ६३ ॥

तस्मात् सर्वप्रयत्नेन व्रतेनानेन शिक्षयेत् ।
ऋषिरात्रमिति प्रोक्तं बार्हस्पत्यमनन्तरम् ॥ ६४ ॥

[1]इति श्रीपाञ्चरात्रे वैष्णवसिद्धान्ते महासंहितायां [2]दशसहस्रिकायां सनत्कुमारप्रोक्तायाम् ऋषिरात्रे [3]शस्त्रलक्षणं नाम [4]दशमोऽध्यायः

ऋषिरात्रं समाप्तम्[5]

[1] B adds शस्त्रलक्षणं समाप्तम् before colophon.
[2] एकादशसहस्रिकायां B
[3] आयुधलक्षणं B
[4] एकादशोऽध्यायः B
[5] B adds रात्रं नन्दिचूक ग्रन्थसंख्ये ३०००.
A adds ग्रन्थसंख्या ८५० रङ्गराजंभट्टर् पुस्तकम् । नारायणन् लिखितम् ।
All the MSS. lack the Bṛhaspatirātra.

# श्लोकानामर्धानुक्रमणी


| | PAGE | | PAGE |
|---|---|---|---|
| अंअःकारलयो यस्तु | २३५ | अक्षतांश्चापि पुष्पाणि | २१७ |
| अंकारश्चाष्टमे चैव | २३१ | अक्षताम्भस्तु वारुण्यां | २०४ |
| अःकारश्चाष्टमे चैव | २३२ | अक्षता सर्वदा शस्ता | २९० |
| अःकारात्तु ककारोऽभूत् | २२८ | अक्षतैर्विकिरेच्चापि | ३० |
| अकणानतुपानेव | ३५९ | अक्षतैर्विविधैर्गन्धैः | २९ |
| अकणाश्च रजोहीनाः | १७० | अक्षगत्मा स्वरात्मा च | २६६ |
| अकामकृतमज्ञानात् | ३८८ | अक्षारलवणाशी च | ११ |
| अकारः केवलस्त्वेकः | १३८ | अक्षारलवणाशी यः | १३ |
| अकारः प्रथमं जज्ञे | २२८ | अक्षिणी हृदयं नाभिं | ६ |
| अकारस्तु स्वयं देवः | १३८ | अक्षुद्रः पक्कसत्त्वश्च | १६६ |
| अकारस्य लयो यस्तु | २३५ | अगमद्वसुधा देवं | २४४ |
| अकारस्य सदाविष्णुः | २२९ | अगस्त्यतीर्थं श्रीसानुः | ३४२ |
| अकारे यमकान् न्यस्य | २३४ | अग्न आ याहि वीतये | २०१ |
| अकाले खे प्रदृश्यन्तं | ३३९ | अग्नयो लोकपालास्ते | ३८ |
| अकूपार इति ख्यातः | २४० | अग्नावाचमनीयं तु | २०४ |
| अकृत्वा ग्रन्थिसंदर्भं | ४०३ | अग्नावोंकारमुद्रायाः | १०३ |
| अकृत्वा भगवत्पूजां | ४०३ | अग्निं प्रदक्षिणीकृत्य | ८३ |
| अकृत्वा भैक्षचरणं | ४०३ | अग्निं वा प्रविशेद्विष्णुं | ३८९ |
| अकृत्वा व्यवधानं तु | ३९४ | अग्निं समेधयेत् पश्चात् | १६८ |
| अकृत्वा समिदाधानं | ४०३ | अग्निकार्यं ततः कृत्वा | १११ |
| अकृष्णधाराः कलशाः | २८ | अग्निकार्ये नियोज्यानि | १७३ |
| अक्रियाणां च सर्वेषां | २९५ | अग्निकार्ये फलादीनि | १७१ |
| अक्लिन्नानप्यनिम्नांश्च | ३५९ | अग्निपक्वमथामं वा | ३४६ |

| | PAGE | | PAGE |
|---|---|---|---|
| अग्निप्रदक्षिणं कुर्यात् | २१० | अङ्गुलेन भवेन्मूर्धा | ५९ |
| अग्निमुद्रेति विज्ञेया | ३२४ | अङ्गुल्याद्यन्तरेखाः स्युः | ७६ |
| अग्नियाग इति प्रोक्तः | १०० | अङ्गुष्ठं च तथा कृत्वा | ३२३ |
| अग्निवर्णां सुरां पीत्वा | ३९९ | अङ्गुष्ठं तर्जनी चापि | १६३ |
| अग्निश्च मुखतो जातः | २६१ | अङ्गुष्ठतर्जनीभ्यां तु | २३, ७८, १६३, ३१७, ३२५ |
| अग्निष्वात्ताश्च तृप्यन्तां | २१ | | |
| अग्निस्तम्भनमन्त्रोऽयम् | १६४ | अङ्गुष्ठबद्धाङ्गुलिका | ३१७ |
| अग्नीषोमीयरूपेण | २६२ | अङ्गुष्ठमूलं ब्राह्मं तु | २३ |
| अग्नौ च कल्पयेद्देवं | ८२ | अङ्गुष्ठाग्रं तथा स्पृष्ट्वा | ३२१ |
| अग्न्यादयस्तु संजाताः | २६१ | अङ्गुष्ठाग्रेण वामेन | ३२० |
| अग्रान्नं तु प्रधानं स्यात् | ८८ | अङ्गुष्ठानामिकाभ्यां तु | २३, ७७, २११, ३१७ |
| अग्राम्यैर्वर्तयन् यात्रां | १४ | | |
| अग्रासने द्विजं स्थाप्य | ८८ | अङ्गुष्ठाभ्यां कनिष्ठे तु | ३२२ |
| अङ्कुराणामथो वक्ष्ये | १७८ | अङ्गुष्ठाभ्यां पिधायाथ | ३२४ |
| अङ्कुराणि च सर्वाणि | १७९ | अङ्गुष्ठाभ्यां स्पृशेदग्रम् | ३२१ |
| अङ्कुरास्त्वप्ररूढाश्च | २०७ | अङ्गुष्ठाभ्यामुभाभ्यां तु | ३२६ |
| अङ्कुशं चैकधारं च | ४१४ | अङ्गुष्ठे करमध्ये च | ७७ |
| अङ्कुशो वामभागश्च | १६६ | अङ्गुष्ठे तु प्रकोष्ठेन | ३१९ |
| अङ्के वामं तु विस्तीर्य | ३२५ | अङ्गुष्ठेन तु संवेष्ट्य | ३२६ |
| अङ्गत्रयसमायुक्तं | १९३ | अङ्गुष्ठेनाप्यथाङ्गुष्ठम् | ३२२ |
| अङ्गहीना यथा लोकाः | १३७ | अचरा इति विज्ञेयाः | २ |
| अङ्गारकस्य चाग्नेय्यां | ११३ | अचराणां तथा नाशे | २ |
| अङ्गारचूर्णैः शेषाणां | १५७ | अचिरान्नाशमभ्येति | ६४ |
| अङ्गुलं जानुपादान्तं | ५९ | अचिरेण समभ्येति | ३१५ |
| अङ्गुलं वक्त्रवलयं | २८ | अच्युतादनिरुद्धोऽभूत् | २६१ |
| अङ्गुलीभिः समस्ताभिः | ३१९ | अजः शतधृतिर्धुर्यः | २६९ |
| अङ्गुलीभिश्च दीर्घाभिः | ३२५ | अञ्जनारुणसंकाशे | ३१० |
| अङ्गुलीभ्यां तु विमृजेत् | १८२ | अञ्जलिं च त्रयोदश्यां | १०९ |
| अङ्गुलीष्वथ सर्वासु | ७७ | अञ्जल्या प्रक्षिपेद् व्रीहीन् | ३५८ |

| | PAGE |
|---|---|
| अणुर्बृहत् कृशः स्थूलः | २६५ |
| अणोरणीयानत्यन्तं | ३१२ |
| अण्डं तदभवद्वीर्यं | २६० |
| अतः परं क्रमाजप्त्वा | १४८ |
| अतः परं तु देवीनां | २२० |
| अतः परं तु न ग्राह्यं | १७५ |
| अतः परं न चादेवं | २३५ |
| अतः परं न यागस्तु | २५१ |
| अतः परं न वर्णोऽस्ति | १३९ |
| अतः परं ब्रवीम्यस्याः | ११९ |
| अतः परतरं नैव | ३१५ |
| अतः पूर्वं प्रवक्ष्यामि | २५३ |
| अत ऊर्ध्वं तु सायुज्यं | २१९ |
| अत ऊर्ध्वं न कुर्वीत | ४८ |
| अत ऊर्ध्वं न रज्जुं च | ६३ |
| अत ऊर्ध्वं न वृद्धिः स्यात् | १ |
| अतन्त्रज्ञा अदेवार्चाः | २४ |
| अतिक्रम्य गुरुं पश्चात् | ३९७ |
| अतितप्तं न कर्तव्यं | १८२ |
| अतिरात्रफलं प्राप्य | २२३ |
| अतिरिक्तभयोत्संधे | ३६६ |
| अतीतानागतं सर्वं | १४२, १४९ |
| अतीतानागतोक्तिश्च | ३३८-९ |
| अतीन्द्रियविहीनश्च | ३०२ |
| अतीन्द्रियेषु च ज्ञानं | ३३९ |
| अतुषा अत्वचश्चापि | १६९ |
| अतो नपुंसकाख्यां च | ४७ |
| अतो न्यूनं न कर्तव्यं | १९७ |
| अतोयनिमग्नानक्लिन्नान् | ३५८ |

| | PAGE |
|---|---|
| अत्यन्तमभवत् प्रीतः | २४१ |
| अत्युष्णं राजसं ज्ञेयं | ३६६ |
| अत्र च द्विविधं प्रोक्तं | ५३ |
| अत्र चेदं प्रवक्ष्यामि | ३४४ |
| अत्र तु प्रतिमायामः | ४७ |
| अत्र तूद्देशमात्रं च | ४० |
| अत्र दोषफलं वक्ष्ये | ५० |
| अत्र पुष्पद्वयं वर्ज्यं | ३६० |
| अत्र भागवतालाभे | २४९ |
| अत्र वर्णविशेषं तु | १२६ |
| अत्र वै कर्णिकायां तु | ३५६ |
| अत्र शुद्धोदकैर्हीनं | १९५ |
| अत्र शून्यपुटान्यादौ | २३४ |
| अत्र संक्षेपतः प्रोक्तः | २७४ |
| अत्र सप्तदश प्रोक्ताः | १८९ |
| अत्रानुलोमजाः श्रेष्ठाः | ११ |
| अत्रापि चक्षुरादिं च | ७५ |
| अत्रापि चैव पञ्चाङ्गं | १४१ |
| अत्रापि त्रिविधो न्यासः | ७६ |
| अत्रापि वर्जयेत् कुण्ठं | ५३ |
| अत्रावशिष्टं सर्वं तु | ८१ |
| अत्राष्टमङ्गलान्येवं | ३४ |
| अत्रिर्मुनिर्जटाधारी | १२४ |
| अत्रिश्चापि शची चापि | १२४ |
| अथ द्वादशभूम्यन्तं | ६९ |
| अथ पुण्ये तु नक्षत्रे | ४५ |
| अथ मन्त्रान् प्रवक्ष्यामि | ४०५ |
| अथ यागं प्रवक्ष्यामि | २४६ |
| अथवा गोषु वै गच्छेत् | ३९७ |

| | PAGE | | PAGE |
|---|---|---|---|
| अथवा द्विगुणं दत्त्वा | ३९९ | अधमाश्चापि चत्वार: | १०१ |
| अथवा पयसा वापि | ४०० | अधमोत्तममेतत्तु | १९२ |
| अथवा विजयान् सर्वान् | ४०० | अधर्मस्य प्रवृत्तौ तु | ३०४ |
| अथाचमनमुद्रां च | ८१ | अधस्तात् कापिलं लोकं | २८३ |
| अथात: संप्रवक्ष्यामि ११, २७, ४४, ६६, ७२, १३६, १४०, १६५, १७५, १८५, ३४२ | | अधिकं चैव हीनं च | ५० |
| | | अधिके तु भवेद्व्याधि: | ५० |
| | | अधिवासं न कुर्यात्तु | ३५२ |
| अथान्नप्राशनं कुर्यात् | ७ | अधिवासक्रियां कृत्वा | ३०६ |
| अथापि विष्णुगायत्री | २०५ | अधोमुखांस्तु कलशान् | १८८ |
| अथाभिगमनं पूर्वं | ३०७ | अधोमुखास्तथा सौम्या: | ३०९ |
| अथाष्टपरिवाराणां | १२३ | अधोमुखौ तथाङ्गुष्ठौ | ३२२ |
| अथासुराणां मन्त्राश्च | १४० | अध्यर्धगोलकं कण्ठं | ५८ |
| अथोत्सारणमन्त्रेण | १५२ | अध्यर्धमुत्तमं ज्ञेयं | २५५ |
| अथोपस्थानमन्त्रेण | ११४ | अध्यात्मज्ञानमन्यच्च | ८९ |
| अथोपोष्य च पञ्चम्यां | १०९ | अध्येतव्योऽयमध्याय: | २८७ |
| अदत्त्वा तु बलिं कांचित् | २०९ | अध्यैष्टास्माद्धनुर्वेदं | ४१४ |
| अदर्शनेऽपि गृह्णीयात् | ४६ | अध्वरस्तु मया प्रोक्त: | २५० |
| अदित्यां कश्यपाज्जात: | २४१ | अनन्तं गुलिकं चैव | १४५ |
| अदीक्षिताय नो देयं | १७३ | अनन्तं हि फलं दद्यात् | ८६ |
| अदृष्टिर्दृष्टिरिष्टाशी | २७१ | अनन्तकण्ठाभरणं | १४७ |
| अदेवमातृकं चापि | ८६ | अनन्तस्य तत: प्राच्या | ११७ |
| अदेवमातृकं प्रोक्तं | ८६ | अनन्तो गुलिकश्चैव | १४५ |
| अदेवमातृकं श्रेष्ठम् | ८७ | अनन्तो वासुकिश्चैव | १४६ |
| अदेवमातृका या तु | ८७ | अनन्यदेवताभक्ता: | ३४९ |
| अद्भि: संप्रोक्ष्य च शनै: | १८३ | अनया मुद्रया देव | ३७५ |
| अद्वैतं तु परं ब्रह्म | २६२ | अनया शान्तिहोम: स्यात् | १२५, १३४ |
| अद्वैतनिरतो नित्यं | १५ | अनयैव दिशाहोमं | १२२ |
| अध: शिला वा लोहं वा | २२१ | अनाचान्तस्तथाभूत: | ३९५ |
| अधमं तामसे चैव | १७२ | अनामामध्यमाङ्गुष्ठानि | ३२१ |

| | PAGE |
|---|---|
| अनामिकाकनिष्ठे तु | ३१९ |
| अनिरुद्धं महादेवं | २३७ |
| अनिरुद्धः प्रजानाथः | १६६ |
| अनिरुद्धमिति प्राहुः | २५९ |
| अनिरुद्धमुखाज्जाता | ३६३ |
| अनिरुद्धोऽथ भगवान् | २५९ |
| अनिवेद्य गुरोः कृत्वा | ४०३ |
| अनिवेद्य तु तं किंचित् | २५ |
| अनुक्तानां तु मन्त्राणां | ३८३ |
| अनुगच्छन्ति ये त्वेनं | २१० |
| अनुग्रहेण चाचार्यः | ३०५ |
| अनुग्रहो हरेर्नैव | १४४ |
| अनुधारापथं देवं | ३९ |
| अनुनीय ततः शिष्यं | ४०३ |
| अनुपारिषदाश्चापि | ३६९, ३७२ |
| अनुपोष्य तथा पीतं | ४१० |
| अनुप्रवेशमन्त्रेण | १४९ |
| अनुप्रवेशमन्त्रोऽयं | १४९ |
| अनुलोमं तु गृह्णीयात् | ५१, ५५ |
| अनुवर्णास्तथा सप्त | २९३ |
| अनुष्टुप् च भवेच्छन्दः | ३७९ |
| अनुस्वारमकारान्ताः | ९५ |
| अनूनावयवश्चापि | ३०२ |
| अनेकशतसंख्यैस्तु | २७५ |
| अनेन गन्धमन्त्रेण | १४९ |
| अनेन तापसाः सर्वे | ३४८ |
| अनेन नीलनिर्गुण्डिं | १६२ |
| अनेन बलिदानेन | ३७५ |
| अनेन विधिना पीत्वा | ४१० |
| अनेन विधिना यस्तु | १०६ |
| अनेन विधिवन्मन्त्रः | ३८३ |
| अनेनैव तु मन्त्रेण | १५२ |
| अनेनैव भवेन्न्यासः | १२५ |
| अन्तः शुद्धोदकस्थाने | २०२ |
| अन्तरस्थीनि सर्वाणि | १७२ |
| अन्तरा गमनं न स्यात् | ३८ |
| अन्तरान्तररेखास्तु | ३५१ |
| अन्तरावरणे प्राच्याम् | ३१ |
| अन्तरा श्रीगृहं वापि | ११५ |
| अन्तरिक्षचराणां तु | ३६५ |
| अन्तरेखां ततः कुर्यात् | ३५१ |
| अन्तर्द्वितीयावरणात् | २५० |
| अन्तर्द्वीपे तथा नद्यां | ३९५ |
| अन्तर्मण्डल एवैताः | १५५ |
| अन्तर्मण्डलशूलाग्रान् | १५५ |
| अन्तर्मुखास्तु शूलाग्राः | १५५ |
| अन्तर्यच्चतुरश्रं तु | १५५ |
| अन्तर्यानाङ्गुलीभिस्तु | ३२५ |
| अन्तर्व्यतिकरं कृत्वा | ३२२ |
| अन्तर्व्यतिकराभिर्या | ३२१ |
| अन्तस्तत् प्रविशेत् काले | ३३७ |
| अन्तस्तृतीयावरणात् | २४९ |
| अन्ते च प्रणवं तद्वत् | ७६ |
| अन्ते च प्रणवं तस्याः | ७७ |
| अन्ते त्रिमात्रं प्रणवं | ७६ |
| अन्त्यचण्डालजातीनां | १५३ |
| अन्त्यजा अपि भुञ्जानः | ३९१ |
| अन्नदानरतो भक्तः | १३ |

| | PAGE |
|---|---|
| अन्यथा चापरे ब्रूयुः | ९२ |
| अन्यथा द्रव्यविन्यासं | २०४ |
| अन्यथा पतति क्षिप्रं | ४०३ |
| अन्यभक्तद्विजाच्छ्रेष्ठः | ४ |
| अन्या तु लोहजा यात्र | २९ |
| अन्याश्चार्चनिकाः केचित् | १८१ |
| अन्ये तु पात्रपर्यन्ते | ३५६ |
| अन्ये वा यदि तन्त्रज्ञाः | ४ |
| अन्येषामपि चैतेषां | १६७ |
| अन्योन्याभिमुखौ पादौ | ३३१ |
| अन्वावर्त सनीप्रीतिं | ४१६ |
| अपक्वमग्निना दग्धं | १६९ |
| अपक्वानां विधिं चात्र | १६९ |
| अपक्वास्तण्डुलाद्यास्तु | १७० |
| अपनीय जनान् सर्वान् | ४६ |
| अपराजितया सिक्त्वा | १८ |
| अपरे पुरुषाद्यास्तु | ७० |
| अपरे स्नपनं चान्यत् | २०२ |
| अपरे स्नपनं प्राहुः | १९८ |
| अपर्युषितमक्लिन्नं | २१५ |
| अपविद्धेति विज्ञेया | ८८ |
| अपस्मारग्रहस्यान्यः | १६२ |
| अपस्मारस्ततस्तूर्णं | १६२ |
| अपां सदृशवर्णे तु | ५२ |
| अपि दुष्टग्रहाः सर्वे | १६१ |
| अपुत्राणां तु यद्वित्तं | ४ |
| अपूपसक्तु मुद्गैश्च | १७२ |
| अपूपानि च सर्वाणि | ३५२ |
| अपूपेषु च सर्वेषु | १७३, २२५ |
| अपूपैः पूरयेद्यस्तु | २२३ |
| अप्तोर्यामफलं प्राप्य | २२३ |
| अप्रमेयमनिर्देश्यं | २३६ |
| अप्रसूता सदा शस्ता | २९१ |
| अप्रसूतासु कन्यासु | २८९ |
| अब्दं चान्द्रायणं कुर्यात् | ४०१ |
| अब्दं पयोव्रतो भूत्वा | ३९९ |
| अब्दं मूलव्रतं वापि | ४०१ |
| अब्दं शाकव्रतं कुर्यात् | ४०१ |
| अब्दैर्द्वादशभिर्युक्तः | ३८६ |
| अब्दैश्चतुर्भिः संयाति | ३८६ |
| अब्रह्मण्यं ततः कुर्यात् | १६१ |
| अभये अमरे अवितथे | ९२ |
| अभितस्तं समायान्ति | ३८ |
| अभिन्नाचारसमयैः | ३९६ |
| अभिन्नात्रयवश्चैव | २९४ |
| अभिन्नासुषिराः श्लक्ष्णाः | १८६ |
| अभिन्नास्तण्डुला ग्राह्याः | १६९ |
| अभियोगे च शस्तास्तु | २८९ |
| अभिवाद्य यथान्यायं | ३९७ |
| अभिषिक्त इति प्रोक्तः | २५० |
| अभिषिक्ताद्गुरुः श्रेष्ठः | ८५ |
| अभिषेकं तु शिष्याय | २५० |
| अभ्यासात् प्रत्ययाः सर्वे | ३३८ |
| अभ्यासाद्विष्णुसायुज्ये | ३३८ |
| अमङ्गलाङ्कुरो यागः | २०९ |
| अमिश्रं च निवेद्यं स्यात् | १७३ |
| अमोघपाशहस्ताय | ३६३ |
| अयं नमो महेन्द्राय | १२५ |

| | PAGE | | PAGE |
|---|---|---|---|
| अयनं शस्यते तस्यां | ३४३ | अर्चनां द्विगुणां कृत्वा | ३८७ |
| अयने चैव संक्रान्त्यां | ३८८ | अर्चनाद्यास्ततः सर्वे | ३८४ |
| अयने चोत्तरे कुर्यात् | ३१३ | अर्चना द्विविधा प्रोक्ता | ७२ |
| अयने दक्षिणे कुर्यात् | ३१३ | अर्चनापीठपार्श्वस्थाः | २५४ |
| अयने द्वे च संक्रान्ती | ३१३ | अर्चनापीठपार्श्वे तु | २५३ |
| अयने विषुवे चैव | १५ | अर्चने लङ्घिते चैषां | ३८७ |
| अयाजकः क्वचिच्चापि | १४ | अर्चयन् वै सदाविष्णुं | १४ |
| अयुतं मानसं ज्ञेयं | ५ | अर्चयित्वा प्रभुं देवं | १६ |
| अयुतं द्वे सहस्रं च | ३१४ | अर्चयित्वा यथापूर्वं | ३६९ |
| अयोन्यां चापि योन्यां च | २९२ | अर्चयित्वा यथायोग्यं | ३६० |
| अयोन्यां तु प्लुतिः प्रोक्ता | २९३ | अर्चयेच्च यथापूर्वं | ३६७ |
| अरण्यानां च सर्वदा | ३४३ | अर्चयेच्च सुपुष्पैस्तु | ३६० |
| अरण्ये निर्जने वापि | १५७ | अर्चयेद्गन्धपुष्पैस्तु | ७९ |
| अरण्ये पर्वते चैव | ११५ | अर्चयेद्वै सदाविष्णुं | ४१७ |
| अरण्ये पर्वते वापि | ३९९ | अर्चयेन्मूलमन्त्रेण | १११ |
| अराजके तु लोकेऽस्मिन् | ३०४ | अर्चितस्य तु देवस्य | २५३ |
| अरादौ चाप्यरान्ते च | ३५१ | अर्चितो देवदेवेशः | ३०८ |
| अरिहा दैत्यहादित्यः | २६९ | अर्थेष्वप्युपदेशश्च | ८९ |
| अरुणं पीतवस्त्रं च | ११२ | अर्धक्षुरं कृत्तिकाख्यं | १८० |
| अर्कपत्रयुतं चापि | १६९ | अर्धचन्द्रसमं कार्यं | १५६ |
| अर्कवह्निहिरण्याभा | ३१२ | अर्धचित्रं च चित्रं च | ५३ |
| अर्गलं चापि तं कृत्वा | २२१ | अर्धचित्रं न कुर्वीत | ५३ |
| अर्गलं तत्प्रमाणेन | २२१ | अर्धमर्धं यथापूर्वं | २५९ |
| अर्घ्यं तु दक्षिणे न्यस्य | ३१ | अर्धरात्रे तदिच्छायां | ५ |
| अर्घ्यं दद्याच्च मूलेन | ८० | अर्धशुद्धोदकैर्हीनं | १९६ |
| अर्घ्यं द्वितीयया दद्यात् | १९२ | अर्हत्येव सदा दीक्षां | २९० |
| अर्घ्यं पाद्यं तथा स्नानं | ११८ | अलंकारीकृतं यत्तत् | ८८ |
| अर्चनं पुनरस्यैव | १३० | अलंकृत्य यथान्यायं | ९, २१३ |
| अर्चनां च फलं चापि | ८२ | अलम्बुसा कुहूश्चैव | ४०, ३०९ |

